# BHAGAVATA

## MAHĀPURANAM

OF MAHARṢI VĒDAVYĀSA

**SKANDHA - VIII**

EDITED BY
Dr. N.C.V. NARASIMHA CHARYA



Harih Om

# ŚRĪMAD BHĀGAVATA MAHĀPURĀṆAM

*of Maharṣi Vedavyāsa*

## SKANDHA - VIII

**With the Commentaries :**

*Bhavarthadipika of Sri Sridharaswami, Bhagavatachandrachandrika of Sri Vira Raghavacharya, Padaratnavali of Sri Vijayadhvaja Tirtha*

**Edited by**


Panditaraja, Sahitya Visarada, Vacaspati, Siromani, Vidwan,
Recipient of President's Certificate of Honour
**Dr. N.C.V. Narasimhacharya,** M.A., B.O.L.
**SPECIAL OFFICER**
**SRI BHAGAVATA PROJECT**
T.T. Devasthanams, Tirupati



Published by
EXECUTIVE OFFICER
Tirumala Tirupati Devasthanams
Tirupati
2004

**Srimad Bhagavatamahapuranam - Skandha - VIII.**
Edited by
Dr. N.C.V.Narasimhacharya

T.T.D. Religious Publications Series No. 653

First Edition 2004

**Price: Rs. 90.00**

Copies-1000

***Published by:***
**Sri Ajeya Kallam, I.A.S.,**
Executive Officer,
T.T.Devasthanams,
Tirupati

Cover Design
P Siva Prasad TTD

*Laser Typeset by*
YENCY GRAPHICS
TIRUPATI

Printed at

**Chennai Micro Print Pvt Ltd, Chennai-29.**
**Ph : 044 23740099**

ॐ नमो वेङ्कटेशाय

श्रीवेदव्यासमहर्षिप्रणीतम्

# श्रीमद्भागवतमहापुराणम्

## अष्टमः स्कन्धः

[illegible]

[illegible]

[illegible]


राष्ट्रपति पुरस्कार ग्रहीत्रा

**डॉ. यन्. सि. वि. नरसिंहाचार्येण** [illegible]

( [illegible] )


**परिष्कृतम्**


तिरुमल तिरुपति देवस्थान

कार्यनिर्वहणाधिकारिभिः

प्रकाशितम्

2004

# TIRUMALA TIRUPATI DEVASTHANAMS

# THE CRITICAL EDITION OF SRIMAD BHAGAVATA

## THE EDITORIAL BOARD

हरि: ओम्

लोकोद्धारैकदीक्षापर निगममहाहर्म्यधर्म्यप्रदीप:
स्वाङ्घ्रिद्वन्द्वप्रपन्नाखिलदुरिततमोध्वंसिपुण्यप्रदीप:।
दिङ्मूढेभ्यो नरेभ्य: प्रकटितसरणि: स्नेहदीप्र: प्रदीप:
युष्मानस्मान्समस्तानवतु वृषगिरिस्थास्नुमङ्गल्यदीप:।।



श्रीमद्भागवतं पुराणमखिलाम्नायैकसार: क्व वा?
प्रज्ञादुर्विधकिम्पचानधिषणा: शैक्षा: क्व वा मादृशा:?
भक्त्या चापलतस्तथाऽपि च परिष्कर्तुं वयं व्यापृता:,
एतत् प्राभृतयाम वेङ्कटपते: पादाब्जयो:, स्वीक्रियात्।।

"ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धनीम्।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम्॥"



श्रीमद्वेङ्कटनायकस्य हृदयं द्वेधा विधायाऽऽत्मनो
मूर्तिं शर्म्मदियं कृपामृतझरीस्नानस्विनी भार्गवी।
उद्धर्तुं निखिलानगण्यविषमांहोवह्निदग्धात्मनो
जन्तून् सन्निदधाति विश्वजननी पद्मावती रक्षनाम्॥

# C O N T E N T S

# FOREWORD

Our country Bharath has a glorious past Its glory is based on its ancient spirituality Not only in the past but also at present India is well-known for its spiritual eminence Our Vedas Sastras Puranas including Ramayana Mahabharata and Srimad Bhagavatam contain the essential tenets of spirituality

Srimadbhagavata is famous for its exposition of Bhakti yoga It can be understood only by sincere devotion not by scholarship

T T D is publishing a large number of religious books in various languages and they are being received well by the devotees

Sri Bhagavatam Project was established by the T T D to bring out the Critical Edition of Sanskrit Bhagavatam with different commentaries Eminent scholars endeavoured to bring out this edition after perusing many editions of the epic

The first Skandha and three volumes of tenth Skandha have already been published The fourth Skandha is in the process of printing This volume is the eighth Skandha containing the interesting stories of Gajendra Moksha Kshirasagara Mathanam and Vamanavatara etc The Chief Editor of this volume Dr N C V Narasimhacharya reached the lotus feet of Lord even before the publication of this valuable edition

It is hoped that the readers would receive the present volume also with due devotion and make the efforts of the T T D fruitful

TIRUPATI

Dt 15 - 4 – 2004

**Ajeya Kallam,**

Executive Officer

T T Devasthanams Tirupati

# INTRODUCTION

Bhagavatam is considered as Bhashyam to Gayatri Mantra The propagation of this holy work as per the twelfth Chapter of Bhagavata is as follows In the very beginning, Srimannarayana, narrated this to Brahma Brahma taught it to Narada. Vedavyasa received it from Narada. Suka learnt it from Vedavyasa and Pareekshit received this light of knowledge from Sage Suka

There is another tradition regarding the propagation of this work Sage Krishna Dwaipayana, after composing Bhagavata, taught it to his disciple Romaharshana Suta, the latter's son learnt it from his father This scripture was explained by Suta, later to Sages like Sounaka in the forest of Naimisa

There is also a third tradition, which says that Sankarshana was enlightened on this epic by Lord Srimannarayana Himself, whereas, Sankarshana explained it to Sage Sanatkumara etc The latter enlightened about it to Sankhyayana, Sankhyayana to Parasara, Parasara to Maitreya and Maitreya to Vidura respectively

These different traditions indicate the wide popularity of this text

In this eighth Skandha of Bhagavatam interesting stories like Gajendra Moksha, Kshirasagaramathana, Vamanavatara, and Matsyavatara are found The ego-centric Jeeva becomes an animal, and enters the lake of Samsara and is caught by the Crocodile of infatuation Inspite of his efforts, he fails to get released from the grip of the Crocodile Finally, he surrenders to the Lord and attains liberation This is the essence of Gajendra Moksha Devotees are accustomed to read Gajendra Moksha daily, as it is auspicious to do so

The story of Churning of the milky ocean also is very interesting Our heart is compared to Kshira Sagara It is full of good as well as bad ideas Bad ideas are to be discarded as poison Good ideas are to be welcomed like gems But both of them are impediments in the path of immortality The aspirant should not slacken his efforts till he attains the final goal of immortality

That is why Bhartruhari said "The Gods were not satisfied by merely finding the gems Nor they were afraid by the dreadful poison They did not rest till they obtained the Ambrosia The brave do not give up their efforts till they achieve success"

The story of Balichakravarthi is also very fascinating Bali followed the ninth way of devotion i e Atmanivedana He gave away everything in his possession to Lord Vamana and thereby received abundant grace of the Lord This Skandha ends with the description of Matsyavatara, one of the ten Avataras of Lord Vishnu All these stories are of high spiritual value

This Skandha was edited by well-known Sanskrit scholar, recipient of President s award and our Guru Sriman Dr N C V Narasimhacharya Swami He reached the Lotus feet of the Lord even before the publication of this book

The scholars who assisted in preparing this edition are 1 Sriman K C Jayachandra Sastri 2 Sriman U Venkatramaiah and 3 Sriman A Varada Rajan who deserve the gratitude of the readers

The research assistants, namely, Sri S B S Bhattacharya, Smt S Purnavalli and Dr S Dasaratha also deserve our commendation Sri I Venkateswara Rao and others who helped immensely in proof reading of the work also deserve our gratitude

Sri Ajeya Kallam IAS the revered Executive Officer of the TTD and Dr V R Panchamukhi, the well-known Sanskrit scholar, the revered Chancellor of Rashtriya Sanskrit Vidya Peetha Tirupati and Hon Member of the TTD Board and Dr Medasani Mohan the Director of Annamacharya Project and other members of the advisory committee of the Bhagavata project are offered our deep gratitude for their keen interest and co-operation in bringing out this edition

Tirupati
Dt 15-04-2004

Samudrala Lakshmanaiah,
Special Officer,
Sri Bhagavata Project T T D

# निवेदनम्

**कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा**
**तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा।**
**योगीन्द्राय तदात्मनाऽथ भगवद्राताय कारुण्यतः**
**तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि।।**

(भाग.12-13-19)

इति गायत्रीभाष्यभूतस्य भागवतस्य प्रबोधनक्रमः श्रीमद्भागवते द्वादशस्कन्धे निर्दिष्टः। आदौ श्रीमन्नारायणेन चतुर्मुखब्रह्मणे भागवतमिदं प्रबोधितम्। तदनु ब्रह्मणा नारदाय, नारदेन वेदव्यासाय, व्यासेन च योगिश्रेष्ठाय शुकाय, शुकेन च भगवद्रक्षिताय परीक्षिते चाय भागवताख्यो ज्ञानप्रदीपः विभासितः इति निरूपितम्।

भागवतप्रचारविषये अन्योऽपि कश्चन सम्प्रदायः श्रूयते। कृष्णद्वैपायनः नारदप्रेरितः भागवतं निर्माय स्वशिष्याय रोमहर्षणाय उपदिदेश। रोमहर्षणोऽपि स्वपुत्राय सूतायोपदिष्टवान्। सूतोऽपि नैमिशारण्ये शौनकादिमुनीनुद्दिश्य भागवतपुराणमिदं बोधयामासेत्यपि ज्ञायते।

किञ्च भागवते तृतीयस्कन्धे अपरोऽपि कश्चन सम्प्रदायः विलोक्यते। श्रीमन्नारायणेन सङ्कर्षणमुद्दिश्य भागवततत्त्वमुपदिष्टमिति। सङ्कर्षणेन सनत्कुमाराय, सनत्कुमारेण साङ्ख्यायनाय, सांख्यायनेन पराशराय, पराशरेण मैत्रेयाय, मैत्रेयेण विदुराय च तत्त्वमिदं प्रबोधितमिति।

एवमेते भिन्नभिन्नास्सम्प्रदायाः श्रीमद्भागवतस्य विशिष्टतां तस्य प्रचारातिशयं च निवेदयन्ति।

भागवतस्य अष्टमस्कन्धे गजेन्द्रोपाख्यानम्, क्षीरसागरमथनं, भगवतो वामनस्य प्रादुर्भावः, बलिबन्धनं, मत्स्यावतारकथा चेति प्रशस्ताः केचन कथाघट्टाः पठ्यन्ते।

अहङ्कारेण निबद्धः जीवः पशुप्रायस्सन् संसारहृदं प्रविश्य मोहग्राहेण परिपीडितो भवतीति, अन्ते भगवन्तं श्रीमन्नारायणं प्रपद्यैव तदनुग्रहेण ततः विमुक्तो भवतीति अयं परमार्थः गजेन्द्रमोक्षणे सुरुचिरं निरूपितः।

गजेन्द्रमोक्षणघट्टं भक्ताः केचित् अनुदिनं पठन्ति। "**स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं**" (भाग.8-11-14) इत्यादिना भागवते गजराजमोक्षणं परिकीर्तितम्।

क्षीरसागरमथनकथाऽपि अतीव रमणीया भवति। अस्माकं हृदयमेव क्षीरसागरः, तत्र परिहरणीयाः विषतुल्याः दोषाः एवं उपादेयानि बहूनि गुणरत्नान्यपि सन्ति। साधकः ध्यानादिसाधनैः अमृतत्वप्राप्त्यै दृढप्रयत्नं कुर्यात्। साधनकाले विघ्नपरम्परा भवत्येव। तामतिक्रम्य लक्ष्यसिद्धिपर्यन्तं प्रयत्नपरो भवेदिति तत्त्वार्थः अत्र बोध्यते।

उक्तं च भर्तृहरिणा --

**'रत्नैर्महाब्धेस्तुतुषुर्न देवाः न भेजिरे भीमविषेण भीतिम्।**
**सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः।।'** इति।

बलिचक्रवर्तिनः कथाऽपि नितरां हृद्या भवति। प्रह्लादेन प्रतिपादितासु नवविधासु भक्तिषु अन्तिमां आत्मनिवेदनरूपां भक्तिमाश्रित्य सर्वस्वत्यागं कृत्वा वामनरूपेण विष्णुना बलिः अनुगृहीतः।

दशावतारेषु अन्यतमस्य मत्स्यावतारस्य कथाऽपि अस्मिन् स्कन्धे पठ्यते।

विद्वद्वर्ये राष्ट्रपतिपुरस्कारेण सम्मानिते, बहुभाषाभिज्ञे अस्मद्गुरुभिः श्रीमद्भिः डा.एन्.सि.वि.नरसिंहाचार्यस्वामिभिः व्याख्यानत्रयसमलङ्कृतोऽयं ग्रन्थः महता श्रमेण परिष्कृतः। ग्रन्थप्रकाशनात्पूर्वमेव ते महाभागाः यशश्शरीरा बभूवुः।

अस्य ग्रन्थस्य परिष्करणे सम्पादने च बहुधा उपकृतवन्तः श्रीमन्तः के.सि.जयचन्द्रशास्त्रिणः, पि.वेङ्कटरामय्यनामानः, आ.वरदराजनाह्वयाश्च कृतज्ञताञ्जलिमर्हन्ति। एवं श्रीमान् एस्.वि.एस्. भट्टाचार्यः, श्रीमती एस्. पूर्णवल्ली, एस्. दशरथश्च कृतज्ञतामर्हन्ति।

मुद्रणसमये अक्षरशोधनकर्मणि सहकारं प्रदत्तवन्तः श्रीमन्तः श्री पि.वेङ्कटभास्करराव् महोदयाः, एवं अन्ये च धन्यवादान् अर्हन्ति।

किञ्च अस्य ग्रन्थस्य मुद्रणे नितरां श्रद्धां प्रदर्शितवद्भ्यः ति.ति.दे.कार्यनिर्वहणाधिकारिभ्यः श्री अजय कल्लम् I.A.S. महाशयेभ्यः, एवं ति.ति.दे.धर्मकर्तृमण्डलीसदस्येभ्यः विद्वद्वरेभ्यः डा.वी.आर.पञ्चमुखिमहोदयेभ्यः, अन्नमाचार्य प्राजेक्ट् निदेशकेभ्यः डा.मेदसानि मोहन महाशयेभ्यः एवं अन्येभ्यश्च भागवतपरिष्करणमार्गदर्शकमण्डलीसदस्येभ्यः सादरं कृतज्ञताञ्जलयः समर्प्यन्ते।

'व्याकाम्यमामस्त स्मृतिपूना भवतु'

तिरुपति
[illegible]

**समुद्राल लक्ष्मणय्य**
विशेषाधिकारी
श्रीभागवतपरिष्करण परियत्
ति.ति.देवस्थानम्

# LIST OF ABBREVIATIONS

(of the Edition of Srimad Bhagavata Mahapuranam being referred to)

1.A. Edited by Sri Krishna Sankara Sastri - contains about 30 commentaries - Printed in Devanagari Script At Ahmedabad,Gujarat.

2. B. Printed in Devanagari Script at Brindavan - contains 9 commentaries.

3. G Contains text only - Printed at Gita Press, Ghorakhpur - in Devanagari Script.

4. H. Contains Sridhara's Commentary - Edited by Sri Hayagriva Sastry Printed in Telugu Script at Madras.

5 J Contains Sridharacharya's Commentary - Edited by Prof J.L.Sastri - in Devanagari Script

6 M Contains the commentary of Sri Vijaya Dhvaja Tirtha - printed in Devanagari Script, Madhva Edition

7.Ma Contains the commentary of Sri Vijaya Dhvaja Tirtha - printed in Devanagari Script, Another Madhva Edition

8 T Contains the commentary of Sri Veera Raghavacharya - printed in Telugu Characters-Published by Sri Tridandi Srimannarayana Ramanuja Jeer Swami

9 V Contains the commentary of Sridharacharya - Printed at Vavilla Press, Madras in Telugu Script

10 W Contains the commentary of Sri Veera Raghavacharya - Printed in Telugu characters - Published by the Maharaja of Wanaparti Samsthan, Andhra

# LIST OF ABBREVIATIONS

Commentaries

1. **श्रीध०** श्रीधरस्वामिविरचिता भावार्थदीपिका
2. **वीर०** श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका
3. **विज०** श्रीविजयध्वजतीर्थकृता पदरत्नावली

# Texts cited in commentaries and their Abbreviations

| Abbreviation | Name of the Book | Abbreviation | Name of the Book |
|---|---|---|---|
| अथ. शिखा उ. | अथर्वशिखोपनिषत् | नृ. उ. ता. उ. | नृसिंह उत्तरतापिन्युपनिषत् |
| अद्वै. उ. | अद्वैतोपनिषत् | | पञ्चतन्त्रे |
| - | अध्यात्मे | - | परमसंहिता |
| - | अभिधानम् | | पाञ्चरात्रे |
| अम. को. | अमरकोश | | पाद्मपुराणम् |
| अष्टा. | अष्टाध्यायी | पु. सू. | पुरुषसूक्तम् |
| - | आहिर्बुध्न्यसंहिता | - | प्रकाशिकायाम् |
| आगम. प्रा. | आगमप्रामाण्यम् | प्रश्न. उ. | प्रश्नोपनिषत् |
| आप. श्रौ. सू. | आपस्तम्बश्रौत सूत्रम् | बृह. उ. | बृहदारण्यकोपनिषत् |
| - | आम्नाय | | ब्रह्मतर्के |
| ईश. उ. | ईशावास्योपनिषत् | | ब्रह्मवैवर्ते |
| उणा. सू. | उणादिसूत्राणि | ब्र. सू. | ब्रह्मसूत्राणि |
| - | उत्पलमाला | | ब्राह्म |
| ऋक् सं. | ऋक् संहिता | | भट्टिकायाम् |
| ऐत. उ. | ऐतरेयोपनिषत् | भ. गी. | भगवद्गीता |
| कठ. उ. | कठोपनिषत् | भर. सं. | भरद्वाजसंहिता |
| - | कापिलम् | | भगवत्तन्त्र |
| कुमार. सं. | कुमारसम्भवम् | भाग. | भागवतम् |
| कौषी. उ. | कौषीतक्युपनिषत् | | भविष्यत्पुराण |
| - | क्रियायोग | भारत. आनु. | भारत आनुशासनिकपर्व |
| | गारुड | भारत. आरण्य. | भारत आरण्यपर्व |
| | गोपाल | भारत. उद्योग. | भारत उद्योगपर्व |
| - | चाक्रायण श्रुति | भारत. शान्ति. | भारत शान्तिपर्व |
| छान्दो. उ. | छान्दोग्योपनिषत् | मनु. स्मृ. | मनुस्मृति |
| जित. स्तो. | जितन्तास्तोत्रम् | | महाकौर्मे |
| - | तत्त्वनिर्णय | | माहात्म्य |
| - | तन्त्रभागवत | म. ना. उ. | महानारायणोपनिषत् |
| तैत्ति. आ. | तैत्तिरीय आरण्यकम् | महा. उ. | महोपनिषत् |
| तैत्ति. उ. | तैत्तिरीयोपनिषत् | माण्डू. उ. | माण्डूक्योपनिषत् |
| तैत्ति. सं. | तैत्तिरीयसंहिता | | माध्यन्दिनश्रुति |
| - | दत्त | मुण्ड. उ. | मुण्डकोपनिषत् |
| - | नारदीय | मैत्रा. उ. | मैत्रायण्युपनिषत् |
| निरा. उ. | निरालम्बोपनिषत् | याज्ञ. स्मृ. | याज्ञवल्क्यस्मृति |
| - | निरुक्तम् | रामा. | रामायणम् |

| Abbreviation | Name of the Book | Abbreviation | Name of the Book |
|---|---|---|---|
| - | रुद्रः | शार्ङ्ग . पद्ध . | शार्ङ्गधरपद्धतिः |
| - | लक्ष्मीतन्त्र | - | शिशुपालवधम् |
| वर . स्तवः | वरदराजस्तवः | श्वेता . उ . | श्वेताश्वतरोपनिषत् |
| - | वामने | सुबा . उ . | सुबालोपनिषत् |
| - | वाराहे | सुभा . | सुभाषितरत्नभाण्डागारम् |
| - | वररुचिः | सूर्य . उ . | सूर्योपनिषत् |
| विष्णु . ध . पु . | विष्णुधर्मोत्तरपुराणम् | - | स्कान्दे |
| विष्णु . पु . | विष्णुपुराणम् | - | षाड्गुण्ये |
| | विष्वक्सेनसंहिता | - | हरिवंशे |
| वै . नि . | वैदनिघण्टुः | हला . को . | हलायुधकोश |
| - | शब्दनिर्णय | - | हेमचन्द्रः |

# श्रीमद्भागवतमहापुराण

## अष्टमस्कन्धस्थानां चतुर्विंशत्यध्यायानां

## अध्यायार्थसङ्ग्रहश्लोकाः

तत्र तु प्रथमे स्वायम्भुवस्स्वारोचिषस्तथा।
उत्तमस्तामसश्चेति चतुर्मनुर्निरूपणम्।।
स्वायम्भुवेऽन्तरेऽनन्तदुरन्तगुणवर्णनात्।
मुदितः परिपप्रच्छ सर्वमन्वन्तरस्थितिम्।।१।।

तुर्ये मन्वन्तरे प्रोक्तं गजेन्द्रस्य विमोक्षणम्।
द्वितीयादित्रिभि स्तत्तु विस्तरेणोपवर्ण्यते।।
द्वितीये तु गजेन्द्रस्य गर्जीभिः क्रीडतो जले।
दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते।।२।।

तृतीयेन गजेन्द्रेण स्तुतो हरिरुपेत्य तम्।
समुद्धार ग्राहाच्च ग्राहं देवलशापतः।।३।।

चतुर्थे तु तयोर्ग्राहः प्राप गन्धर्वतां पुनः।
गजं स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदम्।।४।।

अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते।
स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः।।
पञ्चमे पञ्चमं चाथ षष्ठं चाकथयन्मनुं।
विप्रशापाच्च निश्श्रीकैः कृता देवैर्हरिस्तुतिः।।५।।

षष्ठे पुनस्स्तुतिविष्णावाविर्भूते सुरैः कृता।
तन्मन्त्राच्चासुरैस्साकममृतार्थं महोद्यमः।।६।।

सप्तमे मन्थनोद्भूतविषभीत्याखिलैर्जनैः।
स्तुतस्सन् कृपया रुद्रः पपौ विषमितीर्यते।।७।।

अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः।
धन्वन्तरेर्हृते सोमे मोहिन्युद्भव ईर्यते।।८।।

नवमे मोहितैर्दैत्यैरर्पितेऽमृतभाजने।
तद्वञ्चनेन देवेभ्योऽमृतं दत्तं तयेर्यते।।९।।

दशमे मत्सराद्दैत्यैरारब्धे तु मृधे सुरैः।
दैत्यमायाविषण्णेषु देवेष्वाविर्बभौ हरिः।।
तदेवममृतावाप्तिर्नाभक्तानामितीरितम्।
भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते।।१०।।

एकादशे तु भगवत्कृपयातिबलोद्धतैः।
अमरैस्समरे दैत्या बलिप्रभृतयो जिताः।।११।।

द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम्।
भवं संमोहयामास हरिः पुनरसान्त्वयत्।।
अमुह्यन्नसुरा विष्णुमायया न तदद्भुतम्।
इति वक्तुं महादेवमोहोऽयमिति वर्ण्यते।।१२।।

त्रयोदशे तु वर्ण्यन्ते सप्तमादीन्यनुक्रमात्।
मन्वन्तराणि सर्वाणि षड्विधानि पृथक्पृथक्।।१३।।

चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम्।
पृथक्कर्माणि वर्ण्यन्ते भगवद्वंशवर्तिनाम्।।१४।।

अत्रेर्यते नवाध्याय्यां वामं वामनचेष्टितम्।
निग्रहाच्छलतो यत्र बलेर्भूयाननुग्रहः।
बलिं पञ्चदशे विश्वजिताचार्या ह्ययाजयन्।
ततोऽसौ स्वर्गमजयद्भयाद्देवा निलिल्यिरे।।१५।।

षोडशे पुत्रनाशेन शोचन्त्या अदितेः पतिः।
प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते।
यद्वा--
षोडशे कश्यपोऽदित्या प्रार्थितो लीनपुत्रया।
महच्छ्रेयस्करं तस्यै पयोव्रतमुपादिशत्।।१६।।

ततस्सप्तदशेऽदित्या कृते तस्मिन् व्रते हरिः।
तत्कामपूरणायादौ तत्पुत्रोऽभूदितीर्यते।।१७।।

ततस्त्वष्टादशे भूत्वा वामनस्सत्कृतोऽखिलैः।
बलेर्यज्ञं गतस्तेन चोक्तो वृणु वरानिति।।१८।।

ऊनविंशे तु हरिणा याचिते च पदत्रयम्।
प्रतिश्रुते च बलिना जानन् गुरुरवारयत्।।
यद्वा--
स्तुत्वाऽर्थितो भगवता स बलिस्त्रिपदीमिताम्।
वामनायोनविंशे क्ष्मां दास्यन् शुक्रेण वार्यते।।
दातुस्स्तुतिस्स्वयं तुष्टिरित्यादि प्रस्तुतोचितम्।
वक्तव्यमिति भिक्षूंश्च शिक्षयन्नाह वामनः।।१९।।

विंशे गुरूक्तिमुल्लङ्घ्य दत्तां क्ष्मां बलिना हरिः।
प्रतिगृह्याखिलान् लोकान् विश्वरूपो विचक्रमे।।
यद्वा-
विंशे त्वनृतभीतोऽसौ ज्ञात्वाऽपि कपटं हरेः।
ददौ पृथ्वीं तदा विष्णुस्सहसाऽवर्धताद्भुतम्।।२०।।

एकविंशे पदापूर्तिमिषेण बलिबन्धनम्।
विष्णुना कृतमुत्कर्षं तस्य ख्यापयितुं जने।।२१।।

द्वाविंशे तु प्रसन्नस्सन् प्रस्थाप्य सुतलं बलिम्।
दत्त्वा वरान् हरिर्नूनं गत्वा तद्द्वारपोऽभवत्।।
समर्पिततनूवित्तनिर्मलाचलभक्तिभिः।
छलितो बलिना चित्रं स्वमेवार्पयदच्युतः।।२२।।

त्रयोविंशे बलौ याते सुतलं सपितामहे।
उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदते हरिः।।२३।।

चतुर्विंशे भगवतः कथा मत्स्यस्वरूपिणः।
विविच्यते यतस्सत्यव्रतरक्षा महार्णवे।।
तनुं तनुं प्रदर्श्यादौ निजैश्वर्यानिदर्शनात्।
मत्स्यं पृच्छति पृथ्वीशो लीलया वामनोपमम्।।२४।।

## श्रीमद्भागवतपाठविधिः

स्नातः शुचि र्भूत्वा प्राणा नायम्य त्रिराचम्य च मङ्गलपाठपूर्वकं भगवन्तं प्रणमेत्। तदनु सम्भृतैः षोडशोपचारै र्मानसोपचारैर्वा व्यासं शुकं वासुदेवं श्रीमद्भागवतग्रन्थं च सादरं सविनयं सभक्तिभावं सम्पूजयेत्। ततः पाठा- रम्भात् प्राक् 'ओं नमो भगवते वासुदेवाय' इति द्वादशाक्षरमन्त्रम् 'ओं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इति गोपालमन्त्रं वाऽष्टोत्तरशतवारं जपेत्। पश्चादेवं विनियुञ्जीत -

### विनियोगः

ओं अस्य श्रीमद्भागवताख्यस्तोत्रमन्त्रस्य नारद ऋषिः, बृहती छन्दः, श्रीकृष्णः परमात्मा देवता, ब्रह्म बीजम्, भक्तिः शक्तिः, ज्ञानवैराग्ये कीलकम् मम श्रीमद्भगवत्प्रसादसिद्ध्यर्थे पाठे विनियोगः।

### ऋष्यादिन्यासः

'नारदर्षये नमः' शिरसि। 'बृहतीच्छन्दसे नमः' मुखे। 'श्रीकृष्णपरमात्मदेवतायै नमः' हृदि। 'ब्रह्मबीजाय नमः' गुह्ये। 'भक्तिशक्तये नमः' पादयोः। ज्ञानवैराग्यकीलकाय नमः' नाभौ। श्रीमद्भगवत्प्रसादसिद्ध्यर्थकपाठविनियोगाय नमः सर्वाङ्गे। द्वादशाक्षरमन्त्रेण हृदयाद्यङ्गन्यासं करन्यासं च कुर्यात्। अथवाऽधोऽङ्कितरीत्याऽङ्गन्यासकरन्यासौ विदध्यात्-

### अङ्गन्यासः

ओं क्लां हृदयाय नमः। ओं क्लीं शिरसे स्वाहा। ओं क्लूं शिखायै वषट्। ओं क्लैं कवचाय हुम्। ओं क्लौं नेत्रत्रयाय वौषट्। ओं क्लः अस्त्राय फट्।

### करन्यासः

ओं क्लां अङ्गुष्ठाभ्यां नमः। ओं क्लीं तर्जनीभ्यां नमः। ओं क्लूं मध्यमाभ्यां नमः। ओं क्लैं अनामिकाभ्यां नमः। ओं क्लौं कनिष्ठिकाभ्यां नमः। ओं क्लः करतलकरपृष्ठाभ्यां नमः।

### अथ ध्यानम्

कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम्।
सर्वाङ्गे हरिचन्दनं च कलयन् कण्ठे च मुक्तावलिं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः।।
अस्ति स्वस्तरुणीकराग्रविगलत्कल्पप्रसूनाप्लुतं वस्तु प्रस्तुतवेणुनादलहरीनिर्वाणनिर्व्याकुलम्।
स्रस्तस्रस्तनिबद्धनीविविलसद्गोपीसहस्रावृतं हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति।।

इत्येवं ध्यात्वा पाठमारभेत्।

### श्रीमद्भागवतसप्ताहपारायणस्य दैनन्दिनविश्रामस्थलानि निम्नाङ्कितपद्येषु निरूपितानि

मनुकर्दमसंवादपर्यन्तं प्रथमेऽहनि। भरताख्यानपर्यन्तं द्वितीयेऽहनि वाचयेत्।।
तृतीये दिवसे कुर्यात् सप्तमस्कन्धपूरणम्। कृष्णाविर्भावपर्यन्तं चतुर्थे दिवसे वदेत्।।
रुक्मिण्युद्वाहपर्यन्तं पञ्चमेऽहनि शस्यते। श्रीहंसाख्यानपर्यन्तं षष्ठेऽहनि वदेत्सुधीः।।
सप्तमे तु दिने कुर्यात् पूर्तिं भागवतस्य वै। एवं निर्विघ्नतासिद्धि विपर्यय इतोऽन्यथा।।

हरि: ओम्

# श्रीमद्भागवतमहापुराणम्

ओं नमो भगवते वासुदेवाय

# अष्टमः स्कन्धः

## प्रथमोऽध्यायः

राजोवाच

स्वायम्भुवस्येह गुरो! वंशोऽयं विस्तराच्छ्रुतः ।
यत्र विश्वसृजां सर्गो मनूनन्यान्वदस्व नः ॥ १॥

यत्र यत्र हरेर्जन्म कर्माणि च महीयसः ।
गृणन्ति कवयो ब्रह्मंस्तानि नो वद शृण्वताम् ॥२॥

सर्वमन्वन्तरं ब्रह्मन्भगवान्विश्वभावनः ।
कृतवान्कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥३॥

ब्रह्मरातः उवाच

मनवोऽस्मिन्व्यतीताष्षट् कल्पे स्वायम्भुवादयः ।
आद्यस्तु कथितो यत्र देवादीनाञ्च सम्भवः ॥४॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥

अथाऽष्टमे चतुर्विंशत्यध्यायैर्मनुवर्णनम् । तत्सुतैः ऋषिदेवेन्द्रैर्मूर्तिभिश्च हरेस्तथा ॥

प्रतिमन्वन्तरं ह्येव मन्वाद्याः षट् पृथक्पृथक् । प्रवर्तयन्ति सद्धर्मान्पालयन्त्याचरन्ति च ॥

अतो मन्वन्तरस्योक्तं सद्धर्म इति लक्षणम् । येन वै क्रियमाणेन नरो न निरयं व्रजेत् ॥

तत्र तु प्रथमे स्वायम्भुवः स्वारोचिषस्तथा । उत्तमस्तामसश्चेति चतुर्मनुनिरूपणम् ॥

स्वायम्भुवेऽन्तरेऽनन्तदुरन्तगुणवर्णनात् । मुदितः परिपप्रच्छ सर्वमन्वन्तरस्थितिम् ॥

स्वायम्भुवस्येत्यादि त्रिभिः । यत्र विश्वसृजां मरीच्यादीनां मनुकन्यासु पुत्रपौत्रादिसर्गः ॥१॥

1--1 H V विष्णुरात उवाच 2 M Ma मनून् * The following half verse is found in H M MaV edns as follows यत्र धर्मांश्च विविधा वर्णाश्रमयुता शुभाः । 3 M Ma मन्वन्तरं 4--4 ABGJ M Ma यदस्मिन्नन्तरे । 5 ABGJ M Ma T ह्यपि । 6 ABGJ M Ma T मनवः 7 H,V ते चैव । 8 ABJ स्यात्

**यत्रेति।** महीयसो हरेः। अत्र [1]गरीयसः महौजसः इत्यादि विविध पाठभेदाः मास्माभिः आदृताः[1] ।।२।।

**सर्वेति।** यस्मिन्नतीते यत्कृतवान्, यस्मिन्ननागते यत्कर्ता करिष्यति, अद्य वा वर्तमाने यत्कुरुते, तद्वदस्व[2] इत्यन्वयः ।।३।।

**मनव** इति। अस्मिन्कल्पे षण्मनवो व्यतीताः गताः[3] ।।४।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

तृतीये "स्वायम्भवस्य च मनोर्वंशः परमसम्मतः" इति पृष्टं तद्वंशकथनं प्रक्रम्य तावत्तत्र तद्दुहितुः देवहूत्या वंशः कथितः। चतुर्थे तु आकूतिदेवहूत्यो स्तद्दुहित्रो र्देवहूतिदुहितॄणां वंशमभिधाय अथ स्वायम्भुवपुत्रवंशमुपक्रम्य तावदुत्तानपद[4]सन्ततिं सावशेषामभिधाय अन्तरा गर्भिणीन्यायेन प्रसङ्गात् प्रियव्रतस्य वंशः पञ्चमे कथितः। षष्ठे तु पुनः प्रसक्तानुप्रसक्तकथनानन्तरं मुत्तानपद एव वंशोऽवशिष्टः कथितः। सप्तमे तु तदनुप्रसक्तमुक्तम् । तदेवं स्वायम्भुवमनुवंशकथनव्याजेन बहुधा भगवतो जन्मकर्मगुणादिषू[5]पवर्णितेषु पुन स्तानेव शुश्रूषुः तुल्यन्यायादन्येष्वपि मनुवंशेषु कथ्यमानेषु हरे र्जन्मादिकथनमर्थात्प्रसक्तमेव भविष्यतीति आलोच्य प्राधान्येनाऽन्यान्मनून् सवंशान् पृच्छति राजा - **स्वायम्भुवस्येति** त्रिभिः। तत्रोक्तं मनुवदति पादत्रयेण। हे गुरो! गुरोरिति पाठे गुरोस्त्वत्तः इह वृत्ते ग्रन्थे स्वायम्भुवस्य मनोर्वंशो विस्तराच्छ्रुतः। वंशं विशिनष्टि। यत्र वंशे विश्वसृजां मरीच्यादीनां मनुकन्यासु पुत्र पौत्रादि रूपः सर्गः अथ नोऽस्मभ्यमन्यान् मनून् वदस्व सचरित्रान् सवंशान् कथयेत्यर्थः ।।१।।

यत्र यत्र मन्वन्तरे महीयसः निस्समाभ्यधिकस्य हरेः जन्मानि अवताररूपाणि कर्माणि चेष्टितानि च कवयो विद्वांसः गायन्ति। तान्यपि चरित्राणि श्रृण्वतां श्रोतुं प्रवृत्तानां नः अस्माकं वद कथय।२।।

हे ब्रह्मन्! यस्मिन् मन्वन्तरे मनो रन्तरमवस्थानदशा तस्मिन् , विश्वभावनः विश्वपालको भगवान् कृतवान् यस्मिन्नतीते यत् कृतवान् यस्मिन्ननागते यत्कर्ता करिष्यति। यस्मिन्नद्य वर्तमाने यत्करोति तद्वदेत्यन्वयः ।।३।।

एवं मापृष्टो मुनिराह - **मनव** इति। अस्मिन् कल्पे स्वायम्भुवादयः षण्मनवो व्यतीताः। तत्राऽऽद्यः स्वायम्भुवो मनुः तुभ्यं कथितः, सचरित्रः [6]सवंशश्च[6] कथितः ।।४।।

1- -1 ABJ क्वचिद्बहुपाठान्तरमस्ति तदुपेक्षितमस्माभि। 2 ABJ "देस्व"। 3 HJV Omit गता। 4 ABJ "पाद स"। 5 ABJ "षु व"
6- -6 ABT यत्र देवादीनां सम्भवश्च।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्तावि श्रुतिमस्तकेन मनुना स्वायम्भुवेनाऽपि यो येनारक्षि जगत्त्रयं च मुनिभिः स्वात्मानु विद्धात्मभिः ।।

येनामोचि गजाधिप. क्रकचवच्चक्रेण नक्राननात् क्षीराम्भोधिरमन्थि येन धृतभूः सोऽयं हरिः पातु नः ।।

येनाधारि गिरिः पपे च विबुधैर्येनामृतं प्रेरितै. । येनातापि सुरद्विषां च हृदयं शर्वोप्यमोहि स्त्रिया ।।

येनामायि जगन्त्यबन्धि च बलिर्येनाप्यदायि श्रुति । धात्रे येन निहत्य मत्स्यवपुषा दैत्यं तमीडे हरिम् ।।

सप्तमस्कन्धवाराशौ निमज्योन्मज्य शुद्धधी । अष्टमस्कन्ध सद्व्याख्याऽमृतं पातुमुपक्रमे ।।

अत्रापि हरिर्भक्तिरेव भगवन्मनःकथर्णानपुणेति विधातुमनन्तोपनिषदर्थभूतस्य हरे जगद्रक्षणादि माहात्म्य निरूप्यते तत्रापि विमलतरमुरुमथनदुरितहर चरितामृतपानाऽऽप्यायितप्राणो विस्मृताऽनशनक्लेशः परीक्षिच्छुकमच्युतकथानुवादपूर्वकमभिलषितात्यन्तश्रोतव्यकथां प्रार्थयत - **राजेति**। अन्यान् स्वायम्भुवव्यतिरिक्तान् ।।१।।

तत्रापि तत्प्रसङ्ग विशेषकथापि वक्तव्येत्याह · **यत्रेति** । महीयस महत्तमस्य हर ।।२-३।।

अस्मिन्वैवस्वतान्तर स्वायम्भुवप्रभृति वैवस्वतान्ता. सप्त मनवो व्यतीतप्राया उच्यन्ते, अत्र सप्तसु आद्य कथित इत्यन्वय ।।४।।

**आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः।**
**धर्मज्ञानोपदेशार्थं भगवान्पुत्रतां गतः ।।५।।**

**कृतं पुरा भगवतः कपिलस्यानुवर्णितम्।**
**आख्यास्ये भगवान्यज्ञो यच्चकार कुरूद्वह! ।।६।।**

**विरक्तः कामभोगेषु शतरूपापतिः प्रभुः।**
**विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ।।७।।**

**सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन्।**
**तप्यमानस्तपो घोरमिदमन्वाह भारत! ।।८।।**

**श्रीध० आकूत्यामिति।** तस्य मनोर्दुहित्रो देवहूत्याम् आकूत्यां च कपिल यज्ञमूर्तिभ्यां पुत्रतां गतः प्राप्तः ।।५-७।।

1 A B °कपिम°। 2 W मूर्तिभ्यां पुत्रतां प्राप्तो भगवान स महाप्रभुः 3- -3 W शृणु त्वया। 4 H V वर्णनम । 5 M Ma °माह स।
6- -6 H J V Omit 7 H V Omit तत्र

**सुनन्दायामिति**। घोरं दुश्चरं तपस्तप्यमानः। समाधावनुभूतमिदं वक्ष्यमाणं निद्रितोच्छ्वसितवत् विस्मित इव उपदिशन् इव अनुवदन् इव च अष्टभिः श्लोकैरन्वाह।।८।।

**वीर०** तस्य स्वायम्भुवस्य मनोर्दुहित्रोः आकूत्यां देवहूत्यां च भगवान् महेश्वरः [1]सर्वेश्वरो मूर्तिभ्यां [2]कपिलाख्य यज्ञाख्य[-2] मूर्तिभ्यां पुत्रत्वं प्राप्तः ।।५।।

तत्र भगवतः कपिलस्य [3]अनुवर्णितं तृतीयस्कन्धे इति शेषः । अनुवर्णितं चरित्रं त्वया [4]हे भरतर्षभ[-4]! श्रुतमेव अधुना यज्ञाख्यो भगवान् यच्चकार तच्चेष्टितं, हे कुरूद्वह! आख्यास्ये कथयिष्यामि। यद्यपि मन्वन्तरावान्तरकथनमेव प्रतिज्ञातव्यं तेषामेव प्राधान्येन पृष्टत्वात्। तथाऽपि भावज्ञो मुनिः भगवद्गुणकर्मजन्मादि शुश्रूषयैवाऽपृच्छमित्यालोच्याद्य मन्वन्तरस्थस्य यज्ञाख्यस्य भगवतः चरित्रस्य अकथितत्वात्तदेव कथयितुं प्रतिजानीते, अर्थात्तत्क[5]थनेन मन्वन्तरा[6]न्तरकथनमपि प्रसक्तमेव भविष्यतीति मुनेरभिप्रायः ।।६।।

तत्र यज्ञस्य भगवतः चरित्रं विवक्षुः तदुपोद्घाततया स्वायम्भुवस्य मनोर्वृत्तान्तमाह - **विरक्त** इत्यादिना। यद्यपि कपिलोऽपि तन्मन्वन्तरावताररूप एव, तथाऽपि तस्य जगत्पालनानधिकृतत्वात्केवलं ज्ञानयोगप्रवर्तनाधिकृतत्वात् तच्चरित्रस्य कथितत्व प्रदर्शनाच्च यज्ञो यच्चकार तदाख्यास्ये इत्युक्तम् । शतरूपायाः पतिः भर्ता विभुः स्वायम्भुवो मनुः, काम्यन्त इति कामाः शब्दादयो विषयाः तेषां भोगेषु विरक्तः राज्यं विसृज्य तपः तपः कर्तुं सभार्यो वनम् आविशत् ।।७।।

सुनन्दायाः सुनन्दातीरे पदैकेनैव भुवं स्पृशन् वर्षशतं घोरं दुश्चरं तपस्तप्यमानः कुर्वाणः हे भारत! इदं वक्ष्यमाणमन्वाह जजाप।।८।।

**विज०** अत्रापि शतरूपापतिपाल्नादि विषयमनुदितं यज्ञमूर्ति चरितं वक्तुमाह-**आकूत्यामिति**।।९।।

कपिलस्य हरेः कृतं चरितं पुरा तृतीयस्कन्धे ।।६,७।।

सुनन्दायां त्रिधा भिन्नायां विष्णुपद्यां एतस्याम् अन्वाह स्तुतिरूपां उपनिषदमाह।।८।।

**मनुरुवाच**

***[7]येन चेतयते विश्वं [8]विश्वं चेतयते न यम्[-8] ।**
**यो जागर्ति शयानेऽस्मिन्नायं तं वेद वेद सः ।।९।।**

1 T Omit सर्वेश्वर 2--2 ABT °त्यज्ञम् पाभ्या 3 ABT Omit अनुवर्णित 4--4 W Omit 5 W थन 6 ABT 'न्तरक°
*An additional half verse is found in HV Edns as follows -वासुदेवो वसत्यत्र सव देहष्वनन्यदृक्;
7--7 M Ma येनाय तपत 8--8 M Ma विश्वयोयं यतस्तप

आत्मावास्यमिदं सर्वं[1] यत्[2] किञ्चिज्जगत्यां जगत्[2]।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥१०॥

यं[3] न पश्यति पश्यन्तं[4] चक्षुर्यस्य न रिष्यति।
तं भूतनिलयं देवं सुपर्णमुपधावत ॥११॥

न[5] यस्याद्यन्त मध्यानि[5] स्वः परो नान्तरं बहिः।
विश्वस्यामूनि यद् यस्मात् विश्वं च तदृतं महत् ॥१२॥

स विश्वकायः पुरुहूत ईशः सर्वस्य[6] गोप्ता ह्यजरः[6] पुराणः।
धत्तेऽस्य जन्माद्य जयाऽऽत्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥१३॥

अथाग्र[7] ऋषयः कर्माणीहन्तेऽकर्म[8] हेतवे[9]।
ईहमानोऽपि[10] पुरुषः प्रायोऽनीहां प्रपद्यते ॥१४॥

ईहते भगवानीशो न हि तत्र विषज्जते।
आत्मलाभेन पूर्णार्थो[11] नावसीदन्ति येऽनु तम् ॥१५॥

तमीहमानं निरहङ्कृतं बुधं[12] निराशिषं पूर्णमनन्यचोदितम्।
नॄन्[13] शिक्षयन्तं निजवर्त्मसंस्थितं[14] प्रभुं प्रपद्येऽखिल धर्मभावनम् ॥१६॥

**श्रीध० येनेति।** येन चिदात्मना विश्वं चेतयते चेतनाभवति। विश्वं तु यं न चेतयते न चेतनीकरोति स्वत एव चिद्रूपत्वात्। तत्र हेतुः अस्मिन् शयाने स्वपिति यो जागर्ति साक्षितया वर्तते। अहो चित्रं, नायं जनस्तं वेद स तु इमं वेद ॥९॥

तस्य भक्तिं दर्शयन् लोकस्य हितमुपदिशति - **आत्मेति।** आत्मना ईश्वरेणाऽऽवास्यं व्याप्यम्[15] स्वसत्ता चैतन्याभ्यां संव्याप्य विश्वं सर्वं जगत्यां लोके यत्किञ्चित् जगद्भूतजातम् अतस्तेनैवेश्वरेण यत्किञ्चित्[16]

1 ABGJ M MaT विश्वं 2-2 M Ma यच्चेतन्या आत्मना 3 M Ma यम् 4 M Ma किम् 5-5 ABGJT न यस्याद्यन्तौ मध्यं च M Ma यस्याद्यन्तौ न मध्यं च 6-6 ABGJT सर्वस्य व्ययव्यतिरेक M Ma सर्वस्य पाव्यतिरेक 7 ABGJT अथाग्र HV अग्रे तु 8 HV कर्माणि 9 M Ma हेतवे 10 ABGJT M MaT ईहन् हि 11 HV °र्थो 12 M Ma बुधे 13 M Ma नॄन् W नृणां हि 14 M MA सुदान 15 J Omits स्व 16 HV यत्

त्यक्तं दत्तं धनं तेनैव भुञ्जीथा[1] भोगान् भुङ्क्ष्व। यद्वा तेन हेतुना त्यक्तेन ईश्वरार्पणेनैव[2] भुञ्जीथाः न स्वार्थम् कस्यस्वित्कस्यचिदपि धनं मा गृधः माभिकाङ्क्षीः। यद्वा कस्यस्विदिति[3] कस्यान्यस्य धनमस्ति यतो धनाकाङ्क्षा क्रियेत[4]त्यर्थः। तथा च श्रुतिः - "ईशावास्यम्"(ईशा ३।१) इति श्लोकमेव ॥१०॥

ननु यदि मे[5] सर्वं व्याप्नोति तर्हि चक्षुरादिभिः किं न प्रतीयते तत्राह यमिति। यं पश्यन्तं जनश्चक्षुर्वा[6] न पश्यति चक्षुराद्यविषयत्वात्। नहि प्रमातारं प्रमाणं विषयीकरोतीति भावः। तथा च श्रुतिः - 'चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्' (बृह ३।४।४।१८)। ननु तर्हि घटनाशे देवदत्तस्य तद्विषयं चाक्षुषं ज्ञानमिवेश्वरस्यापि[7] स्वरूपभूतं तद्विषयं ज्ञानं नश्यतु तत्राह, यस्य तु पश्यतश्चक्षुर्ज्ञानं न रिष्यति, न नश्यति। तत्तदाकारेणोत्पन्नाया वृत्तेरेव नाशो न स्वतःसिद्धज्ञानस्य, नहि सवितृप्रकाशः प्रकाश्यनाशे नश्यतीति भावः। भूतानि निलयो यस्य तं सर्वान्तर्यामिणं तथापि सुपर्णं शोभनपतनमसङ्गमुपधावत भजध्वम् ॥११॥

तत्स्वरूपस्य[8] नित्यत्वमुपपादयन्नाह न **यस्येति**। अमून्याद्यन्तादीनि विश्वस्य यस्मात् भवन्ति विश्वं, च[9] येन यद्रूपम् अत[10] एव अव्यभिचारित्वात्, तदेव सत्यं महत्परिपूर्णं ब्रह्म ॥१२॥

ननु विश्वं चेत् तद्रूपं तर्हि तस्य कुतो जन्माद्यभावः स्वप्रकाशत्वं वा, कुतः[11] कथं[12] वा जगज्जन्मादिकर्तृत्वेन विकारित्वेन[13] सत्यत्वं पुराणत्वं वा[14] तत्राह **स** इति। स ईशोऽज[15] सत्यश्च स्वप्रकाशश्च पुराणश्च निर्विकारा विश्वं माया यस्य, पुरूणि हृतानि नामानि यस्य, तथाविधोऽपि यतोऽस्य विश्वस्य जन्मादि स्वशक्त्या मायया धत्ते तां च नित्यसिद्धया विद्यया उदस्य हित्वा निष्क्रिय एवास्ते ॥१३॥

**अथेति**। यस्मादयमीश्वरः कर्म कर्तृत्वादि[16] सत्यज्य नैष्कर्म्येणास्ते अतः[17] अस्माद्धेतोः ऋषयोऽप्यग्रे आदौ कर्माणि कुर्वन्ति। किमर्थं अकर्महेतवे मोक्षार्थम्। पाठान्तरे कर्मनाशाय हि यस्मात् ईहमानः[18] कुर्वाणः अनीहाम[18] अकर्मत्वम् ॥१४॥

नन्वीहमानः कर्मभिरवगुण्ठितः[19] कोशकार इव बध्यते[20] तत्राह **ईहत** इति, अतस्तमनुवर्तमाना ये ते नावसीदन्ति न विरज्यन्ते ॥१५॥

1 ABJ भोगान् 2 J Omits ए: 3 A adds अत्र 4 J इ 5 J Omits म 6 HV न 7 HV पश्यदृशा 8 ABJ तस्य स्व 9 HV Omit च 10 AB Omit अत 11 HJV Omit कुत 12 HV Omit कथं 13 HV रेण 14 ABJ च 15 Omit अज 16 ABJ कर्म 17 ABJ अत 18 18 HJV Omit 19 HV कु 20 ABJ तेव

तदेवं लोकानुग्रहाय विश्वसृष्ट्यादि यः करोति श्रीरामकृष्णाद्यवतारैश्च वेदोक्त[1]मर्यादया यो वर्तते[1] तं शरणं व्रजामीत्याह- **तमिति।** निज[2]वर्त्म नरावतारानुरूपो मार्गस्तत्र सम्यक् स्थितमत ईहमानं कर्माचरन्तम् तथाऽपि जीववैलक्षण्यमाह। निरहङ्कृतं निराशिषमनन्य चोदितर्मिति च । निरहङ्कारत्वे हेतुः। बुधम् निराशी[3]ष्ट्वे हेतुः पूर्णम्। अनन्यनियुक्तत्वे हेतुः प्रभुम्, तथाऽपि कर्मानुष्ठाने हेतुः नृन्स्वाचारेण शिक्षयन्तम्। तत्किमर्थ तत्राह - अखिलान् धर्मान् भावयति प्रवर्तयतीति तथा तम् ।।१६।।

**वीर०** तज्ञपितां मन्त्रोपनिषदमवाह - **येनेति।** विश्वं जगद्येन परमात्मना चेतयते प्रवृत्तिक्षमं भवति सत्तास्थितिप्रवृत्तिमद्भवतीत्यर्थः। यं परमात्मानं विश्वं कर्तृ न चेतयते तत्रोभयत्र हेतुमाह - य इति। अस्मिंल्लोके शयाने सति स्वात्मपरमात्मयाथात्म्यज्ञानाभावेन मायापारवश्येन देहात्मभ्रमादिना च शयानतुल्ये सति यो जागर्ति सर्वं युगपत्साक्षात्करोति अयं लोकस्तं परमात्मानं न वेद स तु परमात्मा लोकं वेद अत्र विश्वशब्दो जीववर्गपर अचेतनवर्गस्य परमात्मनाऽपि चेतनीकर्तुमशक्यत्वात्तस्य ज्ञातृत्वप्रसक्त्यभावेन नायं वेदेति निषेधायोगाञ्च। यथा अचेतनं न वेद तद्वत् चेतनोऽपि, न तं वेदेति दृष्टान्ताभिप्रायेण चिदचिदात्मकं जगत्परो वा, [4]चेतयते इत्यत्र 'चितीसंज्ञाने' इति ण्यन्तात्णिचश्चेति कर्तर्यात्मनेपद, तत्र शब्दादिविषय साक्षात्कारात्मकज्ञानं प्रकृत्यर्थं तदाश्रया जीववर्गस्तत्र कर्ता तदनुकूलव्यापारोऽन्तः प्रविश्य नियमनादिरूपो ण्यन्तार्थः तत्र कर्ता येनेति निर्दिष्टः परमात्मा, एवं च यदेतत्सर्वशब्दादिविषय साक्षात्कारात्मकं ज्ञानं तदनुकूलतयान्तः प्रविश्य नियन्तुः परमात्मनः अधीनमिति फलितोऽर्थः। एवं शब्दतः प्रवृत्तिस्तदधीनेत्युक्तम्, अन्तःप्रविश्य नियन्तृस्वरूपप्रयोजककर्तृत्वकथनेनैव जीववर्गस्य तम्प्रति शरीरत्वप्रतीत्या शरीरस्य आत्मायत्तसत्तास्थितित्वलाभा[5]त् एव च 'येन चेतयते विश्वं' इत्यनेन कृत्स्नं[5] जगत् तदायत्तसत्तास्थितिप्रवृत्तिमदित्युक्तं भवति। येना यदधीनसत्तादिमज्जगदेत एव यं न चेतयते न तं [6]स्वायत्तसत्तादिमन्तं करोतीति विश्वं चेतयते न यम् इत्यस्यार्थः। परमात्मनश्चेतयितृत्वे विश्वस्य तदभावे च नित्य प्रकृत्यपारवश्येन युगपत्सर्वसाक्षात्कर्तृत्वं हेतुतयोच्यते यो जागर्ति शयानेऽस्मिन्नित्यनेन येनो जागर्ति अत एव तं शयानो न वेद किन्तु जाग्रत् स एव नाद्विश्वं वदत्यर्थः। येन चेतयते इत्यस्य श्लोकस्य स्थाने क्वचित् पुस्तकेषु - 'वासुदेवो वसत्येष सर्वदेहेष्वनन्यदृक्। येनाय तपते विश्वं विश्ववीर्यं यतस्तप.'।। इति श्लोकः

1- -1 ABJ 'मर्यादाचरति 2 ABJ-ज च 3 HV 'शिष्ट्व' 4- -4 W Omit 5- -5 ABJ कृत्स्न 6 ABT स्वात्माय"

पठ्यते। तत्रायमर्थः - अनन्य दृ[1]गनन्यापेक्ष. युगपत्सर्वसाक्षात्कर्ता - सर्वेषु चिदचिदात्मकेषु देहेषु वसति यतस्तत [2]एष वासुदेवः। वासुदेवशब्दप्रवृत्तिनिमित्ताश्रयः तत्र अनन्यदृगित्यनेन देवशब्दार्थः उक्तः। अन्यानपेक्षस्वतेजसा दीप्यमानत्वं हि देवशब्दार्थः, वसत्येष सर्वदेहेष्वित्यनेन वासु शब्दार्थ उक्तः इदमधिकरण व्युत्पत्तिरप्युपलक्षणं वसतीति वासु वसन्त्यस्मिन्निति वा वासुरिति द्वेधा व्युत्पत्तेस्तत्र तत्र प्रदर्शितत्वात् । अनन्यदर्शन विशिनष्टि - येनानन्यदर्शनेनायं वासुदेवो विश्वं तपते पर्यालोचयति विश्वस्य सृष्टि - स्थित्यादिकमालोचयतीत्यर्थः। येन एवम्भूतमनन्यदर्शनं तेन तपः विश्वपर्यालोचनात्मकत्वमापन्नम्। अनन्यदर्शन विश्वेवायं कृत्स्नस्य चिदचिदात्मकविश्वस्य कारणभूतमिति येन चेतयते इत्यनेनान्तः प्रविश्य नियन्तृत्वमप्य प्रयोजयितृत्वं सूचितम् ।।९।।

तदेव व्यञ्जयन् लोकं शिक्षयमाणम् "ईशावास्यमिदं सर्वम्" (ईशा उ।) इति मन्त्रमेव श्लोकरूपेण [3]पठति **आत्मेति।** ईशशब्दस्थाने आत्मशब्दपाठ एव विशेषः। जगत्यां यज्जगत् चेतनाचेतनात्मकं सर्वमिदं यस्तु आत्मना परमात्मनाऽन्तः प्रविश्य नियमनपूर्वकं भर्त्रा आवास्यम् अधिष्ठेयं यतः सर्वमात्मवास्यमतस्तेन परमात्मनात्यक्तः अनधिष्ठितःब्रह्मात्मकं स्वतन्त्रं वस्तुनि न भुञ्जीथाः, नानुभवेः अब्रह्मात्मकं स्वतन्त्रं वस्तु न मन्यस्वेत्यर्थः। कर्मणि एतानुभागविषयत्व विवक्षया त्यक्त इति सप्तमी प्रयुक्ता, मागृधः तच्छेषभूतं सर्वं देहतदनुबन्ध्यादिकं स्यात्मशेषत्वेन माकाङ्क्षीरित्यर्थः। कृत्स्नस्य तच्छेषत्वमेव काक्वा दर्शयति-कस्य स्विद्धनमिति। कृत्स्नमात्मात्मीयादिकं कस्य स्विद्धनं न कस्यापि स्व किन्तु तस्यैवेति भावः ।।१०।।

यो नागतीति सर्वसाक्षात्कर्तृत्वं सूचितम् । तदेव व्यञ्जयन् तमेव भजनीयं भजत, हे लोकाः! इत्याह- **यमिति।** यस्य चक्षुर्ज्ञानं न रिष्यति न क्षयमाप्यति जीवस्येव न सङ्कोचं यास्यतीत्यर्थः। अत एव नित्यमसङ्कुचिता परिच्छिन्नज्ञानेन युगपत्सर्वं पश्यन्तं साक्षात्कुर्वन्तं य न पश्यति कर्मणा सङ्कुचितज्ञानो लोकः न साक्षात्करोति तं सर्वज्ञमप्रापणाऽनिष्टनिवर्तनक्षमं देवं स्वतेजसा दीप्यमानं भूताना निलयमाश्रयं धारकमिति यावत् सुपर्णं "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" (मुण्ड उ. 3-1-1) इति सुपर्णत्वेन रूपितम्। अनेन जीवाविनाभावेन तदन्तरात्मतया तद्धितकारितया च अवस्थितमिति लभ्यते, उपधावत भजते[4]।।११।।

1 ABI 'गन्यात्म' 2 ABI एव 3 ABI पठति 4 ABI add इति

'तेन त्यक्तेन भुञ्जीथा' इति सर्वस्य तदात्मकत्वेन तद्व्यतिरिक्तं स्वनिष्ठं वस्तु नास्तीत्युक्तम्। अथ सर्वस्य तत्कारणकत्वाच्च न तदन्यदित्याह - नेति। तस्य सर्वकारणत्वं वक्तुं तस्यापि कारणान्तरशङ्कां व्युदस्यति। न यस्याद्यन्तौ मध्यञ्चेति, कार्यमेव वस्त्वाद्यन्तादिमध्यवत्स्वयमाद्यादिविरहात्सर्वकारणमित्यर्थः। कारणत्वञ्च निमित्तत्वरूपमुपादानत्वरूपं चोभयमप्यभिप्रेत तत्र निमित्तत्वप्रयुक्तं वैषम्यं परिहरति - स्वः परश्च यस्य नास्तीति, देवमनुष्यादि वैचित्र्यस्य तत्तज्जीवकर्ममूलकत्वान्न तस्यानुग्राह्यो निग्राह्यश्च स्वतोऽस्तीति भावः। "अनेन जीवेनात्मनानुप्रविश्य" (छान्दो.उ. 6-3-2) इत्यादि श्रुत्यवगतं सृष्टेः अनुप्रवेशपूर्वकत्वं सूचयन् जीवानुप्रवेशयोग्यतामाह - यस्य नान्तरं बहिरिति तिलेषु तैलस्येव वेद्यामग्नेरिव न व्यवस्थिता व्याप्तिः किन्तु बहिरन्तस्साधारण्येन यस्य जीवादिषु व्याप्तिरित्यर्थः। यस्मादेवं भूतात् परमात्मनः विश्वस्याऽऽनि आद्यन्तमध्यानि सृष्टिलयरक्षणानि भवन्ति। यस्मादिति हेत्वर्थे पञ्चमी। यतो हेतु भूतादुपादानात् विश्वस्यादिः यतो यस्मिन् हेतुभूतेऽधिकरणे विश्वस्य लयः यतो येन हेतुभूतेन कर्त्रा, विश्वस्य रक्षणं भवतीत्यर्थः। यत् यत एवं विश्वोपादानभूतस्तस्माद्विश्वमपि तदेव तदनन्यदेव जगदाकारेण परिणत स एव अवतिष्ठत इति ततोऽनन्यदेव जगदित्यर्थः उपादानत्वप्रयुक्तं विकारित्वं परिहरति - ऋतमिति। ऋतं सत्य स्वरूपतः स्वभावतश्च विकाररहितमित्यर्थः। विकाराणां स्वशरीरभूतचिदचिद्द्वारकत्वात्स्वतो निर्विकारमेव कारणत्वोपयुक्तसर्वज्ञत्वसर्वशक्तित्वादि गुणयोगमाह - महदिति। गुणैर्महत् निरतिशयबृहदित्यर्थ. ॥१२॥

श्लोकचतुष्टयप्रतिपादित विशेषण - सामर्थ्यलब्धगुणविशेषैः सम्भूय विशिनष्टि स इति। सः श्लोक चतुष्टयगतयच्छब्दैर्निर्दिष्टस्य प्रतिनिर्देशपरः तच्छब्दः विश्वं काय शरीरं यस्य विश्वकायः, अत एव पुरुभिर्देवमनुष्यादिनामभिः शरीरवाचिभि आत्मपर्यन्तबोधकैः शब्दैः[1] हूयतेऽभिधीयत इति पुरुहूतः, सत्यः निर्विकारः, विश्वकायोऽपि विश्वगतविकारैः अस्पृष्ट इत्यर्थः। ईशः सर्वावस्थ चेतनाचेतनयोः नियन्ता, स्वयं ज्योतिः। स्वप्रकाशः अनन्यापेक्षप्रकाश इत्यर्थः। अज जीववत्कर्मायत्तोत्पत्ति रहितः पुराणः जगत्कारणभूतः पुरापि न वो वा, अस्य विश्वस्य जन्मादिकामात्मन स्वस्य शक्त्या अंशभूतया अजया प्रकृत्या करोति, ताञ्च अजां विद्यया नित्याविर्भूतापरिच्छिन्नस्वयाथात्म्यविषयक ज्ञानेनादस्य परिहृत्य तदपरवशो भूत्वा निरीहः जीववदीहारहितः स्वानन्दानुभवपूर्त्या अवाप्तसमस्तकामाऽनादृतकामः "सर्वमिदमभ्यात्तोऽवाक्यनादरः" (छान्दो.उ. 3-14-2,3) इति श्रुतेः। आस्ते सर्वान्तरात्मतयाऽवतिष्ठतीत्यर्थ. ॥१३॥

1 W Omits शब्दै

निरीह आस्ते इत्येतदेव व्यञ्जयितुं तावज्जीवस्य तदभावमाह - **अथेति**। अथ नन्वग्रे प्रथममृषयो जीवा प्रवृत्त्वात् कर्म हेतवे कर्महेतुर्यस्य तस्मै कर्मसाध्यसुखरूपफलार्थं कर्माणीहन्ते फलसाधनतया कुर्वन्तीत्यर्थः। अनेन जीवस्यापरिपूर्णत्वं सूचितं, कर्मानुसारि बुद्ध्यायत्त प्रवृत्तिमज्जीव प्रेरयितृत्वाञ्च परमात्मनः प्रथमं जीवस्यैव प्रवृत्तरग्रे ऋषयः कर्माणीहन्ते इत्युक्तम्। एवमीहमानोऽपि पुरुषो जीवः प्रायशोऽनीहां प्रपद्यते, स्वाविहितकर्मसाध्य फले निस्पृहां प्रायः प्रपद्यते, सुखार्थतया कृतैः कर्मभिः दुःखप्राप्तौ तत्र निस्पृहामेव, प्रायशः प्रतिपद्यत इत्यर्थः। सुखार्थतया विहितानां कर्मणां प्रायशो दुःखजनकत्वदर्शनात् "प्रायोऽनीहां प्रपद्यते" इत्युक्तम्।।१४।।

भगवान् षाड्गुण्यपरिपूर्णः ईशः परमात्मा तु ईहते जीवकर्मानुगुणमन्तरात्मतया यद्यपि प्रेरयति तथाऽपि न हि तत्र विषज्जते स्वप्रेर्यजीवकर्मसाध्ये फले रक्तो न भवति तत्र हेतुं वदन् तं विशिनष्टि। आत्मलाभेन नित्यं स्वानन्दानुभवलाभेनैव पूर्णः समग्रः अर्थः पुरुषार्थो यस्य तादृशः अतो न विषज्जत इत्यर्थः। न केवलं स एव न विषज्जतेऽपि तु तमनु ये तमनुवर्तमाना ये जनास्तेऽपि नावसीदन्ति कर्मफलेषु सक्ता न भवन्ति परमात्मन आत्मलाभपरिपूर्णार्थत्वेन कामानासक्तयोन्या जीवस्याऽपूर्णत्वमेव संहत्वे हेतुरित्युक्तं भवति ईहमानोऽप्यनीहां प्रपद्यत इत्यनेन जीवस्य सुखे स्पृहा दुःखे तु निःस्पृहेत्युक्तम् ।।१५।।

उक्त विशेषणसामर्थ्य लक्षणेन विशेषे विशेषन् शरणं व्रजति **तमिति**। तम् उक्तविधम् ईहमानं जीवकर्मानुगुणं प्रयत्नं निरहङ्कृतमहङ्काररहितं बुधं सर्वज्ञं निराशिषं निरीहं पूर्णमात्मलाभेनैव पूर्णम् अनन्यचोदितमनन्यप्रेर्यं स्वान् स्वानुवर्तिनो भक्तजनान् शिक्षयन्तं स्वसमानान् आपादयन्तं निजवर्त्मसंस्थितं स्वस्वभावसंस्थितं प्रभुं सर्वशक्तिम् अखिलान् धर्मान् भावयति पालयतीति तम् अहं प्रपद्ये शरणं व्रजामि।।१६।।

**विज०** कीदृशोऽत्यताऽर्थतः तामुपलक्षयति **येनेति**। अयमादित्यो येन हरिणा प्रेरितो विश्वं तपते प्रकाशयति विश्वस्य वीर्यं वीर्यप्रदं तपो यतो भवति अस्मिन् सूर्ये शयाने निद्रामाचरति सति यो हरिजागर्ति अयं सूर्यस्तं हरिं न वेद, स हरिः तमादित्यं वेदेत्यन्वयः। "भयात्तपति सूर्यः" (कठ उ. ६-३) "भीषोदेति सूर्यः" (तैत्ति.उ २-८) इति श्रुतेः। यो न वेदति वेदति च अनेन "आप्राद्यावापृथिवी अन्तरिक्षम्" (ऋग्वे.1-115-1) इत्यादि श्रुति प्रतीत सर्वाधिपत्याऽऽदित्यस्य श्रीहर्यधीनत्व वर्णनेन निरतिशयमाहात्म्य युक्तं हरिरिति ज्ञातव्यं, अयं वो येन नियतो विश्वं सुखदुःखादिकं तपते अनुभवति "तप आलोचने" इति धातुः। आलोचनं ज्ञानं स एवाऽनुभवः।

"स्वाद्वत्यनश्नन् अन्यो अभिचाकशीति" (मुण्ड.उ. 3-1-1) इति श्रुतेः। हरिनियत अनुभवतीति कुत इति तत्राह विश्ववीर्यमिति। विश्वस्य वीर्यभूतं तपोऽनुभवो यस्मद्भवति "एष ह्येव आनन्दयाति"(तैत्ति.उ. 2-7) इति श्रुतेः आनन्दयति सुखयति, जीवमिति शेषः, तस्मादित्यर्थः अस्मिन् जीवे शयाने सति "सतासौम्य" (छान्दो.उ. 6-8-1) इति श्रुतेः। यो जागर्ति "न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः (माण्डू.उ.कारिका. 14) इति श्रुतेः, "तस्मादेनं स्वपितीत्याचक्षते" (छान्दो.उ. 6-8-1) इति च। अयं जीवस्तं न वेद। "न तत्र चक्षुर्गच्छति न वाक् वा गच्छति न मनो न विद्म न विजानीम" (केन.उ. 1-6) इति श्रुतेः। स हरिः सर्वं वेद "यः सर्वज्ञः" (मुण्ड.उ. 1-1-9) इति श्रुतेःइति वा।।९।।

न राज्यादिवत् सूर्यप्रेरकत्वं हरेः किन्तु तदन्तस्थितित्वेनापीत्याभिप्रेत्याह **आत्मेति**। इदं सूर्यादि विश्वम् आत्मन ईशस्यावास्यम् आवासयोग्यं स्वसृष्टत्वात् इदमित्यनेन कियत्कवलीक्रियते इति तत्राह - यज्जगत्यामिति। जगत्यां प्रकृतौ यज्जगत् स्थावरजङ्गमलक्षणं प्रकृतावित्युक्त्योत्पन्नमनुत्पन्नं च यत्सर्वं स्वव्यतिरिक्तं कवलीक्रियते प्रकृतिरावास योग्येति कैमुत्यन्यायेन सिद्धा "प्रकृतिं पुरुषं च" (भ.गी. 13-19) इति वचनाच्च। अस्त्वावासयोग्यत्वं ततः किं तत्राह-मन इति। हे मनः यत इदमीशस्य विद्यमानं तेन कारणेन तेनेशेन त्यक्तेन दत्तेन धनेन भुञ्जीथाः स्वीकुरु, शरीरयात्रामिति शेषः। यतस्त्वं तदधीनसत्ताकः अत एवं न कुर्वित्याह - मागृध इति। कस्य परमानन्दरूपस्य हरेः चिदानन्दस्वरूप ज्ञानलक्षणं धनं मागृधः तेनैक्यमाप्नुवानीत्याकाक्षां न कुरु। अतोऽनर्थहेतुत्वादित्यर्थः। भगवता दत्तं (१) कस्यचिद्धनं मदीयमिति श्रद्धां न कुर्विति वा। "ईशावास्यम् "(ईशा.उ. 1) इति श्रुतिः।।१०।।

ननु किमस्य लक्षणं येन तत्सद्भावे - नेदं तदावास्यं स्यादिति तत्राह - **यन्नेति**। स्वप्रसादमन्तरेण अज्ञेयत्वं सर्वज्ञत्वं नित्याविनष्टचक्षुष्ट्वञ्च तस्यैव लक्षणं मुख्यं "अदृश्यऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" (तैत्ति.उ. 2-7-1) "यच्चक्षुषानपश्यति येन चक्षूंषि पश्यति" (केन.उ. 1-1-7) इति श्रुतेः। न रिष्यति न नश्यति सुपर्णं पूर्णानन्दं उपधावत भजत ।।११।।

लक्षणान्तरमाह - **यस्येति**। पर इत्युपलक्षणं अपरोऽपि परोऽपि च अत्र परापरवस्तुनोः स्वातन्त्र्यं निषिध्यते न तु शून्यत्वं तदृतं महत् ब्रह्मेत्यर्थः। "तदेवर्तं तदु सत्यमाहुः" (म.ना.उ. 1-6) इति श्रुतिः ।।१२।।

इदं च ब्रह्मलक्षणमित्याह - **स विश्वेति**। आत्मशक्त्या आत्मभार्यया प्रकृत्यास्य जगतो जन्मादि धत्ते

1-

**यश्च** तां प्रकृतिं विद्ययोदस्य निरस्य निरीहः सृष्ट्यादिशून्य आसते स ब्रह्मनामा परमात्मेत्यन्वयः। प्रलये विश्वं कायं यस्य विश्वकायः उदरान्तर्गतप्रपञ्च इत्यर्थः। सृष्टौ विश्वमेव काय शरीरं यस्य स तथा प्रतिमास्थानीय प्रपञ्च इत्यर्थः। अत पुरुहूतः पुरूणि बहूनि हूतानि नामानि यस्य स तथा "सर्वनामा सर्वकर्मा" इति श्रुतिः। सर्वनामवाच्यत्व हेतुगर्भ इति। तत्तच्छब्द प्रवृत्तिनिमित्तसामर्थ्योपेत इत्यर्थः। ननदापचारिकामित्याभप्रत्याह - सत्यमिति। तत्तन्नामवाच्ये[2] तत्तत्साधुगुणसद्भावे सामर्थ्यमिदमस्तीति वक्तुमुचितं स एव कथमित्यत आह सत्यमिति। साधुगुणपूर्णम इदं च लक्षणान्तरं परञ्ज्योतिरिति। "परञ्ज्योतिरूपं सम्पद्यते" इति श्रुत्या मुक्तप्राप्यत्वमुच्यते तदेवाननाच्यत इति परञ्ज्योतिः सूर्यादिरन्यतमः किं न स्यादित्यत[3] अज पुराण इति।।१३।।

एवं सिद्धे यस्मात् तत्साधनतत्त साधनमाह - **अथेति**। यतो ज्ञानप्रतिबन्धके दुष्कर्माणि सति सर्व दुस्साधनं स्यादिति। अथ लोक सङ्ग्रहार्थं क्रियया[4]ऽग्र कर्मैतत्त्वं दुष्कर्मपरिहाराय यागादि कर्मणीहन्ते कुर्वन्तीति विज्ञाय ज्ञानार्थी पुरुष ईहमान कर्म कुर्वाणो विधुत दुष्कर्मा ऽनीहां निवृत्तिपदवीं प्राप्य प्रायो बहुलं ज्ञान प्रपद्यते इत्यन्वय। कोऽश्चित्फलार्थी अन्यथाऽपि भवतीति प्राय इत्युक्तम्। अनेन "कुर्वन्नेवेह कर्माणि" (ईशा उ 3-2) इति श्रुतिगृहीता। आचार्यकुलाद्वेदमधीत्य यथा विधानं गुरोः कर्माणि रतिविशेषेण समावृत्य कुटुम्बी शुचौ देशे स्वाध्यायमधीयानो धार्मिको विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्रतीर्थेभ्य "स खल्वेवं वर्तयन्यावदायुषम्" (छान्दो.उ 8-15-1) इति श्रुतिः हिशब्देन गृहीता ।।१४।।

न केवलमेषय एव लोकसङ्ग्रहार्थं कर्माण्याचरन्ति अपि तु श्रीहरिरपीति भावेन आह ईहते इति। कर्मानभिषङ्ग वैमुख्यन्यायमाह नावसीदन्तीति। य तमनुवर्तन्ते तेऽपि नावसीदन्ति इति किमुत श्रीहरिरित्यन्वय ।।१५।।

पुरुषेण फलानिच्छता कर्म कर्तव्य मात्मविदति भावेन स्तौतीत्याह- **तमीहमानमिति**। बुधे ईहमानं निजवर्त्मसंमृद्धा स्तत्कर्म शिक्षयन्त प्रभु प्रपद्ये इत्यन्वय ।।१६।।

1- 1 A B Ma Omit 2 A B ... Ma ... 3 Ma Omits ... 4 Ma ...

## श्रीशुक उवाच

इति मन्त्रोपनिषदं व्याहरन्तं समाहितम्।
दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्षुधा[1]।।१७।।

तां स्तथाऽवसितान् वीक्ष्य यज्ञस्सर्वगतो हरिः।
यामैः परिवृतो देवैर्हत्वाऽशासत् त्रिविष्टपम् ।।१८।।

स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत्।
द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः।।१९।।

तत्रेन्द्रो रोचनस्त्वा[2]सीद् देवाश्च तुषितादयः।
ऊर्जस्तम्भादयस्सप्त ऋषयो ब्रह्मवादिनः।।२०।।

ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत्।
तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः।।२१।।

अष्टाशीति सहस्राणि मुनयो ये धृतव्रताः।
अन्वशिक्षन्व्रतं तस्य कौमारब्रह्मचारिणः।।२२।।

तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः।
प[4]वनः सृञ्जयो यज्ञ होत्राद्यास्तत्सुता नृप!।।२३।।

वसिष्ठतनयास्सप्त ऋषयः प्रमदा[5]दयः।
सत्या दे[6]वश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ।।२४।।

**श्रीध० इतीति।** समाहितमपि सन्तं मन्त्रोपनिषदं [7]मन्त्ररहस्यं[7] व्याहरन्तं दृष्ट्वा सुमो[8]त्थितवद्विवशमिव मन्वाना असुरा यातुधानाश्च क्षुधा निर्मितेन जग्धुमत्तुमभ्यद्रवन्नभिदुद्रुवु.।।१७।।

**तानिति।** यामैः स्वपुत्रैः। त्रिविष्टपं स्वर्गमपालयत् स्वयमेवेन्द्रो बभूवेत्यर्थः। तत्र प्रतिमन्वन्तरं मन्वादयः षडन्[9]यं भवन्ति। तथा हि सुतां द्वादशो वक्ष्यति। "मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः

1 M Ma कृपा 2 M Ma श्रा 3 M Ma अत्र W ओत्र 4 H V ग 5 H V "धा 6 ABGJ M Ma T वद"
7- -7 H V, Omit 8 ABJ च्युसि 9 ABJ add अन्य

**ऋषयोऽशावतारश्च** हरेः षड्विधमुच्यते"(भाग. 12-7-15) इति। तत्राद्यो[1] हि **स्वायम्भुवो** मनुः। प्रियव्रतोत्तानपादौ मनुपुत्रौ। यामादयो देवाः। मरीचिप्रमुखाः सप्त ऋषयः। यज्ञो हरेरवतारः **इन्द्रश्च स एवेति** तन्मन्वन्तरं षड्विधमनन्त[2] तच्च[3] चतुर्थस्कन्धोपक्रमे निरूपितम्।।१८।।

द्वितीयादिषु त्रिषु मन्वन्तरेषु मन्वादि षट्कमाह - **स्वारोचिषो द्वितीयस्त्विति**। यावत् गजेन्द्रमोक्षप्रश्नम् ।।१९-२१।।

त्रिभागसाधारणं चरितमाह - **अष्टाशीति सहस्राणि** इति।।२२-२४।।

**वीर०** इति इत्थं मन्त्रात्मिकामुपनिषदं व्याहरन्तं जपन्तं समाहित चित्तं स्वयम्भुवं मनुं दृष्ट्वा असुरा यातुधानाश्च क्षुधा निमित्तेन जग्धुमनुमभ्यद्रवन् ।।१७।।

तथाऽभिसृतान मनु हन्तु समुपद्रुतांस्तानसुरान् यातुधानाश्च दृष्ट्वा सर्वगतः सर्वान्तरात्मा भगवान् यज्ञाख्यः यामैः युगपत प्रसूतैः स्वपुत्रैर्देवैः परिवृतः तान् हत्वा त्रिविष्टपं स्वर्गमशासत् अपालयत् स्वयमेव इन्द्रो बभूवेत्यर्थः। तत्र प्रतिमन्वन्तरं मन्वादयः षडन्ये अन्ये भवन्ति तथाहि सूतो द्वादशे वक्ष्यति - "मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः। ऋषयोऽशावताराश्च हरेः षड्विधमुच्यते"।। (भाग. 12-7-15) इति।

तत्राद्यः स्वायम्भुवो मनुः प्रियव्रतोत्तानपादौ मनुपुत्रौ तोषप्रतोषसन्तोषभद्रशान्तीडस्पतीध्मकवि विभुस्वह्नु सुदेव रोचनाख्या द्वादश यज्ञस्य पुत्रा एतत्प्रभृतयो देवाः मरीचिप्रमुखाः सप्तर्षयः यज्ञो हरेरवतारः इन्द्रश्च स एव यद्यपि पृथगिन्द्राभावात् षाड्विध्यं नास्ति, तथाऽपि अत्र मन्वन्तरे यज्ञो भगवानेव इन्द्राधिपत्यं जगद्रक्षणाऽधिकृतवानिति तदधिकारद्वयमपेक्ष्य षाड्विध्यमुपपादनीयम्।।१८।।

द्वितीयादिषु त्रिषु मन्वन्तरेषु मन्वादिकमाह - **स्वारोचिष** इति। यावद्गजेन्द्र मोक्षप्रश्नम्। अग्नेः सुतः स्वारोचिषाख्यः मनुर्द्वितीयोऽभवत - द्युमदादयस्तस्यात्मजाः ।।१९।।

तत्र द्वितीये मन्वन्तरे रोचनो भगवतो यज्ञस्य पुत्र एवेन्द्रो बभूव, देवास्तु तद्व्यतिरिक्तास्तुषितसंज्ञास्तोषादयः एकादश, आदिशब्दादन्ये च अभवन् ओर्जस्तम्भादयः सप्त ब्रह्मवादिनो **ऋषयो बभूवुः**। एवं मन्वादयः **षडुक्ताः** ।।२०।।

1 ABJ°शऽष 2 ABJ न 3 ABJ तच्चतु

अथावतारमाह - **ऋषेरिति**। वेदशिरसः ऋषेस्तुषितेति प्रसिद्धा भार्या बभूव। तस्यां तुषितायां भगवान्देवैः प्रार्थित [1]इति शेषः[1]। विभुरिति प्रसिद्धो जज्ञे ।।२१।।

विभोर्भगवतोऽसाधारणं चरित्रमाह - **अष्टाशीतीति**। तस्य कौमारब्रह्मचारिणः तस्य विभ्वाख्यस्य भगवतो व्रतमाचार मन्वशिक्षन्ननुसृतवन्तः ।।२२।।

प्रियव्रतस्य सुतः उत्तमाख्यस्तृतीयो मनुः, तस्योत्तमस्य मनोः सुताः सवनादयः [2]अभवन् ।।२३।।

प्रमदादयः वसिष्ठस्य सुताः सप्तर्षयः सत्यादि [3]संज्ञिकाः देवगणाः इन्द्रस्तु सत्यजिदाख्यः।।२४।।

**विज०** मन्त्रवर्णेन युक्तोपनिषदम् ।।१७-१८।।

तस्य स्वारोचिषस्य ।।१९।।

नाम्ना रोचनः ।।२०।।

नाम्ना विभुः ।।२१।।

तस्य विभोः ।।२२-२४।।

**धर्मस्य सूनृतायां तु भगवान्पुरुषोत्तमः।**
**सत्यसेन इति ख्यातो जातः सत्यव्रतैस्सह।।२५।।**

**सोऽनृतव्रतदुश्शीलानसतो यक्षराक्षसान्।**
**भूतद्रुहो भूतगणांश्[4]चावधीत् सत्यजित्[5]सखः।।२६।।**

**चतुर्थ उत्तमभ्राता मनुर्नाम्ना[6]ऽथ तामसः।**
**[7]वृषा ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः।।२७।।**

**सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः।**
**ज्योति [8]र्व्योमादयस्सप्त ऋषयस्तामसेऽन्तरे।।२८।।**

**देवा वैधृतयो नाम विधृतेस्तनया नृप।**
**नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा।।२९।।**

1- -1 W Omits 2 W Omits अभवन 3 A,B,T संज्ञका 4 A,B,G,J, M,Ma, T. स्थ्या" 5 ,M,Ma "त्मुत
6 A,B,G,J, M,Ma, T च 7 M,Ma "व" 8 A,B,G,J,T पृथु M,Ma वृष 9 A,B,G,J,T "र्धामाद M,Ma "र्धानाद"

**तत्रापि जज्ञे भगवान्हरिण्यां हरिमेधसः।**
**हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात्॥३०॥**

**श्रीध० स** इति। सत्यजित इन्द्रस्य सखा सन् ॥२५-२६॥

**चतुर्थ** इति। उत्तमस्तृतीयो मनुः तस्य भ्राता [1]तामसश्चतुर्थो मनुः[1] ॥२७॥

**सत्यका** इति। त्रिशिखो[2]नामा ईश्वर इन्द्रः [3]आसीत् ॥२८॥

अन्यानपि विशिष्टपराक्रमान् [4]सुरान आह - **देवा वैधृतय** इति॥२९॥

**तत्रेति**। [5]हरिमेधसः पत्न्यां हरिण्यां नाम्नी[5] हरिरित्याहृतो व्याहृतः। ग्रहात् ग्राहात् ॥३०॥

**वीर०** अथतारस्माह - धर्मस्य सूनृताख्यायां भार्यायां भगवान्पुरुषोत्तमः सत्यसेनाख्यो जातः, सः सत्यव्रतादिभिः देवैः सहितः सत्यजित इन्द्रस्य सखा भूत्वा यक्षराक्षसानवधीत् ॥२५॥

तान् विशिनष्टि - **स** इति। अनृतमेव व्रतं येषां ते दुष्टं शीलं येषां ते दुःशीलाः, ते च ते तान् असतः दुरात्मनः भूतानि द्रुह्यन्तीति तथा तान्॥२६॥

चतुर्थस्तु मनुरुत्तमस्य भ्राता प्रियव्रतसुतः स च नाम्ना तामस इति प्रसिद्धिः। वृषादयो दश तस्य तामसस्य मनोः सुताः ॥२७॥

सत्यकादिसंज्ञा देवगणाः, त्रिशिखः ईश्वर इन्द्रः ॥२८॥

अन्यानपि विशिष्टपराक्रमान्सुरानाह - **देवा** इति। हे नृप! विधृतेस्तनया वैधृतय इति प्रसिद्धा स्तामसे मन्वन्तरे देवा बभूवुः तान्विशिनष्टि यैर्वैधृतिभिः स्वेन तेजसा स्वबुद्धिबलेन वेदा विधृताः, कथम्भूताः। कालेन नष्टा विप्लुताः अध्ययनपरम्पराद्यभावादिति भावः। एवं मन्वादयः पञ्चोक्ताः ॥२९॥

अथतारस्माह - **तत्रापीति।** चतुर्थेऽपि मन्वन्तरे हरिमेधसा भर्त्रा हरिण्यां भार्यायां भगवान् हरिरित्याहृतः व्याहृतः स्वाख्यो जज्ञे प्रश्नावसरं प्रयच्छन् तं विशिनष्टि येन हरिनाम्ना भगवता ग्रहात् मकरात् गजेन्द्रो मोचितः ॥३०॥

**विज०** सत्यजितन्द्रेण सृतः ॥२५-२९॥

आहृतः आहूतः ॥३०॥

1--1 HJV Omit 2 HJV Omit नाम 3 HJV Omit आसीत् 4 ABJ देवाः 5--5 HJV Omit

परीक्षिदुवाच[1]

**बादरायण एतत्ते श्रोतुमिच्छामहे वयम् ।**
**हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ।।३१।।**

**त[2] त्कथा सुमहत्पुण्यं[2] धन्यं[3] स्वस्त्ययनं[4] शुभम्।**
**यत्र यत्रोत्तमश्लोको भगवान्गीयते हरिः।।३२।।**

सूत[5] उवाच

**परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः।**
**उवाच विप्राः प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम् ।।३३**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे मन्वन्तरानुचरिते प्रथमोऽध्यायः ।।१।।

**श्रीध० बादरायण** इति। अमूमुचत् मोचयामास।।३१।।

**तदिति।** श्रवणेच्छायां हेतुः। तत्कथासु तासु कथासु। सा कथैव वा सुमहत्पुण्यम् पुण्यस्य विशेषणं धन्यमित्यादि।।३२-३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां प्रथमोऽध्यायः।।१।।

**वीर० लब्धावसरः** पृच्छति राजा - **बादरायण** इति। हे बादरायण! वयं मतच्छ्रोतुं मिच्छामहे। किन्तत् ? हयाख्यो भगवान् यथा ग्राहग्रस्तं गजेन्द्र ममूमुचत् मोचयामासेत्येतत् ।।३१।।

श्रवणेच्छायां हेतुं वदन् पृष्टं विशिनष्टि - **तदिति।** तन्मया पृष्टं गजेन्द्रमोक्षणरूपं हरेश्चरित्रं कथासु मध्ये महत्पुण्यम्। यद्वा तत्कथा गजेन्द्रमोक्षणरूपा मया पृष्टा कथा सुमहत्पुण्यं महापुण्यावहं महच्छब्दस्य आत्वाभाव आर्षः। सामान्याभिप्रायेण प्रतिनिर्देश नपुंसकनिर्देशः। धन्यं धनावहं कृतार्थत्वावहं वा, स्वस्त्ययनं शुभावहम् ! अत एव महत् गुणवत्तमं पुण्यत्वादिकं श्रवणपठनद्वारेत्यवगन्तव्यम्। पुण्यत्वादौ हेतुमाह -

1- -1 A,B,G,J, M,Ma,T गजोवाच 2- -2 M,Ma तत्कथास्सुमहा पुण्या धन्या 3 M,Ma ना 4 H,V, शिवम W, महत M,Ma शुभा । 5 W, श्रीशुक

यत्रेति। यासु यासु कथासु हरिर्गीश्रुताघहरो भगवान् गीयते सा सा कथा पुण्यादिगुणयुक्ता हीत्यर्थः। यद्वा - यत्र यत्र कथायां हरिर्गीयते सा सा पुण्यादिगुणयुक्ता। अतो गजेन्द्रमोक्षकथायामपि हरिर्गीयत एवेति साऽपि पुण्यावहा। अत स्तामपि शुश्रूषितां कथयेत्यर्थः ।।३२।।

एवं सापृष्टगजेन्द्रमोक्षकथा भगवान् बादरायणिः तां कथयामासेत्याह सूतः - **परीक्षितेति**। हे विप्राः! प्रायोपविष्टेन परीक्षिता राज्ञा कथाम् हरिकथाकथन चोदितः प्रवर्तितः स बादरायणिः व्यासपुत्रः एवमित्थं, पृष्ट इति शेष । प्रार्थितं परीक्षितं प्रतिनन्द्य, अहो साधु पृष्टम् इत्यभिनन्द्य सदसि सभायां मुनीनां शृण्वतां स तां मुवाच, प्राह, कथामिति शेष ।।३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां प्रथमोऽध्यायः ।।१।।

**विज०** हे विप्रा ! इति सूत शौनकादीन् सम्बोधयति ।।३२-३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे

श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्या

टीकायां प्रथमोऽध्यायः ।।१।।

oooOooo

# द्वितीयोऽध्यायः

## श्रीशुक उवाच

आसीद्गिरिवरो राजन् त्रिकूट इति विश्रुतः।
क्षीरोदेनावृतःश्रीमान् योजनायुत मुच्छ्रितः।।१।।

तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम्।
दिशश्च रोचयन्नास्ते रौप्यायसहिरण्मयैः ।।२।।

अन्यैश्च ककुभस्सर्वा रत्नधातुविचित्रितैः।
नानाद्रुमलतागुल्मैः निर्घोषैर्निर्झराम्भसाम्।।३।।

स चावनिज्यमानाङ्घ्रिः समन्तात्पय ऊर्मिभिः।
करोति श्यामलां भूमिं हरिन्मरकताश्मभिः।।४।।

सिध्दचारणगन्धर्वैः विद्याधर महोरगैः।
किन्नरैरप्सरोभिश्च क्रीडद्भि र्जुष्टकन्दरः।।५।।

यत्र सङ्गीतसन्नादैः नंदद्गुहममर्षया।
अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया।।६।।

नानारण्य पशुव्रात सङ्कुलद्रोण्यलङ्कृतः।
चित्रद्रुमसुरोद्यानकलकण्ठविहङ्गमः।।७।।

सरित्सरोभि रच्छोदैः पुलिनैःमणिवालुकैः।
देवस्त्रीमज्जनामोद सौरभाम्ब्वनिले र्युतः।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तुर्ये मन्वन्तरं प्रोक्तं गजेन्द्रस्य विमोक्षणम्। द्वितीयादि त्रिभि स्तत्तु विस्तरेणोपवर्ण्यते।।

द्वितीये तु गजेन्द्रस्य गर्जाभिः क्रीडतो जले। दैवाद्ग्राहगृहीतस्य हरिस्मृति रुदीर्यते।।

**आसीदिति।** आसीत् अस्ति ।।१।।

1 A,B,G,J,T दिश श्च 2 H,V महावानस्य M,Ma महा नांगस्य 3 M,Ma शुभेम 4 A,B,G J, M,Ma,T oव 5 W द्गणिक
6 M,Ma भाकाति 7 H,V आम्न

**तावतेति**। तावता योजनायुतेन। पर्यक् परितः त्रिकूटसमाख्याबीजमाह - त्रिभिः शृङ्गैः मुख्यैः सुवर्णरौप्यलोहमयैः ।।२।।

**अन्यैरिति**। अन्यैश्च शृङ्गैः निर्झराम्भसां निर्घोषैश्च ककुभः सर्वा रोचयन्नास्त इति पूर्वेणैवान्वयः। कथम्भूतैः शृङ्गैः २ रत्नैः धातुभिश्च विचित्रितैः। नानाविधानां द्रुमलतानां गुल्मा येषु तैः ।।३।।

**स इति**। पयस ऊर्मिभिः समन्तादवनिज्यमाना अङ्घ्रयो मूलप्रान्ता यस्य हरिद्भिः पलाशवर्णैः ।।४,५।।

**यत्रेति**। किन्नरादीनां मह्णानमन्नादे. नदन्त्यो गुहा यस्मिन्प्रदेशे तत्रभिगर्जन्ति। हरयः सिंहाः। अमर्षया असहनेन पर शङ्कया प्रतिस्पर्धिसिंहशङ्कया ।।६।।

**नानेति**। नाना य आरण्याः पशवः तेषां व्रातैः सङ्कुलाभिः द्रोणीभिः अलङ्कृत आस्ते। किञ्च, चित्रा द्रुमा येषु तेषु मृगोद्यानेषु कलकण्ठा मधुरस्वना विहङ्गमा यस्मिन्।।७।।

**सरिदिति**। किञ्च। स्वच्छोदकैः सरित्सरोभिर्युतः। मणय एव वालुका येषु तैः पुलिनैश्च युतः। देवस्त्रीणां मज्जनेन य आमोदः तेन सौरभयुक्तानि अम्बून्यनिलाश्च तैश्च युत आस्ते।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

उक्तमर्थमाह आसीदित्यादिना अध्यायत्रयेण। ग्राहग्रहणात्प्राक्तनीं गजेन्द्रस्यावस्थां वक्तुं तावत् तदावासस्थानं त्रिकूटाचलं वर्णयति **आसीदिति**। हे राजन् त्रिकूट इति प्रसिद्धः कश्चित् गिरिश्रेष्ठः, आसीत्। स च क्षीरसमुद्रेणाऽऽवृतः, क्षीराब्धिमध्यस्थ इत्यर्थः। श्रीमान् शोभावान् रत्नादिसमृद्धिमान् वा योजनायुतोन्नतः ।।१।।

परित स्तावता योजनायुतेन विस्तृतश्च। त्रिकूटसमाख्याबीजमाह - रौप्यायसहिरण्मयैः त्रिभिः शृङ्गैः मुख्यैः पयोनिधिं दिशश्च रोचयन्नद्याप्यास्ते।।२।।

तथा रत्नैर्धातुभिः गैरिकादिभिश्च विचित्रै रन्यैश्च शृङ्गैः ककुभो दिशः रोचयन् आस्ते इति पूर्वेणान्वयः।

नानाविधैः द्रुमैः लतानां गुल्मैः लताभिः गुल्मैश्चेति वा। निर्झराम्भसा गिरिनदीजलानां घोषैश्च रोचयन्नास्त इति पूर्वेणान्वयः ।।३।।

स च त्रिकूटः पयोदधेः ऊर्मिभिः परितः अवनिज्यमाना विशोध्यमाना अङ्घ्रयः प्रत्यन्तपर्वता यस्य। सदेति पाठान्तरम्। तदा सदा नित्यमवनिज्यमानाङ्घ्रि रित्यर्थः।

1--1 A,B,J Omit 2--2 B,H,J,V Omit 3 A,B,J इव 4 H,V युत 5 A,B,I पयसः क्षीराब्धेः 6--6 A,B,T पाठ

हरिद्भिः पलाशवर्णैः मरकतात्मकैः अश्मभिः पाषाणैः श्यामलां भूमिं करोति बिभर्तीत्यन्वयः ।।४।।

क्रिडद्भिः सिद्धादिभिः जुष्टा द्रोणयः यस्य कन्दरेति पाठान्तरम्। तदा सिद्धादिभिः जुष्टा सेविता कन्दरा शिखरमूलभूमिः यस्येत्यर्थः। किन्नरादीनां सङ्गीतसन्नादैः नदन्त्यो गुहा यस्मिन्प्रदेशे तमभिगर्जन्ति प्रतिगर्जन्ति हरयः सिंहाः। कथम्भूताः? परशङ्कया सिंहान्तरागमनशङ्कयानिमित्तेन[1] अमर्षया असहनेन श्लाघिनः स्ववीर्यश्लाघायुक्ताः[2] ।।५,६।।

नानाविधा ये आरण्याः अरण्यप्रभवाः पशवो महिषादयः तेषां व्रातैस्सङ्घैः सङ्कुलाभिः व्याप्ताभिः द्रोणीभिः अलङ्कृतः[3] किञ्च, चित्रा द्रुमा येषु तेषु देवोद्यानवनेषु कलकण्ठा मधुरस्वराः विहङ्गमा यस्मिन्।।७।।

किञ्च। सरितश्च सरांसि च तै रच्छोदैः निर्मलोदकयुक्तैः मणय एव वालुका येषु तैः पुलिनैश्च देवस्त्रीणां मज्जनेन य आमोदः तेन सौरभेण युक्तान्यम्बून्यनिलाश्च तैश्चयुक्त आस्ते।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्र शरण्येषु शश्वदप्रतिहतशरण्य. श्रीभगवानेवेति दर्शनाय गजेन्द्रविषय इतिहासः कथ्यते। क्षीरोदेन क्षीरसमुद्रेण।।१।।

पर्यक् परिवृतः रौप्यायसहिरण्मयैः रजतायोहेममयैः त्रिभिः श्रृङ्गैः पयोनिधिं दिशश्च रोचयन् विद्योतयन् ।।२।।

अन्यै र्नानाधातुमयैः शृङ्गैश्च, रोचयन्निति शेष. ।।३।।

निर्णिज्यमानाङ्घ्रिः प्रक्षाल्यमानप्रत्यन्तपर्वतः शुभैः अन्याश्मनाविद्धै मरकताश्मभि रिन्द्रनील रत्नै भूमिं श्यामलां नीलां करोतीति।।४।।

यश्च सिद्धादिभि. नित्यनिषेवितगृहः ।।५।।

किन्नरादि सङ्गीतसन्नादे. नदद्गुहं प्रतिध्वनितगुहं स्थलमभ्युदिश्य प्रतिगजशङ्कयाऽमर्षया असह्यमानबुद्ध्या श्लाघिनः प्रशस्याः हरयः सिंहाः गर्जन्ति।।६।।

चित्रा द्रुमा येषु तथा तानि च सुराणामुद्यानानि चित्रद्रुमसुरोद्यानानि तेषु कलकण्ठाख्या. विहङ्गमा यत्र स तथा।।७।।

1 A,B,T °कम्भूतया 2 W °घिन 3 A,B,T add अस्मि

अच्छोदैः निर्मलजलैः मणिलक्षणानि वालुकानि येषु तानि तथा तैः। देवस्त्रीणां मज्जनादुत्पन्नो य आमोदः तस्मादुद्भूतं यत् सौरभं परिमललक्षणं, तेनाक्ता भाविता अनिला ये स्तैः। "आमोदोत्थः (विमर्दोत्थः) परिमलः" (अम.को. 1-149) इत्यमरः ॥८॥

**तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः।**
**उद्यानमृतुमन्नाम[1] आक्रीडं सुरयोषिताम्॥९॥**

**सर्वतोऽलङ्कृते दिव्यैः[2] नित्यपुष्पफलद्रुमैः।**
**मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः॥१०॥**

**चूतैः प्रियालैः पनसै राम्रै राम्रातकै रपि।**
**क्रमुकै र्नालिकेरैश्च खर्जूरैः बीजपूरकैः॥११॥**

**मधुकै स्सालतालैश्च तमालै रसनार्जुनैः।**
**अरिष्टो दुम्बरप्लक्षै वटैः किंशुक चन्दनैः॥१२॥**

**पिचुमन्दैः कोविदारैः सरलै स्सुरदारुभिः।**
**द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः॥१३॥**

**बिल्वैः कपित्थै र्जम्बीरै र्वृतो[3] भल्लातकै रपि।**
**तस्मिन् सरस्सु विपुलंलसत्काञ्चनपङ्कजम्॥१४॥**

**कुमुदोत्पलकह्लार[4] शतपत्र श्रियोर्जितम्।**
**मत्तषट्पदनिर्घुष्टं शकुन्तैः कलनिस्वनैः॥१५॥**

**हंसकारण्डवाकीर्णं चक्राह्वै स्सारसै रपि।**
**जलकुक्कुटकोयष्टि दात्यूहकुलकूजितम्॥१६॥**

**श्रीध०** **तस्येति।** तस्य द्रोण्या वरुणस्योद्यान मास्ते, सुरयोषिता आसमन्तात् क्रीडा यस्मिन्। नाम्ना ऋतुमत् ॥९॥

गिरिवनादि सर्वं प्रपञ्चयिष्यति वक्ष्यति अतो गिरि मुपवर्ण्य वन वर्णयति - **सर्वतोऽलङ्कृतमिति।**

1 A,B,G,J, M,Ma,T आ 2 A,B,G,J,T न्व 3 A,B,G,J, M,Ma,T कपित्थ 4 M,Ma ह्ल 5--5 A,B,G,J, T नैश्च कलस्वनै 6--6 B,H,J,V Omit

[1]नित्यं पुष्पाणि च फलानि च येषु तैर्द्रुमैः। अत एव ऋतुमदिति समाख्यायुक्तम्[-1] पुनः गिरिं वर्णयति - मन्दारै रिति चतुर्भिः, मन्दारादिभि र्वृत इत्यन्वयः ।।१०।।

**चूतैरिति।** [2]चूताम्रयोरवान्तरभेदः[-2] ।।११,१२।।

**पिचुमन्दैरिति।** [3]अक्षो विभीतकः। अभया हरीतकी, आमलो धात्री तैः[-3] ।।१३।।

**बिल्वैरिति।** तस्मिन् गिरौ सर आस्ते। तद्वर्णयति सुविपुलमित्यादि सार्धैः पञ्चभिः। लसन्ति काञ्चनपङ्कजानि यस्मिन्।।१४।।

**कुमुदेति।** कुमुदादीनां श्रिया ऊर्जितम् [4]समृद्धम् कलः स्वनो येषां तैः शकुन्तैश्च निर्घुष्टम्।।१५।।

**हंसेति।** चक्राह्वै [5]श्चक्रवाकैः सारसै[6]रप्याकीर्णम् जलकुक्कुटादीनां कुलैः कूजितम्।।१६।।

**वीर०** "ये मां त्वाञ्च सरश्येदम्" (भाग.८-४-१७) इत्यादिना गिर्यादिवर्णनं सर्वं ध्येयमिति वक्ष्यति भगवान् अतो गिरिमुपवर्ण्य वनं वर्णयति - तस्य उक्तविधस्य त्रिकूटस्य द्रोण्यां महात्मनो वरुणस्य ऋतुमदाख्य मुद्यान वनमस्ति। कथम्भूतम्? सुरयोषिता माक्रीडं[7] विहारस्थानम् ।।९।।

नित्यं फलानि पुष्पाणि च येषां तैः द्रुमैः परितोऽलङ्कृतं, द्रुमानेव कांश्चिद्दर्शयति - मन्दारैरिति। मन्दारादिभिः [8]परिवृतः। वन प्रदेशापेक्षया पुंलिङ्गनिर्देशः। तस्मिन्नुद्याने सरोऽस्ति। कथम्भूतम्? सुविपुलं विस्तृतं, लसन्ति काञ्चनमयानि पद्मानि यस्मिन् ।।१०-१४

कुमुदादीनां श्रियोर्जितं समृद्धं, मत्तै र्मधुपानमत्तैः षट्पदैः भृङ्गैः कलो मधुरः स्वनो येषां तैः। शकुन्तैः पक्षिभिश्च निर्घुष्टं ध्वनितम्।।१५।।

हंसैः कारण्डवैश्च आकीर्णं सङ्कुलं चक्रवाकैः सारसै रप्याकीर्णम्। समस्तेनाप्याकीर्णपदेन प्रधानत्वात्सापेक्षेणाप्यन्वयः। जलकुक्कुटादीनां कुलैः कूजितम्। कलेति पाठान्तरम्। तत्र कलं मधुरं भवति यथा तथा कूजितम् ।।१६।।

**विज०** आक्रीडम् क्रीडारङ्गम् ।।९।।

चूतोऽङ्गना प्रियः, प्रियालः स्फुटो नाम वृक्षः द्रुमिलदेशभवः चूतो वा। आम्रः पिकोदरो माकन्दनामा स चूतः, आम्रातकः आम्रवृक्षः, सालः सर्जविशेषः, अरिष्टो बृहत्पत्रः पिचुमन्दविशेषः, किंशुकः पलाशः।।१०-१२।।

1--1 B,H,J,V Omit 2--2 B,H,J,V Omit 3--3 B,H,J,V Omit 4 B,H,J,V Omit समृद्धम 5 B,H,J,V Omit चक्रवाकै
6 B,H,J,V Omit अपि 7 W क्रीडा 8 A,B,T Omit परि

पिचुमन्दः ह्रस्वपत्रः , गोमशनामा वा। सरलः जीरवृक्षः गुग्गुलु र्वा।।१३ - १६।।

मत्स्यकच्छपसञ्चार चलत्पद्मरजः पयः।
कदम्बवेतस नलनीपवञ्जुलकैर्वृतम।।१७।।

कुन्दैः कुरबकाशोकैः शिरीषैः कुटजेङ्गुदैः।
कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः।।१८।।

मल्लिकाशतपत्रैश्च माधवीजालकादिभिः।
शोभितं तीरजैश्चान्यै र्नित्यर्तुभि रलं द्रुमैः।।१९।।

तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन्।
सकण्टकं कीचकवेणुवेत्रवद् विशालगुल्मं प्ररुजन्वनस्पतीन् ।।२०।।

यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगा स्सखड्गाः।
महोरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णा शरभाश्चमर्यः।।२१।।

वृका वराहा महिषर्क्षशल्या गोपुच्छसालावृकमर्कटाश्च।
अन्यत्र क्षुद्रा हरिणा शशादय श्चरन्त्यभीता यदनुग्रहेण।।२२।।

सघर्मतप्तः करिभिः करेणुभिः वृतो मदच्युत्कलभै रभिद्रुतः।
गिरिं गरिम्णा परितः प्रकम्पन् निषेव्यमाणोऽलिकुलैर्मदाशनैः ।।२३।।

सरोऽनिलं पङ्कजरेणुरूषितं जिघ्रन्विदूरान् मदविह्वलेक्षणः।
वृतः स्वयूथेन तृषार्दितेन तत् सरोवराभ्याशमथाऽगमद्द्रुतम् ।।२४।।

**श्रीध० मत्स्येति**। मत्स्याना कच्छपानाञ्च सञ्चारेण चलता पद्मानां रजसा युक्तं पयो यस्मिन तत ।।२७,२८।।

**मल्लिकेति**। नित्यमृतव. फलपुष्पादिसम्पत्तिहेतवो येषा तैरलं शोभितम।।१९।।

**तत्रेति**। तत्रैव सति, एकदा तद्गिरिकाननाश्रयो वारणयूथपः करेणुभिः हस्तिनीभिस्सह चरन् तृषार्दितेन स्वयूथेन वृत सरोवरस्य अभ्याशं समीपमगमदिति पञ्चमेनान्वयः। किं कुर्वन्? कीचकवेणुवेत्र

1 M Ma ... 2 A,B,G,J ... 3 M Ma ... 4 M Ma ... 5 M Ma अन्य ... 6 A,B,G,J M MaT नु 7 M Ma ... 8- 8 B,H,J,V Omit

वन्तं विशालं [1]महान्तं गुल्मं लतादिसन्दर्भं वनस्पतींश्च प्ररुजन् प्रभञ्जन्।।२०।।

**यदिति।** कथम्भूतः? यस्य गन्धमात्रा द्धरयः सिंहा, गजेन्द्रादयश्च भयाद्द्रवन्ति पलायन्ते।।२१।।

**वृका इति।** वृकादयः क्षुद्राः [2]अल्पप्राणिनोऽन्यत्र तद्दृष्टिपथं त्यक्त्वा चरन्ति।।२२।।

**स** इति। पुनः कीदृशः घर्मतप्तः। मदच्युत् मदस्रावी [3]कलभैः करिशावकैः अनुगतः गरिम्णा गुरुत्वेन[3] मद मश्नन्तीति तथा तैः।।२३।।

**सर** इति। [4]पङ्कजपरागमिश्रं सरस्सम्बन्धिनं वायुं जिघ्रन्[4]।।२४।।

**वीर०** मत्स्यानां कच्छपानाञ्च सञ्चारेण च चलतां चलानां पद्मानां रजसा युक्तं पयो जलं यस्मिन् कदम्बादिभिः युतम् ।।१७।।

कुन्दादिभिश्शोभितम् इत्युत्तरेणान्वयः ।।१८।।

नित्य मृतवः फलपुष्पादिसम्पत्तिहेतवो येषां तै रन्यैश्च तीरजैः द्रुमैः अलमलङ्कृतम् अलमत्यर्थं शोभितमितिवाऽन्वयः।।१९।।

तत्रैवं स्थिते एकदा तद्गिरिकाननाश्रयः वारणयूथपः गजेन्द्रः करेणुभिः गजीभिः चरन् तृषार्दितेन स्वयूथेन वृतस्तस्य सरोवरस्याभ्याशं समीपमगमदिति पञ्चमेनान्वयः। किङ्कुर्वन्? कण्टकैस्सहितं कीचकवेणुवेत्रवन्तं विशालं गुल्मं लतादि सन्दर्भ वनस्पतींश्च प्ररुजन प्रभञ्जन्।।२०।।

तमेव विशिनष्टि - यस्य गजेन्द्रस्य गन्धमात्रात् वायुप्रसारमात्रात् सिंहप्रभृतयो मृगाः प्रतिपक्षिणो गजाश्च भयात्पलायन्ते।।२१।।

अन्ये क्षुद्रा हरिण्यादयो मृगास्तु यस्य गजेन्द्रस्य अनुग्रहेणाऽनु ज्ञानेन अभीता निर्भयाश्चरन्ति चेरुः।।२२।।

स गजेन्द्रो घर्मेणाऽऽतपेन तप्तः मदस्राविकरीभिः करेणुभिः कलभैश्च अनुद्रुत. मदस्राविभिः कलभैश्चाऽनुद्रुत इति वा। गरिम्णा स्थौल्येन गिरिं प्रकम्पयन् मदमश्नन्तीति तथा तैरलिकुलै निषेव्यमाणः।।२३।।

सरसः सम्बन्धिन मनिलं वायुं पङ्कजरेणुभिः रूषितं व्याप्तं विदूरादेव जिघ्रन् मदेन विह्वले चलिते ईक्षणे यस्य तृषा पिपासया अर्दितेन पीडितेन स्वयूथेन वृतः तत्सरोवराभ्याशं द्रुतं सत्वर मगात् ।।२४।।

1 B,H,J,V Omit महान्तं 2 A ...स्या प्रा... 3- -3 B,H,J,V Omit 4- -4 B,H,J,V Omit

**विज०** अशोकः सितरक्तपुष्पभेदेन द्विविधः, कुरबकः कुटजः कुब्जकं भ्रमरीपुष्पं स्वर्णकृतमालः कमलात् पृथक् ॥१७,१८॥

शतपत्रं जालकं मुकुलिका लता। "अलन्द्रुमः स विज्ञेयो नित्यपुष्पफलोद्रुमः" इत्यभिधानम्। तस्मिन्नुद्याने सरोवराऽस्तीत्यन्वयः। तत्रोद्याने तत्सरोवराभ्याशे माद्यर्वादित्यन्वयः ॥१९॥

सकण्टकं विशालगुल्मं वनस्पतींश्च प्ररुजन् ॥२०॥

हरिप्रभृतिमर्कटान्ता यस्य गन्धमाघ्रात् अद्भुतभयात् द्रवन्तीत्यन्वयः। खड्गो मृगविशेषः, व्यालमृगः सर्पाकारो मृगः, उक्तेभ्योऽन्ये ह्रस्वक्षुद्रा हरिणादयो मृगविशेषा यदनुग्रहेण अभीताश्चरन्ति सिंहादिभयराहित्येन ॥२१-२३॥

सरस्सम्बन्धिवायुम् ॥२४॥

विगाह्य तस्मिन्नमृताम्बु निर्मलं हेमारविन्दोत्पलरेणुवासितम्।
पपौ निकामं निजपुष्करोद्धृतं ह्यात्मानमद्भिः स्नपयन्गतक्लमः ॥२५॥

* स्वपुष्करेणोद्धृत शीकराम्बुभिः निपाययन्संस्नपयन्यथा गृही।
घृणी करेणुः कलभांश्च दुर्मदो नाऽचष्टकृच्छ्रं कृपणोऽजमायया ॥२६॥

तं तत्र कश्चिन्नृप! दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत्।
यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥२७॥

तथाऽऽतुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा।
विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥२८॥

नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः।
समाःसहस्रं व्यगमन् महीपते सप्राणयोश्चित्रममंसतामराः ॥२९॥

ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः।
विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत्सकलं जलौकसः ॥३०॥

इत्थं गजेन्द्रः स यदाऽऽप सङ्कटं प्राणस्य देही विवशो यदृच्छया।
अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥३१॥

1 A,B सकृ 2 A,B,G,J M Ma L ग्र: * This verse No 26 is not found in M edition 3 B,V पुष्कर, M,Ma पुष्कर W पुष्कर 4 B,V हारा W हारा 5 मय

**न मा मिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम्।**
**ग्राहेण पाशेन विधातु रावृतो ह्यहञ्च तं यामि परं परायणम् ।।३२।।**

**यः कश्चनेशो बलिनोऽन्तकोरगात् प्रचण्डवेगा दभिधावतो भृशम्।**
**भीतं प्रपन्नं परिपाति यद्भयात् मृत्युः प्रधावत्यरणं तमीमहि।।३३।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्या संहितायां अष्टमस्कन्धे
मन्वन्तरानुवर्णने गजेन्द्रोपाख्याने द्वितीयोऽध्यायः ।।२।।

**श्रीध० विगाह्येति।** निर्जन पुष्करेण कराग्रेणोद्धृतम्। गतक्लमस्स्नन निकाम पपौ।।२५-२७।।

**तथेति।** दीनधियः करेणवः तं केवलं विचुक्रुशुः। अपरे गजास्तु पार्ष्णिग्रहाः स्सन्तोऽपि तं तारयितुं नाऽशकन्[2] ।।२८-२९।।

**तत इति।** मन उत्साहशक्ति, बलं शारीरम्, ओज ऐन्द्रिय, तपाम। सकलं बलादि। विपर्ययो विपरीतं, अधिकम् जलौकसो ग्राहस्य ।।३०।।

**इत्थमिति।** स इत्थं यदा प्राणस्य सङ्कटमवाप, यता देही ।।३१।।

तां बुद्धिमेवाह **नमामिति।** अहं न च प्रभवामि यतो ग्राहरूपेण कालेन विधातुः पाशेनाऽऽवृत, तथाऽपि तं परं परमेश्वरं परेषां ब्रह्मादीनां मयन माश्रयभूत यामि शरणं व्रजामि।।३२।।

कोऽसौ यं शरणं यामि? तत्राऽऽह य कश्चनेति। अन्तक एवोरगस्तस्मात्। तमरणं शरणमीमहि व्रजेम। यद्भयादित्यत्र श्रुतिः - "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः"(तैत्ति उ. ३-२-८) इति।।३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वितीयोऽध्यायः ।।२।।

**वीर०** तस्मिन् सरसि विगाह्य प्रवेशपूर्वकं विलोड्य कह्लारादीनां रेणुभिर्वासितं परिमलितं निर्मलं जलं स्वपुष्करेण तुण्डाग्रेण उद्धृत कामं यथेष्टं पपौ अपिबत आप्लुत्य मग्न जले आत्मानं स्नापयन गतश्रमो बभूव, गतक्लमः पपाविति वाऽन्वयः ।।२५।।

1 A.B.G.J. M.Ma.T नाःटः 2- -2 B.H.J.V Omit 3 A.B.J मग 4 B.H.J.V Omit ता 5 H.V Omit कवल
6 B.H.J.V Omit व्रजामि 7 B.H.J.V Omit अरण 8 A.B.T अमृताम्बु

स्वपुष्करेणोद्धृतैः शीकराम्बुभिः जलबिन्दुभिः दुर्मदान् कलभान् करिपोतकान् करेणूश्च यथा गृही गृहासक्तिः स्तथा[1] निपाययन्[2] संस्नपयंश्च[3] गृणन् बृंहितं कुर्वन्, अजमायया भगवन्मायया यदागतं कृच्छ्रं दुःखं तन्नाचष्ट नाऽऽलोचितवानित्यर्थः[4] ।।२६।।

कृच्छ्रमेव दर्शयन्नाह - स इति। हे नृप। तत्र सरसि दैवेन प्रारब्धकर्मानुगुणं प्रवृत्तेनेश्वरेण चोदितः - कश्चिद्बलीयान् ग्राहो मकरः तं गजेन्द्रं चरणे पादे रुषा क्रोधेनाऽग्रहीज्जग्राह। यदृच्छया दैवात्प्राप्तं व्यसनं दुःखं गतः प्राप्तः, सोऽतिबलः गजेन्द्रो यथाबलं विचक्रमे त्याजयितुं पराक्रममकरोत्।।२७।।

तदा बलीयसा ग्राहेण तरसा बलेन विकृष्यमाण मत एव आतुरं दुःखितं गजेन्द्रं प्रति दीनधियः करेणवो विचुक्रुशुः रुरुदुः। प्रार्ष्णिग्रहाः पृष्ठतः उपोद्बलका अन्ये गजा स्तारयितुं दुःखात्तारयितुं मोचयितुं [5]न चाऽशकन्[-5] नाऽशक्नुवन्।।२८।।

हे महीपते! इत्थं गजेन्द्रग्राहयो र्मिथोऽन्तरतो बहिश्च विकर्षतोस्सतोः सहस्रं समा स्संवत्सराः व्यगमन्नतिक्रान्ताः बभूवुः। सप्राणयो स्तयोस्समानबलयोः तद्विकर्षणरूपं कर्म तदा सुराः चित्रं विचित्रं मेनिरे।।२९।।

ततः सहस्रसमानन्तरं दीर्घेण भूयसा कालेन जले विकृष्यमाणस्य अत एव अवसीदतः खिद्यतो गजेन्द्रस्य मनआदीनां व्ययः क्षयोऽभूत्। तत्र मन उत्साहशक्तिः बलं शरीरम्, ओज एन्द्रियम्। जल मोक आश्रयो यस्य तस्य ग्राहस्य तु इदं हेतुगर्भम्। सकलं मन आदिकं विपर्ययोऽभूत् , अधिकमभूदित्यर्थः।।३०।।

स गजेन्द्र इत्थं प्राणस्य सङ्कटं संशयं यदा प्राप, यतः सोऽपि देही देहभृत् तदा विवश आत्मनः स्वस्य मोक्षणेऽपारयन् असमर्थस्सन् चिरं दध्यौ चिन्तितवान्। अथ चिन्तनानन्तरं इमां वक्ष्यमाणां बुद्धिमभ्यपद्यत[6] कृतवान् ।।३१।।

तामेवाऽह - नेति। आतुरं पीडितं मामिमे ज्ञातयो गजा एव मोचितुं न प्रभवन्ति। अहन्तु प्रभुरेव न, कुतः कथं करिण्यः प्रभवेयुः ? अतो विधातुः दैवस्य[7] पाशरूपेण ग्राहेणाऽऽवृतोऽहं त मेव विधातारं केवलं परम् उत्कृष्टमयनं शरणं रक्षणोपायं यामि अध्यवस्यामीत्यर्थः। यत्सङ्कल्पान्ममाऽयं ग्राहग्रहस्तमेव शरणं व्रजामीत्यर्थः।।३२।।

---

1. A,B,T add कृपावान् 2.W Omits नि 3. W Omits स 4. W Omits इत्यर्थ. 5- -5. A,B,T Omit 6 A,B,T "मन्व" 7. A,B,T "ई"

कोऽसौ शरण्यः? विधातेत्यत आह - **य** इति। बलिनोऽन्तं करोतीत्यन्तकः। "अन्येष्वपि दृश्यते" (अष्टा. 3-2-101) इति डः। अन्तको मृत्युः स एव उरगः महासर्पः तस्मात्प्रचण्डवेगात् दुस्सहवेगात् अभिधावतो निमित्तात् भृशं नितरां भीतं प्रपन्नश्च यः कश्चन योऽय मीशः परिपाति यस्य च भयान्मृत्युरपि प्रधावति, तदादिष्टस्वव्यापारे प्रवर्तते तमरणं शरणं ईमहि प्राप्नुयाम। यद्वा यः कश्चनेशः अवश्यं यः कश्चिदीश्वरो भविता कोऽसौ योऽन्तकोरगाद्भीतं प्रपन्नं[1] पाति यस्य च भयान्मृत्युः प्रधावति तं शरणं व्रजेम इत्यर्थः। ईशे इति सप्तम्यन्तपाठोऽपि दृश्यते। तदा यस्येशे ईशने यः कश्चिन्नास्ति, "न तस्येशे कश्चन" (म.ना.उ. 1-10.) इति श्रुतेः। यश्च मृत्युभयाद्भीतं प्रपन्नं परिपाति यस्य च भयान्मृत्युः प्रधावति "मृत्यु र्धावति पञ्चमः" (कठ.उ. 6-3) इति श्रुतेः। त मरणमीमहीत्यर्थः। इति बुद्धिमभ्यपद्यतेत्यन्वयः ।।३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्वितीयोऽध्यायः।।२।।

**विज०** हे नृप ! पादाक्रान्तनिमित्तरुषा यथाबलं यथाशक्ति विचक्रमे विक्रमं कृतवान् ।।२७-२९।।

इन्द्रियादीना मवसादनप्राप्ता वृत्तम्भन शक्तिः सहः, प्राणशक्तिः बलं, शरीरसामर्थ्यं मोजः ।।३०।।

अपारयन् पारङ्गन्तु मशक्तः।।३१।।

कर्मलक्षणपाशेन ग्राहेण रुद्धः उपद्रवं प्राप्तः विधातुः दैवान्मोक्षितुम्।।३२।।

कश्चन लोक विलक्षणः यः ईशः बलिनोऽन्तकाख्यसर्पाद्भीतं प्रपन्नं प्रपाति, यस्य भयान्मृत्युरन्तको दुर्गा वा प्रधावति "मृत्यु र्धावति पञ्चमः"(कठ.उ. 6.3) इति श्रुतेः। तमीश मरणं शरण मीमहि प्राप्नुम इत्यन्वयः ।३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां
टीकायां द्वितीयोऽध्यायः।।२।।

---

1. A,B,T add परि

000O000

# तृतीयोऽध्यायः

**[1-]श्रीशुक उवाच[-1]**

**एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि।**
**जजाप परमं [2]जप्यं प्राग्जन्मन्यनुशिक्षितम्।।१।।**

**[3-]गजेन्द्र उवाच[-3]**

**ओं नमो भगवते तस्मै यत एतच्चिदात्मकम्।**
**पुरुषायाऽऽदिबीजाय परेशाया[4]ऽभिधीमहि।।२।।**

**यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम्।**
**योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम्।।३।।**

**यः स्वात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितम्।**
**अविद्धदृक् साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः।।४।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये [5]स गजेन्द्रेण स्तुतो हरिरुपेत्य तम्। समुद्धार तं ग्राहात्,ग्राहं देवलशापतः।।

**एवमिति**। [6]जप्यं स्तोत्रम्। प्राग्जन्मनि इन्द्रद्युम्नसंज्ञे।।१।।

**नम इति**। तस्मै नमो नमनमभिधीमहि अभिध्यायेम केवलं ग्राहगृहीतत्वेन कायप्रणतेरशक्यत्वात्। स्वस्य तज्ज्ञानं सम्भावयितुं विशिनष्टि। यतश्चिद्रूपात् एतद्देहादिचिदात्मकं चेतनं भवति। तदुक्तम् - "येन चेतयते विश्वम्" (भाग. ८-१-९) इति। तत्र हेतुः। पुरुषाय [7]पूर्षु कारणत्वेन प्रविष्टाय। ननु प्रकृतिपुरुषौ कारणमिति प्रसिद्धं, तत्राऽऽह - आदिः प्रकृतिः बीजं पुरुषस्तद्रूपाय। प्रविष्टत्वेऽपि जीववत्पारतन्त्र्यं वारयति - परेशायेति।।२।।

परमैश्वर्यं विवृण्वन्नाह [8-]यावदध्यायपरिसमाप्ति - **यस्मिन्निति**[-8]। यस्मिन्नधिष्ठाने यत उपादानात् येन कर्त्रा यश्च स्वयमेवेदं विश्वं भवति। अस्मात्कार्यात् परस्मात्कारणाच्च यः परस्तं स्वयम्भुवं स्वतस्सिद्धं प्रपद्ये शरणं व्रजामि।।३।।

1- - 1 H,V,W बादरायणि रुवाच 2. A,B,G,J,M,Ma,T,W, जा" 3- -3. H,V,W,Omit 4. M,Ma "य च धी" 5.A,B,J,"तु
6. A,B,J. add जाप्यं 7 H,V,Omit पूर्षु 8- -8. A,B,J, यावत्समाप्ति

विश्वहेतुत्वं[1] स्वतस्सिद्धत्त्वञ्चोक्तमिदानीं विश्वप्रकाशकत्वं [2-]स्वप्रकाशकत्वञ्च[-2] वर्णयन्प्रार्थयते **यः स्वात्मनीति।** विभातमभिव्यक्तं सत् क्वचित्प्रलये तिरोहितं लीनं सत्। तदुभयं कार्यं कारणञ्च साक्षी सन्नीक्षते[3]। साक्षित्वे हेतुः। अविद्धादृक् अलुप्तदृष्टिः। आत्ममूलः स्वप्रकाशः[4]। कुतः? परात्प्रकाशकात् चक्षुरादेरपि [5-]परः तस्यापि[-5] प्रकाशक इत्यर्थः। "चक्षुषश्चक्षुः" (केन.उ.1-2) इत्यादि श्रुतेः।।४।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्। यतते च ततो भूयः संसिद्धौ कुरुनन्दन। पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" (भ.गी.6-43,44) इति भगवदुक्तरीत्या एवङ्कृतनिश्चयो गजेन्द्रः पूर्वजन्माभ्यस्तं जजापेत्याह मुनिः - **एवमिति।** एवं नमामीत्यादिश्लोकद्वयोक्तरीत्या व्यवसितः निश्चितमनाः मनो हृदि समाधाय हृदयस्थं कृत्वा विषयान्तरेभ्यः प्रत्याहृत्य प्राग्जन्मनि इन्द्रद्युम्नाख्यजन्मनि अनुशिक्षितं अभ्यस्तं परमं जप्यं स्तोत्रं जजाप।।१।।

जप्यमेवाऽऽह - ओं इत्यादिना। तावत् - "कारणन्तु ध्येयः" (अथर्वशिख.उ. 3) इति श्रुत्युक्तविधया जगत्सृष्ट्यादि कारणं प्रकृतिपुरुषविलक्षणं नमस्कृत्य शरणं व्रजति - **ओमिति।** "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" (भ.गी. 17-23) इत्युक्तरीत्या ब्रह्मणो निर्देशपरः ओङ्कारः ब्रह्मणे इत्यर्थः। ओङ्काराभिप्रेतब्रह्मशब्द प्रवृत्तिनिमित्त गुण बृहत्त्वं भगवत इत्यनेन पूर्णषाड्गुण्यवाचिना स्पष्टीकृतम्। एवं कारणत्वोपयुक्तगुणयोग उक्तः। एवंविधाय तस्मै भगवते नमः। कोऽसौ भगवान् यं नमस्करोषि इत्यत्र तं लक्षयन् तद्ध्यानं प्रतिजानीते। यतो भगवत एतच्चिदात्मकं चित्संसृष्टमचेतनात्मकं चिदचिदात्मकमिति यावत्। यत एवमत आदिबीजाय परमकारणाय, अत एव परेषां ब्रह्मादीनामपीशाय परमपुरुषाय अभिधीमहि अभिध्यायेम ध्यायतेर्लिङि आर्षत्वादात्मनेपदे विकरणाभावे सम्प्रसारणे च रूपम्। "क्रियया ऽमभिप्रैति सोऽपि सम्प्रदानम्" (वार्तिक.829) इति वचनेन पत्ये शेते इत्यादाविव ध्यानक्रियायाः सम्बध्यमान विवक्षया सम्प्रदानसंज्ञायां पुरुषायेति चतुर्थी। सत्यं परं धीमहीत्यादौ तु आप्यमानत्वविवक्षया कर्मसंज्ञायां द्वीतीया। यत इति हेत्वर्थे पञ्चमी। हेतुत्वञ्चाऽधिकरणोपादानकर्त्रादिसाधारणम्। ततश्च यस्मिन् यतः येनेति विवक्षितं तदन्वयानुगुणानि लीनजातरक्षितादिपदानि अध्याजिहीर्षितानि।।२।।

1 A.त्वञ्चोक्त" 2- -2.A Omits 3.H,V.सन् समी" 4.A,B,J ,स्वयं 5- -5 A Omits

तदेतत्सर्वमभिप्रेत्य विशदयन् शरणं व्रजति - **यस्मिन्निति**। इदं चिदचिदात्मकं जगद्यस्मिन् प्रलीनं सृष्टेरप्ययपूर्वकत्वात् लयाधिकरणत्वसूचनाय तावत् यस्मिन्नित्युक्तम्। यत उपादानभूतात् सूक्ष्म चिदचिद्विशिष्टा-देतत्स्थूलचिदचिद्विशिष्टात्मकं जगज्जातं, येन कर्त्रा सृष्टं रक्षितञ्च। येनेति तन्त्रेण स्रष्टृत्वं रक्षितृत्वञ्च उभयमपि विवक्षितम्। तथा यस्मिन्नित्यनेन सृज्यमानचिदचिदधिकरणत्वमपि विवक्षितम्। यत इदमित्यनेन जगद्ब्रह्मणोरुपादानोपादेयभाव उक्तः। तत्कृतं तयोर्मिथोऽनन्यत्वमाह य इदं स्वयमिति। इदं सर्वं यदात्मकमित्यर्थः। उपादानत्वप्रयुक्तं विकारित्वं परिहरति योऽस्मात् , परस्माच्च परः इति। अस्मात्स्वरूपान्यथाभावमापद्यमानादचेतनजातात्परो विलक्षणः यः स्वभावान्यथाभावमापद्यमानो जीवः तस्माच्च परो विलक्षणः स्वरूपेण स्वभावेन च विकाररहितः, चिदचिद्द्वारकत्वाद्विकाराणामिति भावः। तमेवम्भूतं स्वयम्भुवं स्वायत्तसत्तादिमन्तं, न तु जीववत् अन्यायत्तसत्तादिमन्तमित्यर्थः। प्रपद्ये [1-]शरणं गतोऽस्मीत्यर्थः[-1]। यद्यप्यत्र गत्यर्थेन पदातिना बुद्ध्यर्थेन सता अध्यवसायमात्रमुपस्थाप्यते, तथाऽपि प्रमाणानुसारात् , अरणं तमीमहीति पूर्वत्रशरणशब्द पर्यायस्य अरणशब्दस्य प्रयोगाच्च प्रार्थनाद्यन्वित रक्षाभरन्यासं करोमीत्युच्यते। तथा चोच्यते - "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्, तदेकोपायता याच्ञा प्रपत्तिश्शरणागतिः" (विष्वक्सेन संहिता) इति रक्षाप्रार्थनन्तु समनन्तरश्लोकेषु 'अवतु मां परात्पर' इत्यादिषु स्फुटम्। इयञ्च गजेन्द्रेण विहिता प्रपत्तिः मुक्त्यर्थैव, न तु प्राणसंरक्षणार्था - "गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञान बन्धनात् , प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः"(भाग. 8-4-6) इति तत्फलतया मुक्तेरेव वक्ष्यमाणत्वादिति भावः ।।३।।

यस्मिन्निदमित्यनेन अभिप्रेतं सृष्टिसंहारविषयचेतनाचेतनात्मकजगदधिकरणत्वं विवृण्वन् सृष्ट्याद्युपयुक्त सार्वज्ञ्यादिगुणयुक्तं [2]स्वरक्षायै प्रार्थयते य इति। आत्मनि स्वस्मिन्नेव यः क्वचित्कदाचित् निजमाययाऽऽत्मीयसङ्कल्पेन विभातं प्रकाशितं देवादिनामरूपविभागत्वेन प्रकाशितम्। क्वचिच्च तिरोहितं नामरूपविभागत्यागेन सूक्ष्मरूपतया प्रलीनमित्यर्थः। इदमुभयं कार्यावस्थं कारणावस्थञ्च चिदचिदात्मकं जगत् अविद्धदृक् नित्यं सङ्कोचविकासादिरहितापरिच्छिन्नधर्मभूतज्ञानाश्रयः साक्षी सर्वज्ञश्च सन्नीक्षते स आत्ममूलः अनन्यकारणः परात्प्रधानात् पराज्जीवात् परो विलक्षणः मामवतु। परस्माच्च पर इत्युपादानत्व-

1--1.H.V.Omit 2 A,B,J, Omit स्व

प्रयुक्तविकारप्रसङ्गपरिजिहीर्षयोक्तम्। अत्र तु जीवान्तरस्यापि स्वसदृशत्वे स्वरक्षणासामर्थ्यसूचनायोक्तम्। अवत्विति प्रार्थिता रक्षाऽत्र यावदनिष्टपरिहारपूर्वकेष्टप्रापणरूपा। सा च मुक्तिरेव। ब्रह्मविदो गजेन्द्रस्य केवलप्राणमात्ररक्षाप्रार्थनानुपपत्तेः। "जिजीविषे नाऽहमिह" (भाग. 8-3-25) इति। "मादृक्प्रपन्न पशुपाशविमोक्षणाय" (भाग. 8-3-17) इति स्पष्टन्तदुक्तेश्च। अत एव सर्वज्ञो भगवान् तदभिप्रायमालोच्य मुक्ति मेवाऽदादिति विभावनीयम् ।।४।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

ध्यानपूर्वकस्तुत्या प्रसन्नाद्धरेः गजेन्द्रस्य ग्राहापदो मोक्षो यथाऽभूत्तथा संसारग्राहादपि मोक्षो भगवत्प्रसादेन स्यादिति प्रदर्शनाय तन्मोक्षप्रकारो निरूप्यतेऽस्मिन्नध्याये। किं प्रकारो गजेन्द्रः शरणमयासीदिति तं प्रकारं दर्शयितुमाह- **एवमिति**। जाप्यं [2]मन्त्रं तिर्यग्योनेः अनधिकारिणः एतदसम्भावितमिति तत्राऽऽह[-2] प्रागिति।।१।।

एतच्चिदानन्दात्मकं चेतनजातं यतो यस्मादेव आप्ताभीष्टं तस्मा इति। हिशब्देन पुरुषादिविशेषणानां "परात्परं पुरुशयं पुरुषमीक्षते" (प्रश्न.उ. 5-5) इति श्रुतिसिद्धं दर्शयति।।२।।

मन्त्रोक्तविशेषण विवरणपूर्वकं ध्यानमाह - **यस्मिन्निति**। इदं जगद्यस्मिन् हरौ प्रतीयते "यत्प्रयान्ति" (तैत्ति.उ. 3-1) इति श्रुतेः। इदं यतो यस्माच्चैव जायते "यतो वा इमानि भूतानि" (तैत्ति.उ. 3-1) इति श्रुतेः। चशब्देन अन्यस्मादुत्पातं निवारयति। इदं येन ब्रह्मणा प्रवर्तते। "येन जातानि जीवन्ति" (तैत्ति.उ. 3-1) इति श्रुतेः। इदं विश्वं यः स्वयं प्राप्तसत्तादिकः "सर्वं खल्विदं ब्रह्म"(छान्दो.उ. 3-14-1) इति श्रुतेः। ननु यः स्वयमित्यनेन तादात्म्यं किं न स्यादिति तत्राऽऽह-अस्मादिति। अस्मात् प्रत्यक्षप्रपञ्चात् , परस्मात् परोक्षान्मुक्तप्रपञ्चाच्च पर उत्तमो यस्तं स्वायम्भुवं स्वतएव प्राप्तसत्ताकं शरणं प्रपद्ये इत्यन्वयः। "उत्पन्नस्याऽपि यत्सत्ता हरेस्तत्स इतीर्यते। हरेः विश्वं भिन्नमपि परमोऽसौ यतो विभुः"(ब्रह्मतर्के) इति वचनान्न तादात्म्यमत्रोच्यते किमु ततः प्राप्तसत्ताकं जगदिति।।३।।

पूर्वोक्तार्थं भेदस्पष्टीकरणाय विवृणोति - **यः स्वात्मनीति**। यो भवान् क्वचिज्जाग्रति विभातं क्व च सुषुप्तौ तिरोहितं अप्रकाशितं, तदुभयं तदिदं जगत् निजमायया स्वेच्छया स्वात्मनि स्वोदरे अर्पितमीक्षते

1 A,B,J Omit वि 2- -2 A Omits

इत्यन्वयः। ननु शरीरे स्थित्वा ईक्षते चेज्जीववल्लुप्तज्ञानत्वेन ईक्षणायोगः स्यादिति , तत्राऽऽह - अविद्धदृगिति। तर्हि कथमीक्षत इति तत्राह - साक्षीति। स मामवत्वित्यन्वयः। आत्मा स्वयमेव मूलं कारणं प्रतिष्ठा च सत्तावान् तथा अनेन स्वयम्भूशब्दो विवृतः "स्वे महिम्नि" (छान्दो.उ. 7-24-1)इति श्रुतेः। "अक्षरात्परतः परः" (मुण्ड.उ. 2-1-4) इति च। क्वचिच्चतुर्मुखादौ[1-] विभातं क्वच अस्मदादौ[-1] तिरोहितमिति वा।।४।।

कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु।
तमस्तदाऽऽसीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः।।५।।

न यस्य देवा ऋषयः पदं विदुः जन्तुः पुनः कोऽर्हति गन्तुमीरितुम्।
यथा नटस्याऽऽकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु।।६।।

दिदृक्षवो यस्य पदं सुमङ्गलं[2] विमुक्तसङ्गा मुनयः सुसाधवः।
चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः[3] सुहृदस्स मे गतिः ।।७।।

न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा।
तथाऽपि लोकाप्ययसम्भवाय[4] यः[5] स्वमायया तान्यनुकालमृच्छति।।८।।

**श्रीध०** तिरोहितमीक्षत इत्येतत्प्रपञ्चपूर्वकं, दुर्ज्ञेयत्वं वदन्प्रार्थयते **कालेनेति** द्वाभ्याम्। पञ्चत्वमितेषु नाशं प्राप्तेषु गहनं दुरवगाहम्। गभीरमनन्तम्। तस्य तमसः। "आदित्यवर्णं तमसः परस्तात्" (श्वेता.उ. 3-8) इत्यादि[6] श्रुतेः।।५।।

अत एव देवादयो यस्य स्वरूपं न विदुः। जन्तुरर्वाचीनः कोऽपि[7] गन्तुं ज्ञातुमीरितुं वक्तुं वा। दुरत्ययं दुर्गममनुक्रमणं चरितं कथनं वा यस्य सः मा माम्।।६।।

कथं तर्हि "तमेव विदित्वाऽतिमृत्युमेति"(श्वेता.उ.3-8) "नाऽन्यः पन्था विद्यतेऽयनाय" (पु.सू.7) इति श्रुतिः। इत्याशङ्क्य तज्ज्ञानोपायं कथयन्नाऽऽह - **दिदृक्षव** इति। अलोकव्रतं ब्रह्मचर्यादि। अव्रणमच्छिद्रम्। भूताना मात्मभूता भूतेष्वात्मदृष्टयः सन्तः। स मे गतिरस्तु ।।७।।

दुरत्ययानुक्रमणत्वं प्रपञ्चयन्प्रणमति **न विद्यत** इत्यादिना। लोकानामप्ययः प्रलयस्सम्भवो जन्म तयोः

---

1- -1 A. Omits 2.H,V हि म" 3M,Ma सर्वात्मभूत 4 M,Ma "कस्य च म" 5 H,V,WOmit यः 6.A,B,J, इति
7. H,V,Omit कोऽपि

द्वन्द्वैक्यम्। तदर्थं यः तानि जन्मादीनि स्वीकरोति, तस्मै नम इत्युत्तरेणान्वयः ।।८।।

**वीर०** "क्वचित्तिरोहितं तमीक्षते" (भाग. 8-3-4) इत्युक्तं, तज्जगत्तिरोभूय कां दशामापद्यते, स च तद्दशायां कथम्भूतोऽवस्थित ईक्षते? इत्यपेक्षायां तद्दर्शयति - **कालेनेति**। कालेन द्विपरार्धावसानरूपेण कालेन निमित्तेन सर्वस्य जगतो हेतुषु सर्वेषु हेतुषु वा, पृथिव्यादि तत्त्वेषु, तत्कार्येषु लोकेषु तत्पालकेषु ब्रह्मादिषु च पञ्चत्वं लयमितेषु प्राप्तेषु सत्सु, गहनमतिसूक्ष्मत्वात् दुरवबोधं गभीरं परिच्छेत्तुमशक्यं अणुत्वादिनाऽपि परिच्छेत्तुमशक्यम् निरतिशय सूक्ष्मदशापन्नत्वादिति भावः। एवं विधं तम आसीत्। "नाऽसदासीन्नो सदासीत् तदानीं तम आसीत्" (ऋक्.सं. 10-129-1) इति श्रुतेः। तमश्शब्दो निरतिशय सूक्ष्मदशापन्नाचिद्द्रव्यवाची - "अक्षरं तमसि लीयते तमः परे देव एकीभवति" (सु.बा.उ. -2) इति श्रुतेः। तदेवम्भूतस्य तमसः पारे योऽभिविराजते। पारोऽत्र पालनं नियमनरूपं "पॄ पालन पूरणयोः" इति धात्वर्थानुरोधात्। उक्तविधतमोनियमने कार्याक्षमत्वापादनरूपे[1], स्थित इति शेषः। विराजते प्रकाशते न तु जीववत् सङ्कुचितज्ञानो भवतीत्यर्थः।।५।।

क्वचिद्विभातमीक्षत इत्युक्तम्। कीदृशं तस्येक्षणम्? इत्यपेक्षायां तत्तद्देवमनुष्याद्यवस्थजीवसम्बन्धि-नानाविधविचित्रकर्मानुगुणनियमनरूपत्वादित्थन्तया दुरवबोधमिति वक्तुं तावत् तत्स्वरूपस्य दुर्ज्ञेयत्वात्तदीक्षणमपि दुरवबोधमेवेति दर्शयितुं स्वरूपस्य दुर्ज्ञेयत्वं वदन् , तं स्वरक्षायै प्रार्थयते - **न यस्येति**। देवाः सुत्त्वप्रचुराः "तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्" (भ.गी. - 14-6) इत्यतीन्द्रियार्थ दर्शनयोग्यत्वं सूच्यते। ऋषयो योगिनः। अनेनाऽपि तदेव सूच्यते। अत एव यस्य पदं, पद्यते इति पदं स्वरूपं न विदुः अन्योऽर्वाचीनो जन्तुः प्राणी तत्पदं गन्तुं यथावद्बोद्धुं ईरितुं वक्तुञ्च कः पुनरर्हति? तत्र दृष्टान्तः - यथा आकृतिभिः वेषैः विचेष्टतो नटस्य 'अयमसौ' इति तत्स्वरूपमतज्ज्ञाः न विदुः तथेत्यर्थः। स एवं दुरवबोधस्वरूपः अत एव दुरत्ययानुक्रमणः दुर्गमव्यापारः इत्थन्तया दुरवबोधनियमनरूपव्यापारयुक्तो मामवतु। यद्वा नटस्येवाकृतिभिः देवादिविचित्रशरीरैः विचेष्टतो जीवद्वारा विचेष्टतो यस्येति वाऽन्वयः। अकृतिभिः अवतारविशेषैः विचेष्टतो यस्येति वाऽर्थः।।६।।

दुरवगमत्वोक्तिप्रसक्तामनुपास्यत्वशङ्कां निराचिकीर्षुः तस्य[2] नटस्येति दृष्टान्तसामर्थ्यलब्धं[3] कैश्चित्सुबोधत्वं वदन् तस्यैव स्वरक्षोपायत्वमध्यवस्यति - **दिदृक्षव** इति। सुमङ्गलं नित्यसुख रूपं यस्य

1. A,T "पेण 2. H,V. Omit तस्य 3. A,B,J, "धर्म्यं"

स्वरूपं दिदृक्षवः साक्षात्कर्तुमिच्छवो मुनयः विमुक्तस्सङ्गो दारागारादिषु शब्दादिविषयेषु वा यैस्ते सुसाधवः अन्यैरपि साधूनां धर्मैर्युक्ताः भूतेषु उच्चावचेष्वात्मभूता आत्मतुल्यतां प्राप्ताः स्वात्मसमदर्शिनस्सन्तो वने अरण्ये अव्रणमच्छिद्रमलोकव्रतमितरैः जनैः कर्तुमशक्यं व्रतमुपासनात्मकं चरन्ति उपासनात्मक व्रतपरिशुद्धमनसा तत्पदं साक्षात्कुर्वन्त्येवेति भावः। तथा च श्रुतिः - "हृदा मनीषा मनसाऽभिक्लृप्तः" (कठ.उ. 6-3) "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"(कठ.उ. 3-12) इति, "तं दुर्दर्शं गूढमनुप्रविष्टम्" (कठ.उ. 2-12) "यत्तदद्रेश्यमग्राह्यम्" (मुण्ड.उ.1-1-6) "न मांसचक्षुरभिवीक्षते तम्" "न चक्षुषा पश्यति कश्चनैनम्" (कठ.उ. 6-9) इत्याद्यदृश्यत्वश्रुतयस्तु योगापरिशुद्धमतिभिरग्राह्यत्वं वदन्तीति भावः। स एवम्भूतो मे गतिः, रक्षोपाय इत्यर्थः।।७।।

एवंदृश्यत्वादृश्यत्वश्रुतीनां विषयविभागोऽर्थात्प्रदर्शितः। अथ तुल्यन्यायतया "अजायमानः" (पु.सू.2-1) "निष्कलं निष्क्रियं" (श्वेता.उ.6-19) "तदरूपमनामयम्" इत्यादि जन्मादिप्रतिषेधपराणां "बहुधा विजायते"(पु.सू.2-1) "यस्य चैतत्कर्म स वै वेदितव्यः" (कौषी.उ.4-18) "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" (छान्दो.उ. 3-14-4) "हिरण्मयः पुरुषो दृश्यते"(छान्दो.उ. 1-6-6) इत्यदिनां जन्मादि प्रतिपादनपराणाञ्च श्रुतीनां विषयविभागं दर्शयन् स्तौति- **नेति**। यद्यपि यस्य जन्मादयो न सन्ति जीवस्येव कर्मायत्ता न सन्तीति भावः। तथाऽपि लोकानां दुष्कृतामत्ययो विनाशः सम्भवः साधूनां परित्राणं तयोस्समाहारः तस्मै तदर्थं तानि जन्मादीन्यनुकालं "यदा यदा हि धर्मस्य ग्लानिर्भवति" (भ.गी. 4-7) इत्याद्युक्तकालेषु इत्यर्थः। स्वमायया आत्मीयसङ्कल्पेन ऋच्छति प्राप्नोति स्वीकरोति अकर्मायत्तानि जन्मादीनि स्वेच्छयैवोपादत्तः इत्यर्थः। तत्र दोषो विकारः इममेव विषयविभागमभिप्रेत्य वरदगुरुभिरयं श्लोकोऽभिहितः - "यद्ब्रह्मणो गुणशरीरविकारभेदकर्मादिगोचरविधिप्रतिषेधवाचः। अन्योन्यभिन्नविषयानविरोधगन्धमर्हन्ति तत्र विधयः प्रतिषेधवाच्याः" इति। यस्तानि ऋच्छति स मे गतिरिति पूर्वेणान्वयः।।८।।

**विज०** परात्परत्वं स्पष्टयन् दुर्ज्ञेयत्वमाह **कालेनेत्यादिश्लोकद्वयेन**। लोकेषु पृथिव्यादिभूतकार्येषु साकल्येन पञ्चत्वं पृथिव्यादिपञ्चभूतात्मतामितेषु सर्वहेतुषु पृथिव्यादिसर्वकारणेषु, चशब्दात् महदादिषु लीनेषु स्वस्वकारणतामाप्तेषु सत्सु यत्तद्गहनं दुर्ज्ञेयं गभीरम् अत एव अगाधं तम आसीत्। यो विभुः तस्य तमसः पारे तमस्सम्पर्करहितदेशेऽभिविराजते स्वतो नेत्याह, कालेनेति, कालनाम्ना हरिणा ।।५।।

देवादयो यस्य पदं न विदुरिति यत् अतः पुनः को जन्तुः तत्पदं गन्तुम् ईरितुं वक्तुमर्हतीत्यन्वयः। हनुमदाद्याकृतिभिः तत्तदाकारानुसारेण विचेष्टमानस्य नटस्य स्वरूपं यथा न ज्ञायते तथेति सदुरत्ययानुक्रमणो दुर्ज्ञेयपरिक्रमणो हरिः मां अवत्वित्यन्वयः ।।६।।

हरेरेवंविधस्वरूपसद्भावे मानमाह **दिदृक्षव** इति। अव्रणमक्षतम् अलोकव्रतं लोकैः कर्तुमशक्यं सृष्ट्यादिव्रतं यस्य स तथा, तम्।।७।।

देवदत्तवत् जन्माद्यभावात् दुर्ज्ञेयत्वं युक्तमित्यभिप्रेत्याह - **न विद्यते** इति। आमघटादिश्यामादिगुणवत् नश्वरगुणो नास्ति दोषः कुत एवशब्देन "निरनिष्टो निरवद्यः" इति श्रुतिं सूचयति। सत्त्वादिनिमित्तदोषश्च नास्तीति वा दोषो नास्त्येव गुणयुतदोषश्च नास्तीति वा यद्यपि देवदत्तस्येव हरेर्जन्मादिकं नास्ति। तथाऽपि स्वमायया स्वमहिम्ना स्वेच्छया वा लोकस्य तदाश्रय प्राणिनां च सम्भवाय सुखादिप्राप्तिलक्षणजननाय तानि जन्मादीनि सर्जनादिकालमनुसृत्य ऋच्छति पाप्नोतीत्यन्वयः। लोकत्रयसम्भवायेति केचित्पठन्ति।।८।।

**तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये।**
**अरूपायोरुरूपाय नम आश्चर्य कर्मणे।।९।।**

**नम आत्मप्रदीपाय साक्षिणे परमात्मने।**
**नमो गिरां विदूराय मनसश्चेतसामपि।।१०।।**

**सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता।**
**नमः कैवल्यनाथाय निर्वाणसुखसंविदे।।११।।**

**नमश्शान्ताय घोराय गूढाय[1] गुणधर्मिणे[2]।**
**निर्विशेषाय साम्याय नमो ज्ञानघनाय च।।१२।।**

**क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे।**
**पुरुषायात्ममूलाय मूलप्रकृतये नमः।।१३।।**

**सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे।**
**[3-]असताच्छाययोक्ताय[-3] सदाभासाय ते नमः ।।१४।।**

1. A,B,G,J,M,Ma,T,W मू॰ 2. M,Ma कर्मणे 3- -3 H,V असक्ताच्छाययोक्ताय, M,Ma असत्याच्छ विमुक्ताय

**नमो नमस्ते[1-]ऽखिलकारणाय निष्कारणायाद्भुतकारणाय[-1]।**
**सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ।।१५।।**

**गुणारणिच्छन्नचिदू[2]ष्मपाय तत्क्षोभविस्फूर्जितमानसाय।**
*** नैष्कर्म्य[3]भावेन विवर्जितागम स्वयं प्रकाशाय नमस्करोमि।।१६।।**

**श्रीध० तस्मै** इति। ब्रह्मणे [4]ब्रह्मरूपाय अनन्तशक्तये उरुरूपाय अत आश्चर्याणि कर्माणि यस्य तस्मै परेशाय नमः।।९।।

**नम** इति। आत्मप्रदीपाय प्रकाशान्तरस्य अविषयाय। कुतः? साक्षिणे प्रकाशकाय परमात्मने जीवनियन्त्रे। अत एव गिरां विदूराय अप्राप्याय। चेतासां चित्तवृत्तीनाम्। तथा च श्रुतिः -"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तैत्ति.उ. 2-9) इति।।१०।।

**सत्त्वेनेति**। एवमपि विपश्चिता निपुणेन। नैष्कर्म्येण सन्न्यासेन। सत्त्वेन शुद्धेन। "सन्न्यास योगाद्यतयः शुद्धसत्त्वाः"(मुण्ड.उ. 3-2-6) इति श्रुतेः। प्रतिलभ्याय प्रत्यक्त्वेन प्राप्याय। निर्वाणसुखसंविदे मोक्षानन्दानुभूतये।।११।।

**नम** इति। [5-]शान्ताय सत्यानुसारिणे, घोराय रजोऽनुसारिणे मूढाय त[-5]मोगुणधर्मिणे, सत्त्वादिधर्मानु[6]सारिणे ज्ञानघनाय चेति निर्विशेषत्वेऽपि प्रधानवैलक्षण्यमुक्तम्।।१२।।

**क्षेत्रज्ञायेति**। साक्षिण इति सर्वाध्यक्षत्वेऽपि निर्विकारत्वमुक्तम्। आत्मनां क्षेत्रज्ञानां मूलाय मूलस्य प्रधानस्याऽपि प्रकृतये उद्भवहेतवे। तत्र हेतुः। पुरुषाय पूर्वमेव सते। तथा च श्रुतिः। "पूर्वमेवाऽह मिहाऽऽसमिति तत्पुरुषस्य पुरुषत्वम्" इति। पूर्णायेति वा।।१३।।

**सर्वेति**। सर्वेन्द्रियाणां ये गुणाः विषयाः तेषां द्रष्ट्रे। सर्वे प्रत्यया इन्द्रियवृत्तयो हेतवो ज्ञापका यस्य तस्मै। तदेवाऽऽह - असताऽहङ्कारादिप्रपञ्चेन। छाययाऽसद्रूपया उक्ताय,[7]जलस्थप्रति [8-]बिम्बेनबिम्बमिव [-8]सूचिताय। तत्र हेतुः सद्रूपो विषयेष्वाभासो यस्य तस्मै। तदुक्तं तृतीये - "यथा जलस्य आभासः" (भाग.3-27-12) इत्यादिना। पाठान्तरे असत्यस्य छाययाऽध्यासेना[9]क्ताय युक्ताय, तदधिष्ठानायेत्यर्थः।।१४।।

**नमो नम** इति। अखिलकारणाय [10]सर्वकारकरूपाय अत एव स्वयं निष्कारणाय। कारणत्वेऽपि

1- -1. M,Ma नारायणायार्तिविनाशनाय 2 M, Ma "दृ" * This hlaf verse is not found in M,Ma Editions. 3.W. भावाय 4. A,B,J, अरूपाय 5- -5. B,H,J,V Omit 6 A,B,J, का" 7. B,H,J,V Omit जलस्थ 8- -8 A "म्बं यथा सूच्यते तथा सू 9. A "नो" 10. A,B,J, "ण"

मृदादिवद्विकारं वारयति - अद्भुतकारणायेति। एवम्भूतत्वे प्रमाणमाह। सर्वे आगमाः पाञ्चरात्रादयः आम्नायाश्च वेदाः, तेषां महार्णवाय स्रोतसामिव पर्यवसानस्थानाय अपवर्गाय मोक्षरूपाय। अतः परायणाय उत्तमानामाश्रयाय।। १५।।

**गुणेति**। गुणा एव अरणिः तथा छन्नः चिदूष्मपो ज्ञानाग्निः तस्मै। तेषां गुणानां क्षोभे कार्ये विस्फूर्जितं, बहिर्वृत्तिकं मानसं यस्य। "सोऽकामयत बहु स्याम्" (तैत्ति.उ. 2-6) इति श्रुतेः। नैष्कर्म्यमात्मतत्वं तस्य भावेन भावनया विवर्जिता आगमाः विधिनिषेधलक्षणा यैस्तेषु स्वयमेव प्रकाशो यस्य तस्मै।।१६।।

**वीर०** एवं शरण्यत्वोपयुक्तगुणकथनपूर्वकं स्वरक्षायै शरणमुपगम्य, अथ पात्रपरिवेषित बहुव्यञ्जनोपेतान्नादिभोजन प्रवृत्तन्यायेन, झञ्झामारुतविधूतचूतादिफलादानप्रवृत्तन्यायेन च पौन रुक्त्यक्रमावनादृत्य उक्तैरनुक्तैश्च गुणैः यथामत्युपस्थितैः शरण्यत्वोपयुक्तैः स्तुवन् प्रणमति - **तस्मा** इति। परेषां ब्रह्मादीनामपि ईशाय अनन्ताः शक्तयः सृष्ट्यादिशक्तयो यस्य, न विद्यते रूपं कर्मायत्तं शरीरं यस्य उरूणि बहूनि रूपाणि अकर्मायत्तानि स्वेच्छोपात्तान्यप्रकृतानि[1]रूपाणि यस्य, आश्चर्यं लोकविसजातीयत्वेन अद्भुतं कर्म जगद्व्यापाराद्यात्मकं यस्य।।९।।

आत्मनैव दीप्यत इत्यात्मदीपः तस्मै स्वयंप्रकाशाय साक्षिणे सर्वस्य युगपत्साक्षाद्द्रष्टे परमात्मने लोकत्रयमाविश्य प्रशासनेन भर्त्रे, गिरां मनसश्चेतसामपि विदूराय अविषयाय वाङ्मनसाऽपरिच्छेद्य स्वरूप स्वभावाय चित्तावस्थस्य मनसः सत्त्वप्रचुरत्वेन अधिकार्यविषयीकरणयोगत्वसूचनाय मनसः पृथक् चेतसामपीत्युक्तम्।।१०।।

विपश्चिता ज्ञानिना कर्त्रा सत्त्वेन विशुद्धेन अनन्यप्रयोजनेन नैष्कर्म्येण उपासनात्मकनिर्वृत्तिधर्मेण उपलभ्याय कैवल्यं प्रकृतिसम्बन्धराहित्यं मोक्ष इति यावत् , तस्याधिपतये - निर्वाणसुखसंविदे निर्दुःखानन्दज्ञानस्वरूपाय।।११।।

शान्ताय अशनायापिपासाशोकमोहजरामृत्युरूपषडूर्मिरहिताय। यद्वा साधूनां शान्ताय प्रसन्नाय, घोराय खलानामुग्राय, गूढाय संसारिणां प्रच्छन्नाय गुणधर्मिणे सत्त्वादिगुणानामाश्रयाय निर्विशेषाय हेयगुणरहिताय सत्त्वादिगुणाश्रयत्वेऽपि तदवश्यायेत्यर्थः। साम्याय वैषम्यादि रहिताय, ज्ञानघनाय क्वचिदपि

1.W Omits रूपाणि

जाड्यरहिताय। [1-]यद्वा, शान्ताय अतिसौम्यमाधुर्यसौशील्यादिगुणगणलक्षितमधुरमूर्तये, घोराय अतिभयानकात्युग्रश्रीनृसिंहरूपाय, गूढाय अन्तर्यामिरूपाय उत्पादिनाप्रकटितरूपायेत्यर्थः। मूढायेति पाठे केष्वपि स्वस्वरूपादन्यत्र केष्वपि अदत्तचित्ताय सर्वत्रानासक्ताय स्वात्मारामाय सदा स्वानन्द तुष्टायेत्यर्थः[-1] ।।१२।।

क्षेत्रज्ञशरीरकाय सर्वाध्यक्षाय, सर्व भूताधिपत्य साक्षिणे सर्वद्रष्ट्रे पुरुषाय अन्तः प्रविश्य नियन्त्रे आत्ममूलाय स्वयं कारणान्तररहिताय मूलप्रकृतये सर्वोपादानभूताय।।१३।।

सर्वेषामिन्द्रियाणां तद्गुणानां शब्दादि विषयाणाञ्च युगपत्सदा द्रष्ट्रे सर्वप्रत्ययहेतवे संशय विपर्ययादि सर्वधर्मप्रत्ययहेतवे, असता सततपरिणामिन्या छायया छायावदपृथक्सिद्धया मायया, उक्ताय सूचिताय जडत्वेन स्वयं प्रवृत्तिशून्यया मायया प्रवर्तयितृत्वेन सूचितायेत्यर्थः। उक्तायेति पाठान्तरम्। तदा युक्तायेत्यर्थः। यद्वा, गूढाय गुणधर्मिणे, निर्विशेषाय साम्याय, ज्ञानघनायेति अचेतनसमष्टिशरीरकत्वमुक्तम्। तत्र गूढाय तमोमयाय गुणधर्मिणे सत्त्वादिगुणानामाश्रयाय निर्विशेषाय पृथिव्यादिविशेषरहिताय। "महदाद्या विशेषान्ताः" (विष्णु:पु.1-2-53) इति प्रयोगात्। साम्याय गुणसाम्यावस्थाय, अज्ञानघनायेति वा छेदः। तदा जाड्यस्वभावायेत्यर्थः। गूढत्वादिकञ्च "काठिन्यवान्यो बिभर्ति" (विष्णु:पु.1-14-28) इतिवत्प्रकृतिद्वारकं विशेषणं क्षेत्रज्ञाय सर्वाध्यक्षाय साक्षिणे पुरुषायेति समष्टिजीवशरीरकत्वमुच्यते। क्षेत्रज्ञाय "एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञइति तद्विदः" (भ.गी. 13-1) इत्युक्तविधक्षेत्रज्ञाय सर्वाध्यक्षाय करणाधिपतये साक्षिणे बुद्धीन्द्रियादीनां साक्षाद्द्रष्ट्रे पुरुषाय सर्वशरीरान्तर्वर्तिने। एतान्यपि सद्वारकाण्येव विशेषणानि ज्ञेयानि[2]। 'सर्वेन्द्रियगुणद्रष्ट्रे' इति श्लोके तु व्यष्टिजीवशरीरकनमस्कारः तत्रासता अनित्यया छायया छायावत्सानुबन्धया वासनया अक्ताय रूषिताय। उक्तायेति पाठे सूचिताय आश्रयमन्तरेण वासनया अनुपचित्तेः , तथा सूचितायेति भावः। स्वप्रकाशय इमान्यपि सद्वारकाण्येव विशेषणानि इतराणि तु अद्वारकाणीति विवेकः ।।१४।।

अखिलकारणाय सर्वकारकशरीरकाय, निष्कारणाय स्वयं कारकान्तरासाध्याय अद्भुतकारणाय मृदादिवत् स्वरूपपरिणामरहितकारणस्वरूपाय। सर्वे आगमाः पाञ्चरात्रादय, आम्नायाः [3]ऋगादयो वेदाश्च तेषां महार्णवाय स्रोतसामिव पर्यवसानभूमये, अपवर्गाय मोक्षहेतुभूताय, परायणाय [4-]परमाश्रयाय[-4] परमप्राप्याय [5-]ते तुभ्यं नमः[-5] ।।१५।।

---

1- -1 W. Omits 2. W Omits ज्ञेयानि 3. W Omits ऋगादयः 4- -4. W Omits 5- -5. W Omits

गुणारणिच्छन्नचिदूष्मपाय सत्त्वादिगुणात्मिका प्रकृतिरेव अरणिः तत्सञ्छन्नं जीवसमष्टि रूपमूष्माणमग्निं पिबति संहारकाले स्वस्मिन्नुपसंहृत्य यो निदधाति स तथोक्तस्तस्मै तत्क्षोभविस्फूर्जित मानसाय। मानसशब्दो मनःकार्यसङ्कल्पपरः तत्क्षोभे चिदचितोः विक्षोभकाले सृष्टिकाले स्फुरितसङ्कल्पाय नैष्कर्म्यं मोक्षः तत् येन भाव्यते तस्मै निवर्तितागमस्वयंप्रकाशाय "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तैत्ति.उ. 2-9) इत्युक्तप्रकारेण[1] वाङ्मनसापरिच्छेद्य ज्ञानस्वरूपायेत्यर्थः। नैष्कर्म्यभावेनेति पाठे नैष्कर्म्यभावेन मोक्षलाभेन निवर्तितः आगमः शास्त्रं यैस्तेषां स्वयमेव प्रकाशमानाया मुक्तिपर्यन्ता हि शास्त्रवश्यता। मुक्तानान्तु निवर्तितागमानाम् अकर्मवश्यानां तत्फलतया प्रकाशमानायेत्यर्थः ।।१६।।

**विज०** अनन्तरातीतश्लोकोक्तार्थं विवरणपूर्वकं यच्छब्दविशिष्टं तच्छब्दावच्छिन्नं च नमति - **तस्मा** इति।।९।।

अरूपायेत्युक्तं विवृणोति - **नम आत्मेति**। आत्मप्रदीपाय स्वतःप्रकाशाय आत्मनः जीवस्य स्वरूपज्ञानप्रकाशाय वा ।।१०।।

अरूपप्राप्तिसाधनज्ञानं तत्सद्भावे ज्ञानिप्राप्यत्वलक्षणं मानमित्यभिप्रायेण नमति - **सत्त्वेनेति**। विपश्चितां सत्त्वेन ज्ञानेन प्रतिलभ्याय प्राप्याय "बलज्ञानसमाहारः सत्त्वं केवलमेव च" इत्यभिधानम्। नैष्कर्म्येण निवृत्तिधर्मलब्धेन।।११।।

उरुरूपायेत्युक्तरूपविशिष्टं तात्पर्यादरूपविशिष्टञ्च नमति, शान्तायेत्यनेन सत्त्वप्रवर्तक वासुदेवादिरूपं लक्षयति। घोरायेत्यनेन रजःप्रवर्तकजामदग्न्यादिरूपम् मूढायेत्यनेन तमःप्रवर्तकवराहादिरूपम्। गुणकर्मण इत्यनेन तत्तद्योनिविशिष्टगुणकर्मवते, ज्ञानघनायेत्यनेना[2]ऽरूपस्य शून्यत्वं निवारयति सत्त्वेनेत्याद्युक्तविशेषण समुच्चयार्थः[3] चकारः ।।१२।।

रूप्यरूपित्वेन निरूप्यमाणस्य हरेः मिथो न कोऽपि विशेषोऽस्तीति ज्ञापयितुमुभययोग्य विशेषणविशिष्टत्वेन नमति - **क्षेत्रज्ञायेति**। सर्वाध्यक्षाय सर्वस्वामिने आत्मैव मूलं यस्य तथा तस्मै आत्मनां मूलाय वा।।१३।।

साक्षिशब्दविवरणपूर्वकमस्मदादि ज्ञाने हेतुत्वेनाऽस्मदादि प्रपञ्चाद्भिन्नं नमति। **सर्वेति**। असत्या

1.W. इति प्र" 2 A "त्यतोऽरू" 3. A.B, "यक·

दस्वतन्त्रात्प्रपञ्चाद्विमुक्ताय सन्निर्दोषा आभासो देहो यस्य स तथा। तस्मै "सत् देहः सुखगन्धश्च" इत्यादेः। अनेन प्राकृतरूपं नास्तीत्युक्तं भवति सन्नाभासः प्रकाशो यस्य स तथा तस्मा इति वा। "परञ्ज्योतिः उपसम्पद्यते" (छान्दो.उ.8-12-3) इति श्रुतेः ।।१४।।

अखिलकारणत्वादि विशिष्टत्वेनोक्तः क इत्याशङ्क्य श्रीनारायण एव, नान्य इति तन्नामनिर्देशपूर्वकं पूर्वोक्तानुक्तविशेषणविशिष्टत्वेन नमति **नमो नम** इति। सर्वैरागमैः पञ्चरात्रादिभिः, आम्नायैः ऋगादिभिः वेदैश्च समुद्राय।।१५।।

सर्वप्रत्ययहेतव इत्येतद्विशेषणं विवृण्वन्नाह - **गुणेति**। गुणारणिच्छन्नं सत्त्वादिगुणलक्षणकाष्ठे छन्नं चिदुष्मज्ञानाख्यं ज्योतिर्यत् तत्पाति रक्षतीति स तस्मै "बलमानन्द ओजश्च" इत्यादेः। अन्यथा तद्रक्षणकथनं व्यर्थं स्यात् शान्ताय इत्यादिना यद्गुणलुब्धत्वं तद्विडम्बनमात्रं इत्यभिप्रेत्याह-तत्क्षोभेति। तत्क्षोभे गुणविक्षोभेऽपि विस्फूर्जितं समुच्छ्वसितं मानसं यस्य स तथा तस्मै। गुणशक्त्युद्रेकावस्थायामपि मनोविकाररहिताय इत्यर्थः ।।१६।।

*** मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमो[1]ऽलयाय।**
**स्वांशेन सर्वतनुभृन्मनसि प्रतीत प्रत्यग्दृशे भगवते बृहते नमस्ते।।१७।।**

**आत्मात्मजाप्तगृहवित्तजनेषु सक्तैः दुष्प्रापणाय गुणसङ्गविवर्जिताय।**
**[2]मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय।।१८।।**

**यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति।**
**कि[3]ञ्चाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ।।१९।।**

**एकान्तिनो यस्य न क[4]ञ्चनार्थं वाञ्छन्ति ये वै भगवत्[5]प्रपन्नाः।**
**अत्यद्भुतं [6]तच्चरितं सुमङ्गलं गायन्त आनन्द समुद्रमग्नाः ।।२०।।**

**तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम्।**
**अतीन्द्रियं सूक्ष्ममिवातिदूरं अनन्तमा[7]द्यं परिपूर्णमीडे।।२१।।**

**यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः।**
**नामरूपविभेदेन फ[8]ल्ग्व्या च कलया कृताः।।२२।।**

*These three half verses beginning with मादृक्प्रपन्न, स्वांशेन सर्व, आत्मात्मजाप्त are not found in M.Ma editions.
1. W मनोलयाय 2. M.Ma यु" 3. A,B,G,J,T, "न्त्वा" 4. H,M,Ma,V किञ्च" 5. M.Ma त्प्रधाना. 6. M,Ma य" 7 H,Vमीड्य
8. M,Ma जल्प्या. W फल्ग्वा

**यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत् स्वरोचिषः।**
**तथा यतोऽयं गुणसम्प्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः[1] ।।२३।।**

**स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान् न जन्तुः।**
**नाऽयं गुणः कर्म न सन्नचाऽसन् निषेधशेषो जयतादशेषः।।२४।।**

**श्रीध० मादृगिति।** मादृक् मद्विधश्चाऽसौ प्रपन्नः पशुः तस्य पाशोऽविद्या तस्य विशेषेण मोक्षणं येन। तत्र योग्यतामाह- मुक्ताय। मोचने हेतुः, भूरिः करुणा यस्य। अतः तत्र अर्थे अलयाय अनलसाय। स्वांशेनान्तर्यामिरूपेण सर्वेषां तनुभृतां मनसि प्रतीता प्रख्याता या प्रत्यक्दृक् तस्मै। तथा च श्रुतिः - "य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति" (बृह.उ. 3-7-22) इति। भगवते सर्वेषां तनुभृतां नियमने[2] समर्थाय। तेषां मनःस्थितत्वेऽपि बृहतेऽपरिच्छिन्नाय।।१७।।

**आत्मेति**। अन्तःस्थत्वेऽपि देहादिष्वासक्तैः दुष्प्रापणाय प्राप्तुमशक्याय[3]। तत्र हेतुः। गुणसङ्गेन विवर्जिताय। अत एव मुक्तात्मभिः देहादिष्वनासक्तैश्चिन्तिताय। तैःपरिभावितं रूपमाह-ज्ञानात्मन इत्यादिना।।१८।।

**यमिति**। इष्टां गतिं कामितं धर्मादिफलं प्राप्नुवन्त्येव, न तु तावदेव। किन्तु यास्तैरकामिता अन्या अप्याशिषो राति। देहमव्ययं [4-]जरामरणरहितं[-4] राति। एवं योऽदभ्रदयः स मे विमोक्षणमेव केवलं करोतु नाऽधिकं प्रार्थये।।१९।।

एतावदप्यहं भक्तिसुखानभिज्ञत्वेन वाञ्छामि इत्याह[5] एकान्तिन इति। यस्य तु एकान्तभक्ता न किञ्चिदर्थं[6] वाञ्छन्ति, तं परेशं[7] परमेश्वरं ईडे स्तौमीत्युत्तरेणान्वयः। तेषां निष्कामत्वे हेतुः ये वै भगवतः सर्वज्ञान् मुक्तान् प्रपन्नास्सेवितवन्तः।।२०।।

**तमिति**। अत्यद्भुतत्वसुमङ्गलत्व[8]प्रदर्शनार्थमक्षरत्वादीनि[9] विशेषणानि।।२१।।

परिपूर्णत्वं प्रदर्शयन्नाह त्रिभिः - **यस्येति**। यस्य[10] फल्व्या च स्वल्पयैव कलयांऽशेन कृताः, स जयतादिति तृतीयेनाऽन्वयः।।२२।।

**यथेति**। कथं कृता इत्यपेक्षायां दृष्टान्तौ यथार्चिषोऽग्निरिति प्रवाहे दृष्टान्तः। सवितु गभस्तय इत्यानन्त्ये। निर्यान्त्युद्गच्छन्ति संयान्ति लीयन्ते गुणसम्प्रवाहमेवाऽऽह- बुद्धिर्मनः खानीति। खानि[11] करणानि

---

1 M,Ma सर्गः; W. वर्गाः। 2. H,V "म स" 3. B आ" 4- -4. A,B,J Omit 5 A,B,J Omit इत्याह 6. A,B,J क" 7. H,V Omit परेशं 8. A,B,J "तसु" 9. H,V "दिवि" 10. H,V Omit यस्य 11. H,V Omit खानि

शरीरसर्गाः कार्यदेहप्रवाहाश्च यतो भवन्ति सः ।।२३।।

अत एव देवादीनां मध्ये एकोऽपि[1] न भवति इत्याह[2]-स इति। न जन्तुर्लिङ्गत्रयशून्यं प्राणिमात्रमपि न, किन्तु सर्वस्य निषेधेऽवधित्वेनाऽवशिष्यत[3] इति निषेधशेषो मायया अशेषोऽशेषात्मकश्च जयतात् मद्विमोक्षणायाऽऽविर्भवतु।।२४।।

**वीर०** मादृशो यः प्रपन्नः पशुश्च तस्य यः पाशः कर्मबन्धस्तस्य विमोक्षणं यस्मात्तस्मै, तं मोक्षयतीति वा। सः तस्मै मुक्ताय स्वयं प्रकृतिपारवश्यरहिताय, भूरिकरुणाय दयासमुद्राय मनोलयाय मनसो लयः शब्दादिविषयेभ्यो वैमुख्यं यत्प्रावण्यात् तस्मै, नमोऽलयायेति पाठेऽलयायेति च्छेदः। न विद्यते लयो नाशो यद्भजनादित्यलयः तस्मै "न मे भक्तः प्रणश्यति" (भ.गी. 9.31) इति भगवदुक्तेः। योगदशायां जीवशरीरकतया गृह्यमाणत्व माह - स्वांशेनेति। प्रत्यक्शब्दोऽहम्बुद्धिबोध्यजीवविषयः। स्वांशेनेति भावप्रधानो निर्देशः। स्वांशेन विशिष्टवस्त्वेकदेशत्वेनाकारेण सर्वयोगिनां मनसि प्रतीतो यः प्रत्यक् अहम्बुद्धिबोध्यो जीवस्तस्य दृक् तद्विषयकं ज्ञानं यस्य तस्मै, स्वांशभूत जीवान्तरात्मत्वेन तद्रूपतया प्रतीयमानायेत्यर्थः।।१७।।

देहपुत्रमित्रादिषु सक्तैर्दुःखेनापि प्राप्तुमशक्याय गुणाश्शब्दादयो विषयाः, तेषु सङ्गः तेन विवर्जितस्तस्मै शब्दादिविषयसङ्गरहितायेत्यर्थः[4]। मुक्तात्मभिः रागादिनिर्मुक्तमनोभिः स्वहृदये परिभाविताय मुहुर्मुहु रभ्यस्ताय ज्ञानस्वरूपायेश्वराय सर्वनियन्त्रे।।१८।।

धर्मादिचतुर्विधपुरुषार्थान् कामयमाना यं भजन्तः इष्टां स्वाभिप्रेतां गतिं धर्मादिफलं प्राप्नुवन्त्येव। न तु तावदेव, किन्तु यस्मै[5] अकामिता अन्या अप्याशिषो राति ददाति अव्ययमक्षरञ्च देहं राति स्वदेहतुल्यं देहञ्च ददाति मुक्तिञ्चेति यावत्। सोऽदभ्रदयोऽपारकरुणो मम विमोक्षणं करोतु, मुक्तिं ददातु इत्यर्थः[6]।।१९।।

मूर्खत्वादहं मुक्तिं प्रार्थये। एकान्तिनस्तु तामपि न प्रार्थयन्ते इत्याह- एकान्तिन इति। एकान्तिनोऽनन्यप्रयोजनाः भगवत्प्रपन्नाः यस्य[7] यस्मात्कञ्चनार्थं मुक्तिमपि न वाञ्छति वै। अनिच्छायां हेतुं वदन् तान्विशिनष्टि। अत्यद्भुतं सुमङ्गलञ्च यस्य चरित्रं गायन्तः तद्गुणानुभवानन्दसमुद्रमग्नाः ।।२०।।

तमक्षरं नित्यं परं ब्रह्म परेशं[8] परेषामपीशं[9], अव्यक्तं चक्षुराद्यगम्यं आध्यात्मिकयोगेन भक्तियोगेनैव गम्यम्, अत एवाऽतीन्द्रियं इन्द्रियाविषयं, सूक्ष्ममणोरप्यणीयांसम्। इवशब्देन महतो महीयांसमिति लभ्यते।

1. A,B,J कोऽपि 2. A,B,J Omit इत्याह 3. H,V Omit अव 4. W Omits इत्यर्थः 5. A,B,T यस्ते· 6. W Omits इत्यर्थः 7. A,B,T Omit यस्य 8. W Omits परेशं 9. A,B,T ईशानाम्"

अतिदूरमुपायान्तरागम्यत्वात्। यद्वा सूक्ष्ममतिदूरम् च यद्वस्तु तदेवातीन्द्रियं त्रिविधपरिच्छेदरहितम्, आदौ भवमाद्यम् , परिपूर्णमन्तर्बहिश्च व्याप्य वर्तमानमवाप्तसमस्तकामं वा स्तौमि।।२१।।

चतुर्मुखप्रभृतयो देवाश्चराचरात्मका लोका वेदाश्च नामरूपविभागेन यस्य फल्ग्व्या कल्या कृताः। "तस्याऽयुताऽयुतशतैककलांशकांशे विश्वं विचित्र चिदचित्प्रविभागवृत्तम्" इत्युक्तविधया निर्माय धृता इत्यर्थः। यस्येत्यस्य स वै इत्युपरिष्टादन्वयः।।२२।।

कथं कृता इत्यपेक्षायां दृष्टान्तौ। तत्राद्यः प्रवाहे द्वितीयस्त्वानन्त्ये दृष्टान्तः। यथाऽग्नेरर्चिषः, यथा च सवितुर्गभस्तयो मरीचयोऽसकृन्निर्यान्ति उद्गच्छन्ति[1], संयान्ति पुनस्तत्रैव लीयन्ते, स्वरोचिषः स्वांशभूता रोचिषः। हेतुगर्भमिदम्। स्वरोचिष्ट्वान्निर्यान्ति संयान्तिचेत्यर्थः। तथा बुद्धिर्मनः, खानि इन्द्रियाणि, शरीरवर्गाः देवादिशरीर-[2]सङ्घाश्च इत्ययं गुणसम्प्रवाहः, गुणपरिणामरूपः प्रपञ्चो यतो निर्याति यत्र संयाति यदंशत्वादिति भावः।।२३।।

य एवम्भूतः स वै न देवादीनां मध्ये कतमोऽपि देवत्वादिजातिरहित इत्यर्थः। तथा स्त्रीत्वादिलिङ्ग रहितः न जन्तुः नाऽपि प्राणी गुणः कर्म चाऽयं न भवति [3-]गुणरहितः कर्मरहितश्च[-3] इत्यर्थः। अत एव न सत् , न जीववर्गान्तर्भूतः, न च असत् नाऽप्यचेतनवर्गान्तर्भूतः चिदचितो रेव जात्याद्याश्रयत्वादिति भावः। जात्यादिरूपो न भवतीति वाऽर्थः। किन्तु निषेधशेषः जात्यादिषु "ओं नमोभगवते" इत्याद्युक्तकल्याणगुणाश्रयत्वेऽप्रतिषिद्धे सति यस्तद्गुणाश्रयतयाऽवशिष्यते यश्चाशेषः अशेषाश्रयः साक्षात्परम्परान्यतरसम्बन्धेन जात्यादीनामाश्रयः। तत्र चिदचितोः साक्षादाश्रयः, जात्यादीनान्तु चिदचिद्द्वारेति विवेकः। [4-]एवम्भूतः[-4] स जयतात् सर्वोत्कृष्टत्वं प्राप्नोतु। यद्वा जि अभिभवे इति धातुः [5-]ज्ञेयः तदा[-5] जयतात् अभिभवतात् , मम स्वप्राप्तिविरोधिवर्गं निरस्यत्वित्यर्थः।।२४।।

**विज०** स्वतन्त्रोऽपि भक्तवश्यो भवतीत्याह - युक्तात्मभिरिति। वशीकृतमनआदीन्द्रियैः पुरुषैः। ज्ञानघनायेत्यनेन ज्ञानं किं स्वरूपमुतभिन्नमुच्यते? इति विकल्पावकाशो नास्तीत्याह - ज्ञानेति। न केवलं ज्ञानं गुणोऽस्य अन्येऽपि सन्तीत्याशयेनाऽऽह - भगवत इति। गुणानां गुणिनो भेदे "विज्ञानमानन्दं ब्रह्म" (बृह.उ. 3-9-28) इति व्यवहारानुपपत्तिरित्याऽऽशङ्क्योभयविधव्यवहारघटकत्वशक्तियोगोऽस्याऽस्तीत्या-शयेनाऽऽह - ईश्वरायेति।। १७,१८।।

---

1. A,B,J उद्भवन्ति 2. A,B,T सङ्घातश्च 3- -3. A,B,T गुणै कर्मभिश्च रहितः 4- -4. W Omits 5- -5 W Omits

मोक्षादि सर्वपुरुषार्थावाप्तिरप्यस्मादेव स्यात् तदर्थमन्यसेवा न कार्येत्याशयेनाऽऽह - यमिति। यं भजन्ते तत्प्रसादादिष्टां गतिमाप्नुवन्तीत्यन्वयः ननु अवान्तरपुत्राद्याशाप्राप्तयेऽन्यसेवाऽपेक्षितेति तत्राऽऽह - किञ्चेति। पुत्राद्याशिषोऽपि प्राप्नुवन्तीति शेषः। मोक्षं ददातीति न निराकारलक्षणं, किन्तु अनाद्यनन्तकालीनं साकारं ददातीत्याह - रातीति। राति ददाति मयोक्ताष्वाशीष्षु इयमेवाऽऽशीः प्रार्थ्यत इत्याह - करोत्विति।।१९।।

आशीः प्रार्थनमल्पभक्तलक्षणं, यत एकान्तभक्तैस्तन्न क्रियत इत्याह - एकान्तिन इति।ये एकान्तिनस्ते, यस्य सकाशात्कञ्चन पदार्थं न वाञ्छन्ति तं परेशं ईडे[1] इत्यन्वयः। एकान्तिन इत्यस्य विवरणं भगवत्प्रधाना इति। अनाकाङ्क्षणे निमित्तमाह - यच्चरितमिति।।२०।।

"अक्षरात्सम्भवतीह विश्वं" (मुण्ड.उ. 1-1-7) "एतस्य वा अक्षरस्य"(बृह.उ. 3-8-9) "ब्रह्मविदाप्नोति परम्" (तैत्ति.उ. 2-1-1) "परात्परं परमः परार्ध्यः" "अव्यक्तमचलं शान्तम्" "अध्यात्मयोगेन सुनिष्ठितेन मत्वा देवं शोकमोहौ जहाति" "विमे कर्णा पतयतः सूक्ष्मात् सूक्ष्मतरं प्रपद्ये तद्दूरे तद्वदन्तिके" इत्याद्युपनिषत्प्रतिपाद्यं मया स्तूयत इति द्योतनाय अक्षरादिशब्दप्रयोग इत्यनेन न पुनरुक्तिः पदानामिति ज्ञायते। न क्षरन्तीत्यक्षरं, जीवव्यावृत्त्यर्थं परं ब्रह्मेति। ब्रह्मणि मुक्तव्यावृत्त्यर्थं परेशमिति। आराधनेऽप्यनुग्रहमन्तरेण न व्यज्यत इति अव्यक्तं प्रसादे सति ज्ञायत इत्यध्यात्मयोगगम्यमिति। वागादीन्द्रियमतीत्य वर्तमानत्वादतीन्द्रियम् "यतो वाचो निवर्तन्ते" (तैत्ति.उ. 3-2-4) इति श्रुतेः। यथा सूक्ष्मं तथा महान्तमिति सूचनाय इव शब्दः। "अणोरणीयान्"(कठ.उ. 2-20) इति श्रुतेः आनन्त्यघटनाय परिपूर्णमिति।।२१।।

ब्रह्मादिस्थावरान्तं जगत् यस्य भिन्नांशो न तु स्वरूपांश इति ज्ञानं मुक्तिसाधनं नाऽन्य दित्याशयेनाऽऽह यस्येति। यस्य कलया जल्प्या वचसा वाचेति पाठेऽप्ययमेवाऽर्थः। "गीर्वाग्वाणी भारती च ब्राह्मीला गौस्सरस्वती" इत्यभिधानम्।।२२।।

गुणसम्प्रवाह इत्यस्य विवरणं बुद्धिरित्यादि। अनेन जगत्प्रवाहस्य नित्यत्वं ज्ञापितमिति ज्ञातव्यम्।।२३।।

अधुना श्रीनारायणसद्भावे प्रमाणदर्शनपूर्वकं स्तौति - स इति। यस्मात् गुणसम्प्रवाहः स देवासुरमर्त्य तिर्यक्जाति र्न वै यस्मादित्यन्वयः। यतो बहुव्यक्त्यभावात् विशेषतो निषेधति न स्त्रीति। नियतस्त्रियाद्याकारा भावात् न जन्तुः कृमिलक्षणः। अमूर्ताकारोऽपि नाऽस्तीत्याह - नाऽयमिति। देवादिशरीरकारण

1. A Omits ईडे

पृथिव्याद्यन्यतमोऽपि न स्यादित्याह - न सन्निति। इति मूर्तामूर्तनिषेधेन शेषो यस्य सः निषेधशेषः, ततो विलक्षणत्वेन परिशेषप्रमाणसिद्धः स जयतात्। ममाऽनर्थभूतसंसारमभिभूय वर्ततामित्यन्वयः। तत्स्वरूपमाह- अशेष इति। परिपूर्णत्वेन सिद्धः निषेधशिष्टश्चेत् उच्छिष्टवत्त्यागयोग्य इत्यतोवाऽऽह अशेष इति। परिपूर्णत्वेन सिद्धः "स एषआत्मा नेति नेति" (बृह.उ.3-9-26) इत्यादि श्रुतेः ।।२४।।

जिजीविषे नाऽहमिहामुया किं अन्तर्बहिश्चावृतयेभयोन्या।
इच्छामि कालेन न यस्य विप्लवः तस्याऽऽत्मलोकावरणस्य मोक्ष[1]णम् ।।२५।।

सोऽहं विश्वसृजं विश्वमविश्वं विश्व[2]वेदसम्।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम्।।२६।।

योगरन्धितकर्माणो हृदि योगविभाविते।
योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ।।२७।।

नमो नमस्तुभ्य मसह्यवेग शक्तित्रयायाखिल धीगुणाय।
प्रपान्नपालाय दुरन्तशक्तये [3]कदिन्द्रियाणामनवाप्यवर्त्मने।।२८।।

नाऽयं वेद स्वमात्मानं यच्छक्तयाऽहन्धिया [4]हतम्।
तं दुरत्यय माहात्म्यं भग[5]वन्तं नतोऽस्म्यहम्।।२९।।

## श्रीशुक उवाच

एवं गजेन्द्रमुपवर्णित निर्विशेषं ब्रह्मादयो विविधलिङ्गभिदा भिमानाः।
नैते यदोपससृपुर्निखिलात्मकत्वात् तत्राखिलामर[6]मयो हरि राविरासीत्।।३०।।

तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैस्सह संस्तुवद्भिः ।
छन्दोमयेन गरुडेन [7]समु[8]ह्यमानः चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ।।३१।।

सोन्तस्सरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम्।
उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रात् नारायणाखिलगुरो भगवन्नमस्ते।।३२।।

तं वीक्ष्य पीडितमजः सहसाऽवतीर्य स ग्राहमाशु सरसः कृपयोज्जहार।
ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं सम्पश्यतां हरिरमूमुचदुस्रियाणाम्।।३३।।

1. A,B,G,J,T °क्षम् 2. H,V °स्मीश। 3. M,Ma बुद्धीन्द्रि° 4 B ततम्; H,M,Ma,V,W हतः। 5. A,B,G,H,J,T,V ०वन्तमतो०
6. M,Ma °वरो 7 H.V स उह्य° 8. M,Ma °ह्यग°।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां
अष्टादशसाहस्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे गजेन्द्रमोक्षणे तृतीयोऽध्यायः।।३।।

**श्रीध० जिजीविषे** इति। न च ग्राहाच्छरीरस्य मोक्षणेनाऽहं जीवितुमिच्छामि। तत्र हेतुः अमुया अन्तर्बहिश्चाविवेक[1]व्याप्तया गजजा[2]त्या किं प्रयोजनम्? आत्मलोकस्यात्मप्रकाशस्य यदावरणमज्ञानं तस्यैव तु मोक्षमिच्छामि। यस्य मोक्षस्य कालेन नाशो नास्ति। यद्वा देहस्य बन्धो देहनाशे गज[3]योनिर्नश्येदेव किं तन्मोक्षप्रार्थनेन आत्मलोकावरणस्य तु कालेन विप्लवो नास्ति ज्ञानैकनिवर्त्यत्वात्। अतस्तस्यैव मोक्ष[4]मिच्छामि इत्यर्थः।।२५।।

**सोऽहमिति**। सोऽहं मुमुक्षुः। विश्वं विश्वरूपम्। अविश्वं विश्वव्यतिरिक्तं च। विश्वं वेदो धनमुपकरणं यस्य तम्। विश्वस्यात्मानं च। केवलं प्रणतोऽस्मि न तु तं जानामि।।२६।।

**योगेति**। योगं विना दुर्ज्ञा[5]नत्वादित्याह। योगेन भगवद्धर्मेण रन्धितानि दग्धानि कर्माणि येषां ते यं प्रपश्यन्ति।।२७।।

तर्हि सर्वेऽपि योगमेव किं ना स्थितास्तत्राह - **नम** इति द्वाभ्याम्। असह्यो वेगो रागादिलक्षणो यस्य तथाभूतं शक्तित्रयं यस्य तस्मै। बहिश्चाखिलधियां सर्वेन्द्रियाणां गुणाय शब्दादिरूपेण प्रतीयमानाय। अतः कदिन्द्रियाणां कुत्सितानीन्द्रियाणि येषां तेषामनवाप्यं वर्त्म यस्य।।२८।।

**नाऽयमिति**। यच्छक्त्या यस्य मायया [6]अहन्धीस्तया [7-]हतः अयं[-7] जनो न वेद दुरत्ययं माहात्म्यं यस्य तम्, इतः [8-]आश्रितोऽस्मि[-8]।।२९।।

**एवमिति**। उपवर्णितं निर्विशेषं मूर्तिभेदं विना परं तत्वं येन तम्। विविधात्त्वं चासौ लिङ्गभिदा मूर्तिभेदस्तस्यामभिमानो येषां ते। अत ए[9]व ते यदा नोपजग्मुः तत्र तदा अखिलामरमयः सर्वदेवमयमूर्तिः।।३०।।

**तमिति**। [10-]उपलभ्य ज्ञात्वा स्तोत्रं च निशम्य श्रुत्वा[-10] दिविजैर्देवैः सह छन्दोमयेन [11-]छन्दांसि सामानि तन्मयेन[-11] [12]इति शैघ्यायोक्तम्।।३१।।

**स इति**। [13-]उरुबलेन ग्राहेण[-13]। खे दृष्ट्वा। उपात्तं उद्यतं चक्रं येन ।।३२।।

1. A केन 2. H,V, यान्या 3. B,H,J,V, Omit गजयोनि 4. H,V, "क्षणमि" 5. A,B,J, "ज्ञेय" 6 A,B,J, add या
7- -7. A,B,J हतमावृतमयं 8- -8. A इत, अस्मि आश्रितो भवामि। 9. A,B,J एते 10- -10. B,H,J,V Omit
11- -11 B,H,J,V Omit 12. H,V अति 13- -13. B,H,J,V,Omit

**तमिति** गरुडो ऽपि मन्दगतिरिति ततः सहसावतीर्यारिणा चक्रेण विपाटितं मुखं यस्य। उस्रियाणां देवानाम्।।३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां तृतीयोऽध्यायः।।३।।

**वीर०** स्वाभिप्रायमाविष्करोति - **जिजीविषे** इति। नाहं जीवितुमिच्छामि। तत्र हेतुरमुयाऽन्तर्बहिश्चावृतयाऽहङ्कारममकारास्पदभूतयेत्यर्थः। इभयोन्या गजजन्मना किम्? न कोऽपि पुरुषार्थ इत्यर्थः। किन्त्वात्मलोकावरणस्य मोक्षणम् इच्छामि, लोक्यत इति लोकः आत्माख्यलोकस्य आवरणरूपात् कर्मणो मोक्षणमिच्छामि। यद्वा, आत्मनो लोकः धर्मभूतज्ञानं तस्यावरकात्कर्मणो मोक्षम् इच्छामि यस्य मोक्षणस्य कालेन निमित्तेन न विप्लवो न पुनरावृत्तिस्तं मोक्षमिच्छामीत्यन्वयः।।२४।।

सोऽहमात्मलोकावरणस्य मोक्षणमिच्छुरहं विश्वस्य स्रष्टारं विश्वं विश्वशरीरकम् , अविश्वं विश्वविलक्षणं, विश्ववेदनं सर्वविदम्। विश्ववेदसमिति पाठे[1] विश्वस्य वेदसं धनं पुरुषार्थरूपम् इत्यर्थः। यद्वा, विश्वं वेदो धनं शेषभूतं यस्य स तम् इत्यर्थ;। विश्वस्यान्तःप्रविश्य भर्तारम् अजं कर्मायत्तोत्पत्त्यादिरहितं गुणपूर्णं परमप्राप्यं नतोऽस्मि, परमप्राप्यं परं केवलं नतोऽस्मीति वा। प्रणाममन्तरेण तत्प्रसादनोपायं न जानामीति भावः।।२५,२६।।

योगेनोपासनात्मकेन रन्धितानि दग्धानि कर्माणि दर्शनविरोधीनि पुण्यपापात्मकानि येषां ते, योगिनः योगेन विभाविते विशोधिते हृदि यं प्रपश्यन्ति साक्षात्कुर्वन्ति तं, योगेशं[2] [3-]योगिनाम् ईशमहं[-3] नतोऽस्मि शक्तास्त्वेवं योगविशुद्धमनसा साक्षात्कुर्वन्ति तत्कर्तुमशक्तोऽहं तु केवलं नतोऽस्मीति भावः।।२७।।

असह्योऽप्रतिहतो वेगो व्यापारो यस्य तत्। शक्तीनां सृष्ट्यादिशक्तीनां त्रयं यस्य तस्मै। शक्तिक्रियायेति पाठान्तरम्। तदा अप्रतिहता शक्तिः अघटितघटनात्मिका क्रिया जगत्सृष्ट्यादिरूपा च यस्य तस्मै , अखिलाः धीगुणाः धीगतसंशयविपर्ययाद्यवस्थाः यस्मात्सः तथोक्तस्तस्मै, प्रपन्नानां पालाय रक्षित्रे, दुरन्ता अपारा शक्तिर्यस्य कदिन्द्रियाणामजितेन्द्रियाणां अनवाप्यं दुरवगमं वर्त्म याथात्म्यं यस्य [4-]तस्मै तुभ्यं नमो नमः[-4]।।२८।।

[5-]अयं जनो यस्य[-5] शक्त्या मायया हेतुभूतया अहन्धिया देहात्माभिमानेन यन्मायामूलक देहात्माभिमानेन हतं हतप्रायं स्वमात्मानं न वेद तं दुरत्ययमाहात्म्यमनतिक्रमणीयमहिमानं[6] भगवन्तमहं

1. W पाठान्तरम्। 2. A,B,T Omit योगेशं 3- -3. W Omits 4- -4. A Omits 5- -5. Omits 6. W माहात्म्यं

नतोऽस्मि [1] इतोऽस्मीति [-1] पाठान्तरम्। तदा प्रपन्नोऽस्मीत्यर्थः [2] ।।२९।।

एवमित्थमुपवर्णितं निर्विशेषं हेयगुणवर्जितभगवत्स्वरूपं येन तम्। यद्वा, ब्रह्मादिषु कस्यचिदसाधारणशब्दविशेषरहितत्वं येन वर्णितं स तथोक्तस्तं गजेन्द्रमत एवैते ब्रह्मादयो यदा नोपससृपुः नोपजग्मुः। कथम्भूतास्सन्तः? लिङ्गं शरीरं नानाविधनामरूपाभिमानवन्तः। यद्वा, लिङ्गं चिह्नं चतुर्मुखत्वहंसवाहनत्वादिरूपं तस्य भिदा त्र्यक्षत्ववृषभवाहनत्वशूलपाणित्वादेर्व्यावृत्तिस्तस्याभिमानो येषां ते, परस्पराव्यावृत्तचतुर्मुखत्वं हंसवाहनत्वं त्र्यक्षत्ववृषभवाहनत्वसहस्राक्षत्वैरावतवाहनत्वादि लिङ्गाभिमानयुक्ताः गजेन्द्रोपवर्णितचिह्नेषु अस्मदसाधारणानि लिङ्गानि न कानिचिदपि सन्तीत्यभिमानयुक्तास्सन्त इति फलितोऽर्थः। तत्र तदा हरिः हर्याख्यो भगवान् अखिलामरमयः अखिलदेवप्रचुरः। "स आत्मा अङ्गान्यन्या देवताः" (तैत्ति.उ.१-५-१) इति श्रुतेः। निखिलात्मकत्वात् निखिलानां गजेन्द्रोपवर्णितानां [3] गुणानामात्मकत्वा-दाश्रयत्वाद्धेतोराविरासीदाविर्बभूव। स्तोत्रे ब्रह्मविष्णुशिवादिशब्दरहितेऽप्युक्तविशेषणानां ब्रह्मादिष्वसम्भवान्न ते समागताः वस्तुसामर्थ्यात् पुरुषोत्तम एव विशेषणानामन्वितत्वात् स एव आगत इति भगवतो वास्तवाऽनवच्छिन्नमाहात्म्ययोगो दर्शितः।।३०।।

ग्राहेण आविर्भावप्रकारमेवाह [4] - **तमिति**। तद्वत्तथा आर्त्तं ग्राहेण पीडितं गजेन्द्रमुपलभ्य ज्ञात्वा दृष्ट्वा तत्कृतं स्तोत्रं च निशम्य श्रुत्वा। कुतः? यतोऽयं जगन्निवासः जगति कृत्स्ने अन्तरात्मतया वसतीति तथा। अत उपलभ्य निशम्य च छन्दोमयेन त्रिवृद्गायत्र्यादि च्छन्दोरूपत्वेनोपास्यमानशिरश्चक्षुराद्यवयवत्वाच्छन्दः प्रचुरस्तेन गरुडेन समुह्यमानः, अनेन शैघ्र्यातिशयः सूचितः। चक्रं सुदर्शनमायुधं यस्य, तादृशः संस्तुवद्भिर्देवैस्सह यत्र गजेन्द्रः तत्राशु अभ्यगमदभिजगाम।।३१।।

अन्तःसरस्युरुबलं यस्य तेन ग्राहेण गृहीतो अत एवाऽऽर्तः स गजेन्द्रो गरुत्मति गरुडे स्थितमिति शेषः। उपात्तं धृतं चक्रं येन तं हरिं खेऽन्तरिक्षे दृष्ट्वा साम्बुजं करं तुण्डमुद्धृत्य "रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्" इत्युक्तन्यायेन गृहीत [6] सरसिजं करम् उद्धृत्येत्यर्थः। कृच्छ्रात्काञ्चिद्गिरमाह, गिरमेव दर्शयति-नारायणायेत्यादि।।३२।।

ततः पीडितं गजेन्द्रं वीक्ष्याऽजो हरिः कृपया सहसा आशु अवतीर्य गरुडोऽपि मन्दगतिरिति ततोऽवरुह्याऽऽशु त्वरया सग्राहं गजेन्द्रं सरस उज्जहारोद्धृत्य बहिर्निष्कर्षितवान्। ततोऽरिणा चक्रेण विपाटितं

1--1 A Omits 2 W Omits इत्यर्थ. 3 W "तानु" 4. A,B,T "माऽऽह 5.A,B,T शुण्डाम्" 6 A,B,T "ताम्बुजं

[1]छिन्नं मुखं यस्य तस्मात् ग्राहात् गजेन्द्रं उस्त्रियाणां देवानां पश्यतां सतां अमूमुचत् मोचयामास।।३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां तृतीयोऽध्यायः ।।३।।

**विज०** ज्ञानसाधनमन्तरेणानेन शरीरेण चिरं रक्षितेन किं प्रयोजनमित्याशयेनाऽऽह - **जिजीविष** इति। अहं शरीरेऽन्तर्बहिश्चावृतयाऽमुयेभयोन्या प्रकृत्या किं न किमपि इति यस्मात्तस्मादिह तन्निर्मिते [2]शरीरे चिरं न जिजीविषे न जीवितुमिच्छामि इत्यन्वयः। स्वारम्भककर्मक्षये स्वयं नाशात् किमर्थं न जिजीविषे इत्यर्थतः इत्यतो[-2]लिङ्गलिङ्गशरीरनाश एव प्रार्थ्यत इत्याह - इच्छामीति। तस्यात्मलोकावरणस्य स्वज्ञानावरकस्य लिङ्गशरीरस्य मोक्षणं नाशमिच्छामीत्यन्वयः। अस्यापि कालेन नाशः किं न स्यादत्राह - कालेनेति। विप्लवो नाशः अनेनात्मज्ञानमन्तरेण लिङ्गशरीरस्य नाशो नास्ति सति तस्मिन् तत्स्यादित्युक्तं भवति "तस्मिन्दृष्टे परावरे" (मुण्ड.उ. 2-2-9) इति श्रुतेः।।२५।।

ननु गुणोपसंहारलक्षणोपासना वेदान्तज्ञानेन सम्भवेत्तिर्यग्योनित्वेन तदनधिकारादात्म ज्ञानासम्भवाल्लिङ्गशरीरनाशे आशामात्रं तव स्यादित्याशङ्क्य अस्मज्जातिविहितप्रणामेनापि प्रसन्नेश्वरप्रसादात् उत्पन्नज्ञानेन तत्स्यादित्यतस्तमाचरति-**सोऽहमिति**। यो हं लिङ्गशरीरमोक्षमाकाङ्क्षे सो हं परम्पदं प्राप्तव्योत्तमं प्रणतोऽस्मीत्यन्वयः। सर्वस्मादस्योत्तमत्वं कुत इत्यतः तदुपपादकविशेषणैः सिद्धमित्याह- विश्वसृजमित्यादिना विश्वसृजत्वाद्विश्वं तर्हि मृद्घटवत् तदात्मकत्वमापन्नमिति नेत्याह-अविश्वमिति। जगतो विलक्षणं स्वसृष्ट पदार्थप्रविष्टत्वाद्विश्वं बहिष्टत्वाद्विश्वमिति वा, दुर्भगशरीरस्थत्वेऽपि ज्ञानलोपो नेत्याह - विश्ववेदसमिति। विश्वं वेत्तीति सर्वज्ञमित्यर्थः । सर्वज्ञत्वं चास्यैव सुलभमित्याह - विश्वेति। विश्वं व्याप्य वर्तमानं , विश्वम् आदत्त इति वा विश्वस्य स्वामीति वा विश्वात्मानं जगत्स्रष्टुरस्य जगदाकारेण परिणामः किम् नेत्याह - अजमिति। अहङ्कारात्मा रुद्रोत्युच्यत इति नेत्याह ब्रह्मेति। वेदो नेत्याह - परमिति। मुक्तो नेत्याह - पदमिति।।२६।।

ज्ञानप्रत्यक्षमीश्वरसद्भावे प्रमाणमित्याशयेन नमति - **योगेति**। योगेन रन्धितानि दग्धानि कर्माणि येषां ते तथा।।२७।।

ननु तत्तच्छक्तिमतः तत्तत्कर्म दृष्टं हरेस्तु सृष्ट्यादि कर्म कथम्? इत्याशङ्क्य तत्तच्छक्तिविशिष्टत्वेन तं

1. A,B,T भिन्नं 2- -2 A,B,Omit

नमति - **नम** इति। असङ्ख्या वेगा यासां ताः तथा तादृशीनां शक्तीनां उत्पत्तिस्थितिसंहारविषयाणां उत्साहमन्त्रप्रभुविषयाणां वा त्रयं यस्य स तथा तस्मै उत्पत्त्यादिशक्तयश्च ज्ञानवत एव युक्ता इत्याह - अखिलेति। न चैताः शक्तयो देवदत्तशक्तिवत् परिमिता इत्याशयवानाह - दुरन्तेति। परिच्छिन्नत्वमनुमानेन साध्यत इति चेत् तत्राऽऽह बुद्धीति। हेतोऽश्रयाऽसिद्धत्वेन अनुमानानुदयात् ।।२८।।

हरेः स्तुतिफलं दर्शयति - **नायमिति**। यः स्वमात्मानं न वेद न जानाति पूर्वमिति शेषः।।२९।।

अनन्तरं किमभूदत्राह - **एवमिति**। उपवर्णितं निर्विशेषं समं ब्रह्म येन स तथा तं पृथिव्यादिविलक्षणं ब्रह्म येन स तथा तमितिवा अवतारमूलरूपयोः विशेषो नास्तीति वा निर्विशेषं तदिति वा "पूर्णमदः पूर्णमिदम्" (बृह.उ. 5-1-1) इति श्रुतेः। विविधानि लिङ्गानि पद्मवज्रादीनि वा हंसवृषभादीनि वा एवं भिदया भेदेन जातोऽभिमानः, अहं पद्मपाणिरहं वज्रपाणिरित्यादि लक्षणो येषां तथा स्रष्टृत्व संहर्तृत्वादिलक्षणो वा ये ब्रह्मादय एते यदा गजेन्द्रं नोपससृपुः तदा सकल देवनाथो हरिः यत्र गजेन्द्रः तत्राऽविरासीत्। तत्स्थ एव तत्र प्रत्यक्षीभूतो न तु दूरादागत्य कुत इति तत्राह - निखिलेति। सर्वव्यापकत्वात् [1-]निखिलगुरोः नहि परिच्छिन्नस्य सर्वगुरुत्वं घटते इत्यादि हेतुगर्भविशेषणम् नहि गुरोः आज्ञामन्तरेण गच्छन्ति सन्तः[-1] यद्वा, ब्रह्मादीनां अनागमे निमित्तमाह - निखिलेति। हरेः सर्वस्वामित्वाद्धरेः पूर्वमागमने प्रयोजनासिद्धेरित्यर्थः।।३०।

तद्वत् यथादर्शने कृपेति तथा तम्।।३१।।

अखिलगुरो नहि परिच्छिन्नस्य सर्वगुरुत्वं घटत इति नारायणेत्यादिहेतुगर्भविशेषणम्।।३२।।

ततः फलितमाह - **तं वीक्ष्येति**। उस्रियाणां देवानां "उस्रिया विजया देवा आदित्या अमराः सुराः" इत्यभिधानम्।।३३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
तृतीयोऽध्यायः।।३।।

1--1 A,B,Omit

000O000

# चतुर्थोऽध्यायः

श्रीशुक उवाच

तदा देवर्षिगान्धर्वा ब्रह्मेशानपुरोगमाः।
मुमुचुः कुसुमाऽऽसारं शंसन्तः कर्म तद्धरेः।।१।।

नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः।
ऋषयश्चारणाः सिद्धाः तुष्टुवुः पुरुषोत्तमम्।।२।।

योऽसौ ग्राहः सवै सद्यः परमाश्चर्यरूपधृत्[1]।
मुक्तो देवलशापेन हूहू र्गन्धर्वसत्तमः।।३।।

प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम्।
अगायत यशोधाम कीर्तन्य[2] गुणसत्कथम् ।।४।।

सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम्।
लोकस्य पश्यतो लोकं[3] स्वमगान्मुक्तकिल्बिषः।।५।।

गजेन्द्रो भगवत्स्पर्शात् विमुक्तोऽज्ञानबन्धनात्।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ।।६।।

स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः।
इन्द्रद्युम्न इति ख्यातो विष्णुव्रत परायणः।।७।।

स एकदाऽऽराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम्।
जटाधरस्तापस आप्लुतोऽच्युतं[4] तमर्चयामास[5] कुलाचलाश्रमः[6]।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्थे तु तयोर्ग्राहः प्राप गन्धर्वतां पुनः। गजं स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदम्।।

**य** इति। हूहूसंज्ञो गन्धर्वसत्तमः। असौ देवलस्य शापेन ग्राहो जातः। स वै स[7] तु ततः सद्यो मुक्तस्सन् उत्तमश्लोकमगायतेत्यन्वयः। एवं हि इतिहासोत्तमे कथा। सरसि स्त्रीभिः क्रीडन्नसौ हूहूः[8] स्नातुं

1 A,B,G,J,M,Ma,T "क 2. H,V "ध्य" 3 H,V स्वमा", W. समा" 4. A,B,G,J,M,Ma,T सम" 5 H,V "र्च" 6. M,Ma "य: 7. H,V.Omit स तु । 8 B,H,J Omit हूहू

[1]सर:प्रविष्टं देवलं पादे प्रगृह्य विचकर्ष स च प्रकुपितो ग्राहो भवेति शशाप तेन च प्रसादितस्सन् उवाच। एवमेव गजेन्द्रं गृह्णीष्व ततश्च गजेन्द्रमुद्धरन् हरि: त्वामपि मोचयिष्यतीति।।१-३।।

**प्रणम्येति**। कथम्भूतम्? यशसो धाम आश्रयम् . अत: कीर्तन्या: कीर्तनीया: गुणा: सती कथा च यस्य तम्।।४।।

**स इति** । स्वं लोकं गन्धर्वलोकम् ।।५,६।।

[2-]स वै इति। स गजेन्द्र: पूर्वं द्रविडेषु सत्तम: श्रेष्ठ: पाण्ड्यदेशाधिपति:, इन्द्रद्युम्न इति ख्यातो राजाऽभूत्[-2]।।७।।

कुलाचले मलयाद्रौ आश्रमो यस्य।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

[3-]तदा किमभूत्? तदाह[-3] - **तदेति**। तदा गजेन्द्रमोचनदशायां ब्रह्मरुद्रमुख्या देवादय: तत् गजेन्द्रमो[4]क्षणरूपं हरे: कर्म अद्भुतं शंसन्त: प्रशंसन्त: कुसुमवर्षं मुमुचु:।।१।।

[5]तथा दिव्या: दुन्दुभय: नेदु: गन्धर्वा ननृतु: जगुश्च ऋषिप्रभृतय: पुरुषोत्तमं हरिं तुष्टुवु:।।२।।

योऽसौ ग्राह: स[6] पूर्वस्मिन् जन्मनि हूहूर्नाम गन्धर्वश्रेष्ठ: स: देवलस्य शापेन निमित्तेन ग्राहो जात: स वै ग्राहो देवलस्य शापेन मुक्त:, सद्य: परमाश्चर्यरूपधृत् प्राक्तनाद्भुततमगन्धर्वरूपधृत् ।।३।।

उत्तमश्लोकमव्ययं यशसो धाम आश्रयम् अत: कीर्तन्या: कीर्तनीया: गुणा: सत्कथाश्च यस्य तमधीशं हरिं शिरसा प्रणम्यागायतेत्यन्वय:।।४।।

एवमितिहासोत्तमे कथा सरसि स्त्रीभि: सह क्रीडन्नसौ हूहू: स्नातुं प्रविष्टं देवलं प्रगृह्य विचकर्ष स च प्रकुपितो ग्राहो भवेति शशाप स च प्रसादितस्सन्नुवाच एवमेव गजेन्द्रं गृह्णीष्व, ततश्च गजेन्द्रमुद्धरन् हरि: त्वामपि मोचयिष्यतीति ईशेन हरिणा गानप्रीतेनानुकम्पित: अनुकम्पाविषयीकृत: स गन्धर्वस्तमीशं परिक्रम्य प्रदक्षणीकृत्य प्रणम्य च लोकस्य ब्रह्मादिजनस्य पश्यत:सत: मुक्तं किल्बिषं देवलशापरूपं यस्य तादृशस्सन्[7] [8]स्वलोकमगात्।।५।।

1. A,B,J Omit सर: 2- -2 B,H,J,V Omit 3- -3. W Omits 4. A "क्षारू" 5. WOmits तथा 6. W Omits स: 7. W Omits सन् 8. W. स्वकीयं लो"

गजेन्द्रस्तु भगवतो हरेः स्पर्शाद्धेतोरज्ञानबन्धनात्कर्मबन्धनाद्विमुक्तः भगवतः रूपं प्राप्तः भगवतः सारूप्यं प्राप्तः। तदेव दर्शयति पीतं पिशङ्गं वासो वस्त्रं यस्य चत्वारो भुजा यस्य सः।।६।।

गजेन्द्रस्य[2] पूर्वजन्मवृत्तान्तमाह- स वा इति। स वै गजेन्द्रः पूर्वस्मिन् जन्मनि पाण्ड्यदेशपतिः द्रविडेषु श्रेष्ठः इन्द्रद्युम्नाख्यः राजा बभूव। स च विष्णुव्रतपरायणः विष्णुव्रतं श्रीविष्णुभजनात्मकं तदेव परमुत्कृष्टमयमनुष्ठेयं यस्य तादृशः आसीत्।।७।।

एवं स्थिते जटा धरतीति[3] तथा तापसः तपोनिष्ठः कुलाचले मलयाद्रावाश्रम आश्रयो यस्य तादृशः स इन्द्रद्युम्नः एकदा भगवदाराधनकाले समाहितचित्तस्सन् गृहीतं मौनात्मकं व्रतं येन तादृश ईश्वरं हरिं समर्चयामास।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

प्रणष्टदुरितस्य हरौ निरतिशयभक्तिः स्यादिति तन्नाशसाधनादिनिरूप्यतेऽस्मिन्नध्याये। तत्र प्रथमं देवादीनां पुष्पवर्षादिकं भगवत्प्रीतिसाधनमाह- **तदेति**। यदा गजेन्द्रम् अमूमुचत्तदा।।१,२।।

स पश्चात्पूर्वचीर्ण पुण्योदयेनाऽऽविर्भूतज्ञानो हरिं स्तुत्वा तत्प्रसादेन देवलशापेन। तृतीया पञ्चम्यर्थे, तस्माच्छापान्मुक्तः, परमाश्चर्यरूपधृक् हरिं शिरसा प्रणम्य यशोधामागायतेत्यन्वयः। कीर्तनीया गुणरूपाः सत्यः कथा यस्य स तथा तं यस्मिंस्तथेति वा। अनेन हरिगुणकीर्तनरूपं गानं गायकशापादिमोक्षसमर्थमित्युक्तं भवति।। ३-५।।

ननु किमनेनान्यगुणकीर्तनेन? इदानी गजेन्द्रस्य भगवत्यात्या किमभूदित्स्तुशङ्क्य स्तुत्या प्रसन्नस्य हरेर्दर्शनेन मुक्तकिल्बिषस्य तत्सारूप्यं फलमभूदित्याह - गजेन्द्र इति।।६।।

हरेर्नाममात्रतोऽवाप्तविष्णुप्रसादः पूर्वं कः? इति तत्राऽऽह- **स वा** इति।।७।।

गजेन्द्रयोनिप्राप्तिनिमित्तं वक्तुमुपोद्घातं रचयति - **स एकदेति**।।८।।

**यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः।**
**तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह।।९।।**

1.W."वत्सा" 2. A,B,T "द्रप्" 3.A,B,T बिभर्तीति

**तस्मा इमं शापमदादसाधु रयं दुरात्माऽकृतबुद्धिरद्य[1]**
**[2-]विप्रावमन्ता विशतां[-2] तमोऽन्धं यथा गजःस्तब्धमतिः स[3] एव।।१०।।**

**श्रीशुक उवाच**

**एवं शप्त्वा गतोऽगस्त्यो भगवान् नृप सानुगः।**
**इन्द्रद्युम्नोऽपि राजर्षिः दिष्टं तदुपधारयन्[4]।।११।।**

**आपन्नः कौञ्जरीं योनिं आत्मस्मृतिविनाशिनीम्।**
**हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः।।१२।।**

**एवं विमोक्ष्य गजयूथपमब्जनाभः तेनापि पार्षदगतिं गमितेन युक्तः।**
**गन्धर्वसिद्ध विबुधै[5]रनुगीयमान कर्माद्भुतं स्वभ[6]वनं गरुडासनोऽगात्।।१३।।**

**[7]एवं महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम्।**
**स्वर्ग्यं यशस्यं कलिकल्मषापहं दुस्स्वप्ननाशं कुरुवर्य शृण्वताम्।।१४।।**

**[8]यथानुकीर्तयन्त्येतच्छ्रेयस्कामा[9] द्विजातयः।**
**शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये।।१५।।**

**इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम।**
**शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः।।१६।।**

**श्रीध० यदृच्छयेति**। तूष्णीं रहस्युपासीनं वीक्ष्य [10-]ऋषिः अगस्त्यः[-10]।।९।।

शापमेवाह - **तस्मा** इति। असाधुरित्यादि अकृताऽशिक्षिता बुद्धिर्यस्य, गजो यथा स्तब्धमतिः तथैवाऽयम्, अतः स एव गज एव भवत्विति शेषः।।१०।।

**एवमिति**। दिष्टं दैवप्रापितं[11] तदुपधारयन्[12] आलोचयन् ।।११।।

**आपन्न** इति। कौञ्जरीं योनिमापन्नः। तर्हि पश्चात् कथं स्मृतिर्जाता तत्राह - हरेरर्चनानुभावेनेति[13]।।१२।।

**एवमिति**। अद्भुतं स्वभ[14]वनमगात्।।१३।।

**एवमिति**। एतद्गजराजमोक्षणं नाम कृष्णानुभावस्तव ईरितः। कथम्भूतम्? तत्राह स्वर्ग्यमित्यादि। दुःस्वप्नं नाशयतीति तथा।।१४।।

---

1 A,B,G,J,M,Ma,T "द्य 2- -2. M,Ma मद्धेलनात्प्रविशतां तमिस्र 3. M,Ma सदोषः 4. M,Ma "यत् 5. A,B,G,J,M,Ma,T "रुप 6. H,M,Ma,V भु" 7. A,B,G,J,T एतन्म" 8.M,Ma अ" 9. W.द्विजोत्तमा. 10- -10. B,H,J,V Omit 11. B दैवार्पितं 12 H,V "क" 13. A,B,T "नस्यानु" 14 H.V भु"

**यथेति**। अतः श्रेयस्कामा ये एतद्यथावत् अनुकीर्तयन्ति।।१५।।

अनेनश्रेयो भवतीति कुतो ज्ञातं साक्षात् भगवद्वचनादेवेत्याह - इदमाहेत्यादि[1-] यावदध्यायपरिसमाप्तिः[-1]।।१६।।

**वीर०** तदा शिष्यगणैः परिवृतो महायशा मुनिरगस्त्यो यदृच्छया तत्र इन्द्रद्युम्नाश्रमे समागतः तमिन्द्रद्युम्नं तूष्णीमवस्थितमकृतमसमर्पितमर्घ्यादिकं येन तं रहसि एकान्ते उपासीनमुपविष्टं वीक्ष्य ऋषिरगस्त्यश्चुकोप हेति कष्टे ईदृशस्यापि मह[2]न्निग्रहविषयता बभूवेति खिद्यति मुनिः।।९।।

तस्मै इन्द्रद्युम्नाय शापमदादृषिः इत्यनुषङ्गः। शापमेवाह - असाधुरिति। अयं इन्द्रद्युम्नोऽसाधुः दुरात्मा अकृता अशिक्षिता बुद्धिर्यस्य तादृशोऽद्याधुना विप्रावमन्ता विप्रानस्मानवमन्यते परिभवतीति तथा, अतो हेतोः तमिस्रमज्ञानं विशतां प्राप्नोतु, यथा गजः स्तब्धमतिः तथैवायमज्ञो भवतु स एव गज एव भवत्विति शेषः।।१०।।

हे नृप ! ए[3]वं इत्थं शप्त्वा भगवानगस्त्यः सानुगः सशिष्यो गतः ययौ तत इन्द्रद्युम्नोऽपि राजर्षिः तदगस्त्यशापात्मकं दिष्टं प्रारब्धमेव उपधारयन् निश्चिन्वन् आत्मनः परमात्मनः स्मृतिविनाशिनीं कौञ्जरीं योनिमापन्नः प्राप्तः तर्हि पश्चात्कथं त[4]त् स्मृतिर्जाता तत्राह - गजत्वेऽप्यनुस्मृतिरिति यत् तत् हर्यर्चनानुभावेन पूर्वजन्मनि भगवदाराधनप्रभावेन अभूदित्यर्थः।। ११,१२।।

एवमित्थं गजयूथपं गजेन्द्रं विमोक्ष्य पार्षदत्वं प्रापितेन तेनापि गजेन्द्राख्यजीवेनापि अपि-शब्दात्स्वपार्षदैश्च युक्तोऽब्जनाभो हरिर्गन्धर्वादिभिरुपगीयमानं कर्म यस्य गरुडआसनं वाहनं यस्य सः अद्भुतं स्वभवनं अ[5]गात् ययौ इत्यर्थ;।।१३।।

यत्पृष्टं "बादरायण एतत्ते" (भाग.8-1-31) इत्यादिना तस्योत्तरमुक्तम् उपसंहरन् गजेन्द्रमोक्षकथाश्रवणफलमाह - एतदिति। हे महाराज! एतद्गजेन्द्रमोक्षणरूपः कृष्णानुभावः हरिप्रभावः तव तुभ्यं मयेरितः कथितः। इदं ग[6]जेन्द्रमोक्षणं शृण्वतां जनानां स्वर्ग्यं स्वर्गसाधनं यशस्करं कलिकल्मषापहं कलौ युगे यत्कल्मषं तदपहन्तीति तथा, कलिः कलहः तन्निमित्तं पापं ह[7]न्तीति [8-]तथा[-8] तदिति वा। हे कुरुवर्य! दुस्स्वप्ननाशं दुस्स्वप्नं नाशयतीति तथा।।१४।।

1- -1. A,B,J "दिना यावत्स" 2. A,B,T "हा" 3. A,B,T Omit एवं 4. A,B,T Omit तत् 5. A,B,T Omit अगात् 6. W गजराज 7. A,B,T हरतीति 8- -8. A,B,T Omit

अतः श्रेयस्कामा द्विजातयः त्रैवर्णिकाः प्रातरुत्थाय शुचयः शुचीभूताः दुस्स्वप्नाद्युपशान्तये एतद्यथावदनुकीर्तयन्ति।।१५।।

अनेन कीर्तितेन दुस्स्वप्नाद्युपशान्तिर्भवति इति कुतो ज्ञायते ? इत्यपेक्षायां भगवद्वचनादेवेत्याह - इदमिति। हे कुरुसत्तम! सर्वभूतानां श्रृण्वतां सतां[1] सर्वभूतप्रचुरो विभुर्हरिः प्रीतो गजेन्द्रं प्रति इदं वक्ष्यमाणमाह ।।१६।।

**विज०** उपगीयमानानि कर्माणि यस्य स तथा, अगाल्लोकदृष्ट्या तु तत्रैवान्तर्दधे इत्यर्थः।।९-१३।।

दुःस्वप्नस्य नाशो यस्माद्गजेन्द्रमोक्षणात्तत्तथा ताम् ।।१४-१६।।

**श्रीभगवानुवाच**

**ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम्।**
**वेत्र कीचकवेणूनां गुल्मानि सुरपादपान्।।१७।।**

**शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च**
**क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम्।।१८।।**

**श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम।**
**सुदर्शनं पाञ्चजन्यं सपर्णं पतगेश्वरम्।।१९।।**

**शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयम्।**
**ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ।।२०।।**

**मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे।**
**कर्माण्यनन्तपुण्यानि [2]सूर्यं सोमं हुताशनम्[2]।।२१।।**

**प्रणवं सत्यमव्यक्तं गोविप्रान् धर्म[3]मव्ययम्।**
**दाक्षायणी [4]धर्म[5]पत्नीः सोमकश्यपयोरपि।।२२।।**

**गङ्गां सरस्वतीं नन्दां कलिन्दीं सितवारणम्।**
**ध्रुवं ब्रह्म ऋषीन्सप्त पुण्यश्लोकांश्च मानवान्।।२३।।**

1.A,B,T Omit सतां 2- -2. M,Ma सूर्यसोमहुताशनान् 3.M,Ma "मक्षयम् 4. M,Ma णी ध" 5. M,Ma त्नी

**उत्थायापररात्रान्ते प्रयताः सुसमाहिताः।**
**स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोऽखिलात्।।२४।।**

**ये मां स्तुवन्त्यनेनाऽङ्ग! प्रतिबुध्य निशात्यये।**
**तेषां प्राणात्यये चाहं ददामि विपुलां[2] मतिम्[3]।।२५।।**

**श्रीशुक उवाच**

**इत्यादिश्य हृषीकेशः प्राध्माय[4] जलजोत्तमम्।**
**हर्षयन्विबुधानीकमारुरोह खगाधिपम्।।२६।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां
अष्टादशसाहस्त्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे चतुर्थोऽध्यायः।।४।।

**श्रीध०** **ये** इति। प्रसङ्गादन्यस्यापि स्मरणे फलमुच्यते। सर्वेषां द्वितीयान्तानां स्मरन्ती त्यष्टमेनान्वयः।।१७-२१।।

**प्रणवमिति**। अव्यक्तं मायाम्। अव्ययं धर्मं भक्तिलक्षणम्। सोमकश्यपयोरपि पत्नीर्दाक्षायणीः।।२२।।

**गङ्गामिति**। सितवारणमैरावतम्।।२३।।

**उत्थायेति**। [5-]प्रयताः सिद्धाः[-5]। सुसमाहिताः एकाग्रचित्ताः मम रूपाणि मद्विभूतीः ।।२४-२५।।

**इतीति**। जलजोत्तमं शङ्खवरं, प्राध्माय[6] वादयित्वा।।२६।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्थोऽध्यायः।।४।।

**वीर०** भगवदुक्तिमेव दर्शयति। य इत्यादिना विमलां मति मित्यन्तेन। ये जनाः त्वां मां च एतत्सरोवरादींश्चापररात्रान्ते प्रभाते उत्थाय स्मरन्ति तेऽखिलांहसो मुच्यन्ते इत्युत्तरत्रान्वयः, गिर्यादीनां समाहारद्वन्द्वः, वेत्रादीनाम् इतरेतरयोगद्वन्द्वः तेषां गुल्मानि सन्दर्भविशेषात्मकानि सुरपादपान्मन्दारादीन् ।।१७।।

1.A,B,G,J,T ह्येनसो" 2.A,B,G,J,M,Ma,T "म" 3. M,Ma ग" 4.A,B,G,J,T प्र" 5- -5. B,H,J,V Omit 6.A,B,J प्र"

इमानि त्रिकूटस्य श्रृङ्गाणि प्रसङ्गादन्येषामपि प्रातःस्मर्तव्यतामाह - ब्रह्मणश्चतुर्मुखस्य मे हरेः शिवस्य च धिष्ण्यानि स्थानानि त्रयाणां त्रिकूटगिरि श्रृङ्गाणां ब्रह्मादिस्थानाभिप्रायेण वा इमानीत्युक्तं क्षीरोदं क्षीरसागरं मम प्रियं स्थानं भास्वरं श्वेतद्वीपञ्च।।२८।।

तथा मम श्रीवत्सादीन् तत्र मालां वनमालां कामोदकीनाम्नीं गदां [1-]पतगेश्वरं[-1] पतगानां पक्षिणामीश्वरं सुपर्णं गरुडम्।।१९।।

शेषमनन्तं कथम्भूतं मत्कलां सूक्ष्मां दुष्प्रतर्क्यमत्कलाभूतमित्यर्थः। अहमेवाश्रयो यस्यास्तां देवीं श्रियं महालक्ष्मीं, ब्रह्माणं चतुर्मुखं, ऋषिं नारदं, भवं रुद्रम्।।२०।।

मम मत्स्याद्यवतारैः कृतान्यनन्तपुण्यानि श्रृण्वतामिति शेषः। यानि कर्माणि चरितानि तानि च सोमं चन्द्रं हुताशनम् अग्निम्।।२१।।

प्रणवं ओङ्कारं, सत्यं भूर्तहितरूपं धर्मं, अव्यक्तं प्रधानमव्ययं धर्मं[2] भगवद्भक्तियोगलक्षणं, दाक्षायणीः दक्षदुहितृः, धर्मस्य पत्नीः सोमकश्यपयोरपि पत्नीः।।२२।।

नन्दाम् अलकनन्दां, कालिन्दीं यमुनां, सितवारणम् ऐरावतं, ध्रुवमौत्तानपादिं, सप्तब्रह्मऋषीन् [3]पुण्यश्लोकान्[-3], पुण्येन श्लोक्यन्ते कथ्यन्त इति पुण्यश्लोकास्तान् धार्मिकान् मानवांश्च।।२३।।

प्रातरुत्थाय ये स्मरन्ति कथम्भूताः प्रयताः सुसमाहिताश्च नियमितान्तर्बाह्येन्द्रियाः कथम्भूतानि सर आदीनि मम रूपाणि मच्छरीर भूतानि ते स्मर्तारोऽखिलादंहसः पापान्मुच्यन्ते दुःस्वप्नादिनिमित्तेभ्यः सर्वपापेभ्यो मुच्यन्त इत्यर्थः।।२४।।

ये च जनाः निशात्यये निशापगमे प्रभाते प्रतिबुद्धय अनेन त्वत्कृतेन स्तोत्रेण मां स्तुवन्ति तेषां प्राणात्यये प्रयाणकाले विमलां मद्विषयां मतिमहं ददामि।।२५।।

इतीत्थमादिश्य आज्ञाप्य हृषीकेशो हरिः जलजोत्तमं शङ्खश्रेष्ठं प्राध्माय ध्वनयित्वा ब्रह्मादिदेवता वर्गं हर्षयन् खगाधिपं गरुडं अरुरोह आरुह्य स्वभवनमगादित्यर्थः।।२६।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्थोऽध्यायः।।४।।

---

1- -1 W.Omits 2. W Omits यं 3- -3. A.B.T Omit

**विज०** अपररात्रान्ते अरुणोदयप्रारम्भे उत्थाय त्वां मां चेत्यादिकं स्मरन्ति, ते सर्वस्मादंहसो **मुच्यन्ते इत्यन्वयः**।।१७-२४।।

नन्वस्तु पापक्षयोऽस्मात्तद्विषयज्ञानं कस्मादित्यतस्तत्साधनमाह-**ये मामिति**। प्राणात्यये देहोत्क्रमणे।।२५।।

जलजोत्तमं शङ्खोत्तमम् ।।२६।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीविजयध्वजतीर्थ कृता पदरत्नावल्यां
टीकायां चतुर्थोऽध्यायः।।४।।

०००0०००

# पञ्चमोऽध्यायः

श्रीशुक उवाच

राज न्नुदित मेतत्ते हरेः कर्माघनाशनम्।
गजेन्द्रमोक्षणं पुण्यं रैवतंत्वन्तरंशृणु।।१।।

पञ्चमो रैवतो नाम मनु स्ताम[1]ससोदरः।
[2]बलिविन्ध्यादय स्तस्य सुता अर्जुनपूर्वकाः।।२।।

विभुरिन्द्र स्सुरगणा राज न्भूतरयादयः।
हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः।।३।।

पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठै स्सुरसत्तमैः।
तयोः स्वकलया जज्ञे वैकुण्ठो भगवान्स्वयम्।।४।।

वैकुण्ठः कल्पितो येन लोको[3] लोकनमस्कृतः।
रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया।।५।।

तस्यानुभावः कथितो गुणाश्च परमोदयाः।
भौमान् रेणून् स विममे यो विष्णोर्वर्णयेद्गुणान्।।६।।

षष्ठस्तु[4] चक्षुषः पुत्रश्चाक्षुषोनाम वै मनुः।
[5]पुरुःपुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः।।७।।

इन्द्रो[6] मन्द्रद्रुम[7] स्तत्र देवा आप्यादयो[8] गणाः।
मुनय स्तत्र वै राजन् हविष्मद्वीरकादयः।।८।।

तत्रापि देवस्सम्भूत्यां वैराजस्याभवत्सुतः।
अजितो नाम भगवानंशेन जगतः पतिः।।९।।

[9]पयोधिं येन निर्मथ्य सुराणां साधिता सुधा।
भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः।।१०।।

1. M,Ma "प" 2 H, V प्रति" M.Ma बल" 3. W "का" 4 A,B,G,J,M,Ma,T "ष्ठ" 5 A,B,G,J,T पूरुपूरुषः M,Ma पुत्रः पुरुष"
6. A,B,G,J,T मन्त्र 7. H,V द्युम्न , M,Ma द्रुत 8 H,V आपाद्ययो 9. M,Ma पयोब्धि"

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते। स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः।

पञ्चमे पञ्चमञ्चाथषष्ठं चाऽकथयन्मनुम्। विप्रशापाच्च निश्श्रीकैः [1] कृता देवै र्हरि स्स्तुतिः [1]।

**पञ्चम** इति। तामसश्च [2] चतुर्थो मनुः तस्य सोदरो भ्राता।।१-५।।

**तस्येति** तस्य वैकुण्ठसंज्ञस्य हरे रनुभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां स्वपार्षदाभ्यां वराहादि रूपेण युद्धादिलक्षणः, गुणाश्च ब्रह्मण्यतादयः परमोदयाश्च महर्द्धयः कथिता स्तृतीय स्कन्धादिषु।।६-१०।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं तामसमन्वन्तरकथन प्रसङ्गानुप्रसक्तं [3] गजेन्द्रमोक्षोपवर्णन मनुवदन् पञ्चममन्वन्तरं श्रोतुं चोदयति मुनिः - **राजन्निति**। हे राजन् ! एतत्पुण्यतमं गजेन्द्रमोक्षणात्मकं हरेः कर्म अघनाशनं दुरितनिवर्तकं मे मया [4] ते तुभ्यं कथितम्। अथ पञ्चमं रैवतं मन्वन्तरं शृणु।।१।।

तत्र पञ्चमो मनुः रैवत इति प्रसिद्धः। स च तामसस्य प्रियव्रतात्मजस्य सोदरः, तस्य रैवतस्य मनोः सुताः पुत्रास्तु बलिविन्ध्यादयः। ते च अर्जुनः पूर्वोख्यो येषां तादृशाः।।२।।

इन्द्रस्तु विभुरिति प्रसिद्धः। हे राजन्! भूतदयादयः भूतदयप्रभृतयः देवाः, हिरण्यरोमादयः सप्तर्षयः।।३।।

एवं मन्वादयः पञ्चोक्ताः। [5] अथावतार माह - **पत्नीति**। शुभ्रस्य भर्तुः विकुण्ठाख्या पत्नी, तयो र्विकुण्ठाशुभ्रयोर्भगवान् कलया अंशेन वैकुण्ठ इति प्रसिद्धोऽन्यैश्च वैकुण्ठाख्यैः सुरसत्तमै स्सह जज्ञेऽवतीर्णः।।४।।

वैकुण्ठाख्यं भगवन्तं विशिनष्टि - **वैकुण्ठ इति**। देव्या रमया लक्ष्म्या प्रार्थ्यमानेन येन वैकुण्ठेन भगवता तस्या लक्ष्म्याः प्रियं कर्तुमिच्छया वैकुण्ठः वैकुण्ठाख्यो लोकः कश्चिदण्डान्तर्वर्ती [6] कल्पितः। स च लोकालोकपर्वतस्यैर्जनैः नमस्कृतः लोकालोकपर्वतोपरि निर्मित इति भावः।।५।।

तस्य वैकुण्ठस्य भगवतोऽनुभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां जयविजयाभ्यां वराहादि रूपेण युद्धादिलक्षणः प्रभावो गुणाश्च ब्रह्मण्यतादयः परमोदया; महर्द्धयश्च कथिताः। तृतीयसप्तमस्कन्धादिषु कथिताः

1--1. A,B,J. कृतां देवैर्हरेः स्तुतिम् 2. H.J Omit च 3. W. "स्कतम" 4. A,B,T Omit ते 5. W, Omits अथ 6. A,B, "व"

संङ्ग्रहेण कथितां: कार्त्स्न्येनाऽधुना कथयेत्यत्राऽऽह - भौमानिति यः पुमान् विष्णोः गुणान्वर्णयन् साकल्येनेति शेषः। स भौमान् भूसम्भवान् रेणून् विममे गणयेत् , भौमानां रणूनां गणनवद्विष्णोः गुणानां साकल्येन वर्णनमशक्यमित्यर्थः। यद्यपि वराहावतार; स्वायम्भुवमन्वन्तरारम्भकालिकः तृतीयस्कन्धे उक्तः, जयविजययोः सनकादिशापेन दैत्यताप्राप्तिस्तु रैवतमन्वन्तर इति तस्यानुभावः कथितः इत्येतदसङ्गतम्। तथाऽपि दंष्ट्राग्रेण भूमिमुद्धृत्य यावद्धिरण्याक्षसमागम स्तावत्समुद्रे विहरति सति वाराहेऽस्मिन्मन्वन्तरे दैत्यतां प्राप्तो जयस्तेन हत इत्यवगन्तव्यम्। न चैव मपि तद्वधस्य वराहावतारानुभावत्वात् वैकुण्ठावतारानुभावत्व कथनमसङ्गतम् इति वाच्यम्। अवताराणां भिन्नत्वेऽप्यवतारिणो भगवतः एकत्वात् पार्षदयोः दैत्यत्व प्राप्तेः वैकुण्ठावतार समकालिकत्वात् तद्धननस्याऽप्येतत्सङ्कल्पमूलकत्वाच्चेति विभावनीयम्।।६।।

षष्टं मन्वन्तरमाह - **षष्ठस्थ्विति**। षष्ठस्तु मनुश्चक्षुषः पुत्रश्चाक्षुष इति प्रसिद्धः, पूर्वादय श्चाक्षुषस्य मनोरात्मजाः।।७।।

**इन्द्रस्तु** मन्द्रद्रुम इति प्रसिद्धः। तत्र मन्वन्तरे आप्यादयो गणा[2] देवगणा; हे राजन् ! तत्र मन्वन्तरे हविष्मदादय; सप्तर्षयः। एवं मन्वादयः पञ्चोक्ता;।।८।।

अवतार माह - **तत्रापीति**। तत्राऽपि षष्ठेमन्वन्तरेवैराजस्य भर्तुः सम्भूत्याख्यायां भार्यायांजगती पतिः भगवान् अंशेनाऽजित इति प्रसिद्धोऽभवत्।।९।।

अवतारप्रश्नावसरं प्रयच्छन् [3]अजिताख्यं भगवन्तं[3] विशिनष्टि - **पयोधि** मिति। येनाऽजितेन पयोधिं क्षीरोदधिं निर्मथ्य सुराणां सुधाऽमृतं साधिता सम्पादिता। येन च कूर्मरूपेणाऽम्भसि भ्रममाणो मन्दरोऽद्रिः पृष्ठे धृतः।।१०।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भक्त्या स्तुवतः पुरुषस्याऽपि प्रसन्नो भवति हरि रित्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये तत्राऽदौ क्रम प्राप्तमन्वन्तराधिप कथां प्रसञ्जयति - **राजन्निति**। रेवतस्य विद्यमानं रैवतम्।।१।।

बलविन्ध्यावादी येषां ते तथा। अर्जुनः पूर्वः प्रधानो येषान्ते तथा।।२।।

विभु र्विभुनामा हरिः द्विजाः सप्तर्षयः।।३।।

1- -1. A Omits 2. W.Omits गणा 3- - 3. A,B,T अजितं

विकुण्ठायाः [1-]पुत्रो वैकुण्ठः[-1], तयो विकुण्ठाशुभ्रयोः [2-]कलयापि अंशेन[-2]।।४-५।।

भौमान् रेणून् पृथ्वीरजांसि विममे मानं संख्यां करोति।।६।।

पुत्रा उज्यन्ते इति शेषः चाक्षुषात्मजाः पुरुषादय इत्यन्वयः।।७।।

अत्रादिशब्दार्थो ग्रन्थान्तरा दवगन्तव्यः।।८-१०।।

### राजोवाच

**यथा भगवता ब्रह्मन्! मथितः क्षीरसागरः।**
**यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना।।११।।**

**यथाऽमृतं सुरैः प्राप्तं [3]किंवाऽन्यदभवत्ततः।**
**एत द्भगवतः कर्म वदस्व परमाद्भुतम्।।१२।।**

**त्वया स[4]ङ्कीर्त्यमानेन महिम्ना सात्वतां पतेः।**
**[5]नाऽतितृप्यति मे चित्तं सुचिरं तापतापितम्।।१३।।**

### सूत उवाच

**[6-]विष्णुरातेन सम्पृष्टो भगवान् बादरायणिः[-6]।**
**अभिनन्द्य हरे वीर्यं [7-]मभ्याचष्ट[-7] प्रचक्रमे।।१४।।**

### श्रीशुक उवाच

**यदा युद्धेऽसुरै र्देवा [8]बाध्यमानाश्शितायुधैः।**
**गतासवो निपतिता नोत्तिष्ठेरन् [9-]पुनश्चते[-9]।।१५।।**

**यदा [10]दुर्वाससश्शापात् सेन्द्रा लोका स्त्रयो नृप।**
**निश्श्रीकाश्चाऽभवं स्तत्र नेशुरिज्यादयः क्रियाः।।१६।।**

**श्रीध० यथेति**। यतो हेतोः अम्बुचरात्मना कूर्मरूपेण।।११।।

यथाऽमृत मिति। सुराणां साधिता सुधेत्युक्त्वा युद्धाद्यपि सूचितमं अतः पृच्छति किञ्चाऽन्य दिति ।।१२-१४।।

**यदेति**। नोत्तिष्ठेरन् न पुनर्जीवन्तिस्मेत्यर्थः।।१५।।

**यदेति**। दुर्वाससा हि कदाचिन्मार्गे गच्छन्त मिन्द्रं दृष्ट्वा स्वकण्ठस्था माला तस्मै दत्ता, तेन च

1- -1. A,B Omit 2- -2. A Omits B,Ma कलयांशेन 3.A,B,G,J,T किञ्चान्य,, M,Ma किमन्य" 4.A,B,G,J,T त्वया सङ्ख्य. M,Ma त्वयेन्यं कथ्य 5. W. नैव 6- -6. A,B,G,T,M,Ma,T सम्पृष्टो भगवानेवं द्वैपायन सुतो द्विजाः 7- -7 H,V "माख्यातु मुप" 8.A,B,G,J,M,Ma,T बाध्यय" 9- -9.A,B,G,J,M,Ma,T स्मभूयशः 10. M,Ma "स शापेन, W.स श्शापेन

श्रीमदेनाऽनादृत्य ऐरावतस्य कुम्भयो र्निक्षिप्ता। स च गजोमत्त: पद्भ्यां तां मालां चूर्णीचकार। तत: कुपितो दुर्वासा स्तं शशाप। त्रिभिलोकै स्सह त्वं[1] निश्श्रीको भव इति - तदेत दाह - यदा दुर्वाससश्शापा दिति। इज्यादयो यागाद्या: ।।१६।।

**वीर०** लब्धावसर: पृच्छति राजा - **यथेति** त्रिभि:। हे ब्रह्मन्! भगवताजितेन यथा क्षीरसागरो मथित: यया रीत्या मथित:, यदर्थं येषां प्रयोजनार्थं मथित: यतश्च हेतो रम्बुचरात्मना कूर्म रूपेणाद्रिं मन्दरं दधार।।११।।

येन च प्रकारेण देवैरमृतं लब्धं, ततो मथनादन्यत् अमृताद्व्यतिरिक्तमपि वस्तु किं किमभवत्? एत त्पयोर्दधिमथनात्मकं भगवतोऽद्भुतं कर्म वदस्व।।१२।।

स्वस्यशुश्रूषांव्यनक्ति - **त्वयेति**। त्वया सम्यक् कीर्त्यमानेन सात्त्वतां पते भगवतो महिम्ना मे चित्तं नैव तृप्यति। अतृप्तौ हेतुं वदं श्चित्तं विशिनष्टि - सुचिरं बहुकालं तापेनाध्यात्मिकादितापत्रयेण तापितं दु:खितम्।।१३।।

एवमापृष्टो भगवान् बादरायणि: प्रश्नमभिनन्द्य कथयामासेत्याह सूत: - **सम्पृष्ट** इति। हे द्विजा:! इत्थं सम्पृष्टो भगवान् द्वैपायनसुत श्शुक: राज्ञ: प्रश्नमभिनन्द्य हरे र्वीर्यं माहात्म्यं अभ्याचष्टुं कथयितुं प्रचक्रमे आरेभे।।१४।।

[2-]तदेवाह[-2] - यदेत्याद्यष्टभि[3] रध्यायै:। पयोर्दधिनिर्मथनात्मकं भगवतश्चरित्रं वक्तुं तावत्तादुपोद्घातं प्रपञ्च यति द्वाभ्यामध्यायाभ्याम्। यदाऽसुरै: कर्तृभि: निशितायुधै: साधनै र्युध्यमाना देवा: गतप्राणा: निपातिता:। बहुश: पुन र्नोत्तिष्ठेरन् नाऽजीवन् स्म।।१५।।

यदा च दुर्वाससोमुने: शापेनेन्द्रेणसहितास्त्रयो लोका: निश्श्रीका निर्लक्ष्मीका: निस्सम्पदोऽभवन्। दुर्वाससा हि कदाचिन्मार्गे गच्छन्त मिन्द्रं दृष्ट्वा स्वकण्ठमाला कृपया तस्मै दत्ता। तेन च इन्द्रेण श्रीमदेन अनादृत्य माला ऐरावतस्य कुम्भे र्निक्षिप्ता। स च मत्त: पद्भ्यां मालां चूर्णीचकार। तत: कुपितो दुर्वासास्तं शशाप त्रिभिलोकैस्सह त्वं[4] निश्श्रीको भवेति तदेत दुक्तं - यदा दुर्वाससश्शापेनेति। तत्र तदा इज्यादयो यागादय: क्रिया: नेशु र्न समर्था: श्रियं वर्धयितुं नाशक्रुव न्नित्यर्थ:।।१६।।

**विज०** यथाकथं यत:कुत:, अम्बुचरात्मना कूर्मरूपेण।।११,१२।।

तापै: आध्यात्मिकादिदु:खै: तापितं क्लेशितम्।।१३।।

---

1. H,V Omit त्वम् 2- -2. W.Omits 3 W. "त्यादिना अष्ट" 4.W Omits त्वं

सूतः शौनकादिसंवादाविस्मरणार्थं राज्ञा पृष्टः श्रीशुक स्तस्य चोद्यं परिहर्तु मुपक्रमत इत्याह - **सूत** इति।।१४।।

कथ मुपक्रान्तवानिति तत्राऽऽह - **यदेति**। गतासवः प्राणबलरहिताः यदा च नोत्तिष्ठेरन् यदा च निश्श्रीका अभवन् तत्र तदा इज्यादयः क्रियाः नेशुरित्यन्वयः।।१५-१६।।

**निशाम्यैतत्सुरगणा महेन्द्रवरुणादयः।**
**नाध्यगच्छन्स्वयं मन्त्रैः मन्त्रयन्तो विनिश्चयम्।।१७।।**

**ततो ब्रह्मसभां जग्मु र्मेरो र्मूर्धनि सर्वशः।**
**सर्वं विज्ञापयाञ्चक्रुः प्रणताः परमेष्ठिने।।१८।।**

**स विलोक्येन्द्रवाय्वादीन् निस्सत्त्वान्विगतप्रभान्।**
**लोकानमङ्गलप्रायान् [1-]असुरान[-1] यथा विभुः।।१९।।**

**समाहितेन मनसा संस्मरन्पुरुषं परम्।**
**उवाचोत्फुल्लवदनो देवान्स भगवान्परः।।२०।।**

**अहं भवो यूयमथा[2]सुरादयो मनुष्यतिर्यग्द्रुम घर्मजा[3]तयः।**
**[4]यस्यावतारांशकला विसर्जिता व्रजाम सर्वे शरणं तमव्ययम्।।२१।।**

**न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीय पक्षः।**
**[5]तथाऽपि सर्गस्थितिसंयमार्थं धत्ते रजस्सत्त्व तमांसि काले।।२२।।**

**अयं [6]तु तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनाम्**
**तस्माद् व्रजाम श्शरणं जगद्गुरुं स्वानां स नो [7]दास्यति शंसुरप्रियः।।२३।।**

**श्रीशुक उवाच**

**इत्याभाष्य सुरान्वेधाः सह देवै ररिन्दम।**
**अजितस्य पदं [8]साक्षाज्जगाम तमसः परम्।।२४।।**

**श्रीध० स** इति। असुरान् अयथा देववैलक्षण्येन [9]बलपुष्ट्यादियुक्ता न्विलोक्येत्यर्थः।।१७ - १९।।

**समाहितेति**। हरिं शरणं गता स्सन्तो यथापूर्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकसितं वदनं यस्य।।२०।।

---

1- -1. M,Ma "न्सुरां श्चेव 2. A,B,G,J,Tथोऽ" 3. W,"ह" 4. B त" 5. A,B,G,J,M,Ma,T अ" 6. A,B,G,J,Tच
7. A,B,G,J,M,M,T धा" 8. W लोकात 9. H,V नैपुण्या"

**अहमिति।** मनुष्यादयो जरायुजाण्डजोद्भिज्जस्वेदजाः, यस्यावतारः पुरुष स्तस्यांशो ब्रह्मा, तस्य कला मरीच्यादय स्ताभि र्विसर्जिताः, पुत्रपौत्रादिद्वारा जनिताः।।२१।।

ननु तर्हि सर्वेष्वसौ समः स्यात् , किं तच्छरणाश्रयण। सत्यम् , यद्यप्येवं, तथाऽपि अस्मत्पक्षपाती भविष्यतीत्याशयेनाह - न यस्येत्यादिद्वाभ्याम्।।२[1]।।

**अयमिति।** स्थितिपालनस्य क्षणः कालः, अतः सुरप्रियस्सन् स्वीयानां नः शं सुखं करिष्यति।।२३।।

**इतीति।** यत्र क्षीराब्धौ हरे र्वासस्तदेव तमसः परं[2] पदं स्थानम्। यद्वा लोकालोकाद्रेः[3] परतो यत्तमः ततः परं स्थानं जगाम।।२४।।

**वीर०** तदा सुरगणः इन्द्रादिदेवगणः एतत्त्रैलोक्यस्य निश्श्रीकत्वं पतितानां देवानाम् अनुत्थानञ्च निशाम्य दृष्ट्वा स्वयं मन्त्रैर्मन्त्रयन्तोऽपि आलोचनानि[4] कुर्वन्तोऽपि विनिश्चयं सश्रीकत्वाद्यावहोपायनिश्चयं नाध्यगच्छन् न प्रापुः[5]।।१७।।

ततो निश्चयानधिगमनानन्तरं मेरो र्मूर्धनि स्थितां ब्रह्मणश्चतुर्मुखस्य सभां सर्वशः सर्वे जग्मुः। तत्र गत्वा सर्वे प्रणताः कृतप्रणामाः परमेष्ठिने ब्रह्मणे विज्ञापयाञ्चक्रुः[6]।।१८।।

[7-]ततः श्रुत्वा ब्रह्मा किमकरोदित्यत आह - स इति[-7]। ततः स परमेष्ठी विगतप्रभान् निस्तेजस्कान् निस्सत्वान् बलहीनानिन्द्र वाय्वादीन् देवगणान् [8-]अमङ्गलान्[-8] [9-]मङ्गल रहितानिव स्थितान्[-9] त्रीन् लोकांश्च विलोक्य तथा असुरान् देवगणाद्विलक्षणान्[10] तेजोबलादि युक्तांश्च विलोक्य [11-]सुरानाहेत्युत्तरेणान्वयः[-11] विभुर्ब्रह्मा।।१९।।

समीहितेनैकाग्रेण मनसा परमपुरुषं संस्मरन् परमपुरुष शरणवरणेन यथापूर्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकसितं वदनं यस्य स भगवान् ब्रह्मा देवानिन्द्रप्रमुखान्[12] सुरान्[13] देवानुवाच।।२०।।

तदेवाह - अहमिति त्रिभिः। अस्मदादयः सर्वे यस्य भगवतोऽवतारः सृष्ट्याधिकृतोऽनिरुद्धः तस्यां शकलया अंशांशेन ज्ञानशक्त्यादिगुणलेशेन विसर्जिताः उत्पादिताः, तमेवाव्ययं भगवन्तं शरणं व्रजाम गच्छाम[14]। यः स्रष्टा स एवास्माकं रक्षिता अतस्तमेव शरणं व्रजाम। इतोऽन्यो न कश्चिदुपायोऽस्तीति भावः। तत्राहं चतुर्मुखः[15], भवो रुद्रः, यूयं देवाः, द्रुमाः वृक्षाः, धर्मजादयः[16] स्वेदजोद्भिज्जादयः[17]।।२१।।

1. A,B,J "ति 2. B,H,J,V Omit पदं 3. A,B,J "कात्प" 4. A,B,T "च यन्तो" 5. A,B,T add इत्यर्थः 6. A,B,T add विज्ञापनं चक्रुः इत्यर्थः. 7- -7. W Omits 8- -8. तथाऽमङ्ग लप्रायान् 9- -9. W Omits 10. W ०णाद्विल० 11- -11. W.Omits 12. A,B,T Omit प्र 13. W Omits सुरान् 14. A,B,T "च्छे" 15 A,BT ब्रह्मा 16 A,B,T "त" 17. A,B,T "ज्ञा"

ननु तेन यथा वयं सृष्टास्तथाऽसुरा अपि। अत स्तान्निगृह्य वैषम्यादिप्राकृतगुणरहितः कथ मस्मान् रक्षिष्यतीत्याशङ्कां निराह - न यस्येति द्वाभ्याम्। तत्र अर्धेनाक्षेपः, सार्धेन तु परिहारः। यद्यप्यस्य वैषम्यनैर्घृण्यादिप्राकृतगुणरहितस्य वध्यादिपक्षो नाऽस्ति, तथाऽपि जगतः सृष्ट्याद्यर्थं, काले सृष्ट्याद्युपभुक्तकाले रजस्सत्वतमांसि धत्ते बिभर्ति। त्रिगुणोन्मेषनिमित्तकर्मानुगुणं प्रवर्तत इत्यर्थः।।२२।।

[1-]तर्हि रजआदि[-1] धत्तां नाम, तथाऽपि प्रकृते किमायातमिति चेत्, तत्राऽह - अयन्त्विति। देहिनां भवाय सत्तायै स्थितये इत्यर्थः। सत्वं जुषाणस्य सत्वगुणोन्मेषनिमित्त कर्मानुगुणं प्रवृत्तस्य तस्य भगवतोऽयं स्थितिपालनक्षणः स्थित्यात्मकपालनस्य कालः, सत्त्वप्रधानदेवादिपालनकालोऽय मिति भावः। यत एवं तस्मात्सर्वे वयं जगद्धितकारिणं शरणं व्रजामः रक्षणोपायत्वेन अध्यवस्यामः। स्वानां शरण व्रजनमात्रेण स्वीयत्वेन परिगृहीतानामस्माकं शं सुखं दास्यति यतोऽयं [2-]भगवान्[-2] स्वत एव सुराः प्रिया यस्य तादृशः।।२३।।

[3-]एवं ब्रह्मा सुरा न्प्रत्युक्त्वा अजितस्य भगवतः स्थानं तस्सुरैस्सह जगामेत्याह भगवान् बादरायणिः - इतीति[-3]। हे अरिन्दम! [4]कामक्रोधादिदमन! राजन्! इतीत्थं [5]सुरान्देवान् आभाष्य वेधाः [6]ब्रह्मा [7-]सर्वं जगद्वि दधाति सृजतीति तथा तादृशश्चतुर्मुखः[-7] देवैस्सह लोकात् यत् परं अलोकाख्यं तमः तस्मा त्तमसः परं अजितस्य [8-]भगवतः[-8] पदं स्थानं जगाम [9]ययौ।।२४।।

**विज०** यदा देवा निश्चयं नाऽध्यगच्छन्, तत स्तदा ब्रह्मसभां जग्मु रित्यन्वयः।।१७-१९।।

परं पूरकं, सृष्ट्येति शेषः।।२०।।

घर्मजातयः स्वेदजाः।।२१।।

यस्य वध्यादयो न सन्ति।।२२।।

तस्य हरे रयं कालः स्थिति पालनावसरः। धास्यति ददाति, शं सुखम्।।२३।।

अजितस्य हरेः।।२४।।

**तत्राऽदृष्ट [10-]स्वरूपाय[-10] श्रुतपूर्वाय वै विभो।**
**[11]स्तुति[12]मब्रूत दैवीभिः गीर्भिस्त्ववहितेन्द्रियः।।२५।।**

1--1.W.Omits 2- -2. W.Omits 3- -3.W.Omits 4- -4.W.Omits 5. W.Omits सुरान् 6. A,B,T Omit ब्रह्मा 7- -7. W.Omits 8- -8. W.Omits 9. W.Omits ययौ 10- -10. M,Ma चाऽभ्यधात्, W.चाऽभिभोः 11. W "त 12. M,Ma मब्रुतं

[1-] ब्रह्मोवाच [-1]

अविक्रियं सत्य मनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम्।
मनोऽग्रयानं वचसाऽनिरुक्तं नमामहे देववरं वरेण्यम्।।२६।।

विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्र मव्रणम्।
छायातपौ यत्र न गृध्रपक्षौ तमक्षरं स्वं त्रियुगं व्रजामहे।।२७।।

अजस्य चक्रन्त्वजयेर्यमाणं मनोमयं पञ्चदशार माशु।
त्रिणाभि विद्युच्च[2]ल मष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये।।२८।।

[3]यदेकवर्णं तमसः परं त[4]दलोकमव्यक्तमनन्त पारम्।
आसाञ्चकारोप सुपर्ण[5]मेन मुपासते योगरथेन धीराः।।२९।।

न यस्य कश्चाति तितर्ति[6] मायां यया जनो मुह्यति वेदनार्थम्।
तं निर्जितात्मात्मगुणं परेशं नमामि[7] भूतेषु समं चरन्तम्।।३०।।

इमे वयं [8]यत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरन्त[9]राविः।
गतिं न सूक्ष्मा मृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः।।३१।।

पादौ[10] महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः।
स मे महापूरुष आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः।।३२।।

**श्रीध०** **तत्रेति**। दैवीभि र्लोकेऽप्रसिद्धाभिः वैदिकीभिः गीर्भिः स्तुति मकरोत्।।२५।।

**अविक्रिय** र्मिति। देववरं त्वां नमामहे [11]नमाम। हे देववर त्वां नमामहे इति वा वरत्वे हेतुः - सत्यम्। कुतः ? अविक्रियम्। तत्कृतः अनन्तमाद्यञ्च अनादिम्। आद्यन्तवन्तो हि वृद्ध्यादिविक्रियायुक्ता भवन्ति। किञ्च गुहाशयम् सर्वान्तरम्। कुतः ? निष्कलम् निरुपाधिम्। तत्कुतः? अप्रतर्क्यम्। तत्कुतः मनोऽग्रयानं मनसोऽपि जविष्टम्। मनः [12]प्राप्ये स्थाने ततः प्रागेव विद्यमानत्वात्। तथा च श्रुतिः - "अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्व मर्षत्। तद्धावतोऽन्यानत्येति तिष्ठत्" (ईश.उ.4) इति। वचसा अनिरुक्तम् , अविषयत्वात् - "यद्वाचाऽनभ्युदितम् येन वागभ्युद्यते" (केन.उ.1-4) [13]इति श्रुतेः मनो-

1- -1. H V.W Omit 2. M,Ma "ड्ल" 3. A,B,G.J.T यएक 4. M,Ma स" 5. M,Ma "पत्र" 6. M,Ma पिपर्ति 7. A,B,G,J,T "म 8. M.Ma यत्कृपयैव 9. M.Ma "रे विभो! 10. A.B,G,J,M,Ma, T वै 11. B,H,J,V Omit नमाम 12. H,V "प्राप्यस्था" 13. H,V इत्यादि

वचसोरगोचरत्वात् अप्रतर्क्यम्। यथेष्टं वा। सर्वेषां हेतुहेतुमद्भावः।।२६।।

**विपश्चित** मिति। किञ्च, प्राणादीनां विपश्चितं ज्ञातारम् । आत्मा अहङ्कारो देहो वा, न तु तद्व्यतिरिक्तं ज्ञेयमस्तीत्याह। अर्थो विषयः इन्द्रियाणि तद्ग्राहकाणि, तदुभयरूपेणाभासत इति तथा तम्। तथाऽप्यनिद्रं स्वप्नद्रष्टृवदज्ञानरहितम्। कुतः? अव्रण मदेहम्। अत एवाऽक्षरम् , ख [1]माकाश मिव व्यापिनञ्च। सर्वत्र हेतुः, यत्र यस्मिन् गृध्रपक्षौ जीवपक्षपातिनौ छायाऽऽतपौ अविद्या च तन्निवर्तिका विद्या च नास्ति तं त्रियुगं त्रिषु युगेष्वाविर्भवन्तं शरणं [2]व्रजामहे [3]व्रजामः ।।२७।।

तदेवमविक्रियत्वादिभिः [4]सर्वज्ञत्वादिभिश्च[-4] सत्यत्वं वरेण्यत्वञ्चोक्तम् । संसार चक्राधारत्वेनाऽपि तदेव दर्शयन्नाऽऽह - **अजस्येति**। अजस्य जीवस्य चक्रं चक्रवदावर्तमानं देहादि। अजया मायया प्रेर्यमाणं योऽक्षो यस्य [5]यदक्षं यदधिष्ठानमाहुः, तमृतं सत्यं प्रपद्ये। कथम्भूतं चक्रम्? मनोमयं मनःप्रधानम्। [6]ज्ञानेन्द्रियाणि पञ्च[-6] कर्मेन्द्रियाणि पञ्च, पञ्च प्राणाश्चेत्येवं पञ्चदश अरा यस्य । आशु शीघ्रगम्। त्रयो गुणा नाभि रिव मध्ये यस्य, विद्युदिव चलं [7]नस्थिरम् , अष्टौ प्रकृतयो नेमय इवावरणानि यस्य।।२८।।

सर्वजीवनियन्तृत्वादिना च वरिष्ठत्वमाह - **यदिति** य उपसुपर्णं जीवसमीपे तन्नियन्तृत्वेनासाञ्चकार आस्ते स्म। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" (श्वेता.उ.4-6) इति श्रुतेः। यद्वा भक्तर[8]क्षार्थं गरुडस्योपरि [9]य उपविष्ट इत्यर्थः। तर्हि देहस्थत्वाद्भक्तरक्षणादि [10]क्रियावेशाद्वा जीवसाम्यं स्या, तत्राह - एकवर्णं ज्ञानैकस्वरुपं, तमसः, प्रकृतेः परमलोकमदृश्यमव्यक्तं निर्विकल्प मनन्तपारं कालतो देशतश्चापरिच्छिन्नम् तद्ब्रह्मै[11]वम् अप्रच्युतस्वरूपन्वात् न जीवसाम्यम्। "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" (श्वेता.उ.4-6) इति विशेषश्रवणादित्यर्थः। अत एव य[12]मेनं धीरा योगेन रथेन प्राप्तिसाधने नोपासते भजन्ते तं नमामेत्युत्तरेणान्वयः।।२९।।

मायानियन्तृत्वेनापि जीवसाम्यं परिहरन् वरिष्ठत्वमाह - **न यस्येति**। यस्य मायां कश्च कश्चिदपि नातितितर्ति नातिक्रामति। कथम्भूतम् जनो यया मुह्यति, अर्थमात्मस्वरूपं न तु वेद। निर्जित्त आत्मा आत्मशक्तिर्माया च, तद्गुणाश्च येन तम्।।३०।।

1. B,H,J,V, Omit आकारा° 2. B,H,V Omit व्रजामहे 3. A Omits व्रजामः, B,J,व्रजाम 4- -4. B Omits 5. B,H,J,V Omit यदक्षं 6- -6. A,B,J दशेन्द्रियाणि 7. B,H,J,V Omit नस्थिरम् 8 A "क्षणा" 9. H,V Omit य, 10. H,V "यादे" 11. A,B,J "व यः अ" 12. H,V Omit एनं

अर्थं न वेदेति यदुक्तं, तत्प्रपञ्चयन्नाह - **इमे वय** मिति। इमे वयं देवा ऋषयश्च यस्य प्रियया तन्वा सत्त्वेनैव सृष्टा अपि बहिश्च[1] अन्तश्च सत्ताप्रकाशाभ्या माविः प्रकट[2] मपि सूक्ष्मां गतिं निरुपाधिस्वरूपं न विद्युः इतरप्रधाना रजस्तमोमयाः, कुतो विदुः। तं नमा मेति पूर्वेणान्वयः ।।३१।।

इदानीं वैराजरूपेण स्तुवन्प्रार्थयते - **पादौ महीति** द्वादशभिः। यत्र मह्यां जरायुजादिभूतसर्गः स मही यस्य पादौ स नः प्रसीदतु। आत्मतन्त्रः पदादिमत्त्वेऽपि न तत्परतन्त्रः। कुतः? ब्रह्म अप्रच्युतरूपः। तत्कुतः? महती विभूति रैश्वर्यं यस्य सः।।३२।।

**वीर०** तत्र पदे अदृष्टस्वरूपाय। "न मां सचक्षुरभिवीक्षते तम्"। इत्याद्युक्तरीत्या स्वस्य दुर्दर्शनत्वं ज्ञापयितु मदृष्टं ब्रह्मादिभिः कदाऽपि[3] न[4] दृष्टं[4] स्वरूपं यस्य तस्मै। श्रुतपूर्वाय पूर्वं श्रुतः [5]वेदशास्त्रादिभि रिति[5] श्रुतपूर्वः तस्मै। अजिताख्यो भगवान् अवतीर्णः इत्येतावन्मात्रं ब्रह्मादिभिः श्रुतं, नतु दृष्ट इति भावः। एवं विधाय तस्मै, प्रणम्येति शेषः। स्तवहितेन्द्रियः स्तवाय हितेन्द्रियः स्तोतुं समहितेन्द्रियो ब्रह्मा दैवीभिः औपनिषदर्थानुकारिणीभिः गीर्भिः आभिभोः स्वयमनभिभूतः इतरानभिभवति जयतीत्यभिभुः अजितः, तस्य स्तुतं भावेक्तः, स्तुति मब्रूत, उवाच अकरोदित्यर्थः।।२४।।

स्तुत मेवाह - **अविक्रिय** मित्यादिना। तावत् प्रकृतिपुरुषविलक्षणं तत्तदुपनिषत्प्रतिपाद्यं परमात्मस्वरूपं विशोध्य नमस्कृत्य शरणं व्रजति - **अविक्रिया** मिति द्वाभ्याम्। हे देव! त्वां मामः नमस्कुर्मः। बहुवचनमिन्द्रादिदेवताभिप्रायकम्। कथ म्भूतम्! वरं श्रेष्टं, निस्समाभ्यधिकम् अत एव वरणीयम्। वर मित्यनेन - "न तत्समश्चाऽभ्यधिकश्च दृश्यते" (श्वेता.उ.6-8) इति श्रुत्यर्थस्सूचितः। देव वरेण्य शब्दाभ्यां गायत्र्यर्थः। वरत्वे हेतुः - मनोऽग्रयानम् । वचसाऽनिरूक्तम् , मनसोऽग्रे अविषयत्वेन योऽनिवर्तत इति तथा। वचसा निर्वक्तुमशक्यं, वाङ्मनसाविषयमित्यर्थः। सर्वं हि चेतनाचेतनात्मकं जगद्वाङ्मनसयोः विषयम् अत एववरम्। परमात्मातु तदविषयत्वाद्वर इत्यर्थः। यद्यपि परमत्माऽपि योगपरिशुद्धमनोविषयो वेदान्त वाग्विषयश्च, तथाऽपि इयत्तया ताभ्यामपि परिच्छेत्तुमशक्योऽनन्तस्वरूपस्वभावत्वादिति भावः। वाङ्मनसाविषयत्वे हेतु रप्रतर्क्य मिति। प्रकृतिपुरुष सजातीयत्वेन तर्कितु मशक्यम्। यत्प्रतर्क्यं तदेव वाङ्मनसविषयमिति भावः। अप्रतर्क्ये हेतुः - निष्कलमिति। कला अवयवाः। निरवयवं कर्मायत्तप्राकृत-

---

1.A,B,B,J, "हिरन्तश्च 2. A,B,J "टा" 3.W.Omits कदापि 4- -4. W. अदृष्टं 5- -5. W. Omits

शरीररहित मित्यर्थः। यत्सकलं तदेव प्रतर्क्यमिति भावः। आकाशादिक मपि सकल मेवेति तात्पर्यम्। तर्हि ईदृशः कुत्रास्ते? इत्यत आह - **गुहाशयम्** अस्मदादि हृदयगुहायामेव शयं[1] शयानं वसन्त मित्यर्थः। स तर्हि किं जीवः? " हृदि ह्यय मात्मा प्रतिष्ठितः" (प्रश्न.उ. 3-6) इति श्रवणान्नेत्याह - **आद्यम्** आदौ भवमाद्यम्, हृदयावस्थजीवानामपि उपादानकारणतया आदौ वर्तमानम् गुहाशयत्वप्रयुक्तं परिच्छिन्नत्वं वारयति - **अनन्त** मिति। उपासकानुग्रहाय, अन्तरात्मतया नियमनाय च हृदयावच्छिन्नत्वेऽपि स्वरूपतो देशकालवस्तुपरिच्छेद रहितम् आद्यत्वप्रयुक्तं स्वरूपतः स्वभावतश्च प्रकृतिपुरुषयोरिव प्राप्तं विकारं वारयति। **अविक्रियं सत्यमिति** अविक्रियं प्रकृतिरिव स्वरूपान्यथाभावरूपविकाररहितम्। सत्यम् , पुरुष इव [2-]स्वभावान्यथाभावरूपविकार[-2] रहितम्। सद्वारकत्वाद्विकारस्याद्यत्वेऽपि स्वरूपतः स्वभावतश्च निर्विकारमेवेति भावः। अत्र प्रतिपदं "सत्यं ज्ञानमनन्तम्"(तैत्ति.उ. 2-1-1) निष्क्रियं निष्कलं शान्तं निरवद्यम् (श्वेता.उ. 6-19) "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्" (कठ.उ. 2-12) "अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्" (ईश.उ. 3-4) "यद्वाचाऽनभ्युदितम् ( केन.उ.1-4 ) इत्यादि श्रुत्यर्थोनुसन्धेयः।।२६।।

अन्यैरपि प्रकृतिपुरुषयो रसम्भावितैः गुणै देवं[3] विशिंषन् शरणं व्रजति - **विपश्चित** मिति। प्राणदीनां विपश्चितं साक्षात्कर्तारम् , तत्रात्मानो जीवाः। न हि सर्वप्रकृतिविकारजीवयुगपत्साक्षात्कर्तृत्वमेकस्य जीवस्य सम्भावितमिति भावः। अर्थाः शब्दादयो विषयाः, तद्ग्राहकाणि श्रोत्रादीनीन्द्रियाणि च। तेषामाभासं प्रकाशकं, जीवानामर्थेन्द्रियप्रकाशकमित्यर्थः। अनिद्रम् निद्राग्रहणं जाग्रदाद्यवस्थात्रयोपलक्षणम् अवस्थात्रय रहितमित्यर्थः। तत्र हेतुः - अव्रणं कर्मायत्तशरीररहितम्। तत्रापि हेतुः छायातपौ अज्ञानं तन्मिश्रं ज्ञानञ्च गृध्रपक्षौ - "गृधू अभिकाङ्क्षायाम्" रागादिमत्पुरुषाश्रयौ यत्र यस्मिन् न स्तः तादृशमक्षरम्। अश्नोते स्सरप्रत्ययः। सर्वव्यापकम्। तत्र दृष्टान्तः - ख माकाशमिव व्याप्त मित्यर्थः। त्रियुगं पूर्णषाड्गुण्यं कृतादि- युगत्रयाविर्भाववन्तं वा व्रजामहे, शरणमिति शेषः।।२७।।

पुनरप्यसाधारणेन धर्मान्तरेण विशिंषन् शरणं व्रजित - **अजस्येति**। मनोमयं चक्रं यदक्षं यः परमात्मा अक्षो यस्य तत्तथोक्तम् यच्छब्दस्य प्रतिनिर्देशः तमिति तं परमात्मानम् ऋतं सत्यम् प्रपद्ये शरणं व्रजामीत्यन्वयः। मनोव्यापारमूलकं संसाररूपं चक्रं अजस्य भगवतोऽजया मायया ईर्यमाणं प्रवर्त्यमानं पञ्चदशारं दशेन्द्रियपञ्चवृत्तिप्राणारम्। त्रिणाभि त्रयस्सत्त्वादयो गुणा एव नाभिर्यस्य तत्,

1. A,B,T Omit शयं 2- -2. W. Omits 3. W.Omits देव

अनुकूलप्रतिकूलोदासीनवृत्त्युपेतं वा। अष्ट नेमि "भूमिरापोऽनलो वायुः खं मनो बुद्दि रेव च अहङ्कारः" (भा.गी. 7-4) इत्यष्टप्रकृतय एव नेमिर्यस्य विद्युदिव चलं यः परमात्मा अक्ष माश्रयो यस्य तत्, तत्सङ्कल्पमूलक मित्यर्थः। [1]आशु शीघ्रं गच्छतीति तथा[1]।।२८।।

एवं बन्धदत्वरूपोऽनितरसाधारणधर्म उक्तः। अथ मुक्तिदत्वं सूचयन् मुक्तगम्यं लोकं विशिनष्टि - **यदेक** मिति। यदेकवर्णमेकप्रकारं केवलं शुद्धसत्त्वमयमित्यर्थः। तमसः प्रकृतिमण्डलात्परं परस्ताद्विद्यमानम्, "क्षय तमस्य रजसः पराके "(ऋक् . 7-100-5) "आदित्य वर्णं तमसः परस्तात्"(श्वेता . उ . 3-8) इति श्रुतेः। स्थान मिति शेषः। अलोकं संसारिभिः द्रष्टु मशक्यम्। अव्यक्तं रागादि दोषै विंशेषेणाऽक्तं न भवतीत्यव्यक्तम्। उपसुपर्णं " यत्र पूर्वे साध्यास्सन्ति देवाः" (पु.सू.16) इत्युक्तनित्यसिद्धात्मकाः। सुपर्णा हंसाः, तेषां समीपं सन्निकृष्टं तदधिष्ठितमित्यर्थः। अनन्तपारं निरवधिं "त्रिपादस्यामृतं दिवि" छान्दो.उ.3-12-6) इति श्रुतेः। एवम्भूतं पदं य आसाञ्चकार उपविवेश अधिष्ठितवानित्यर्थः। यश्च धीराः योगपथेन योगमार्गेण उक्तविधपदप्राप्तये उपासते। यच्छष्दस्य तमित्युत्तरत्राऽन्वयः। तमृत मिति पूर्वेण वा। उपसुवर्ण मिति पाठे उपेत्यस्य आसाञ्चकारेत्यनेन सम्बन्धः। उपसर्गस्य व्यवहितत्वेन प्रयोगःआर्षः। [2]सुवर्णं सुवर्णवत्प्रकाशबहुलं पदं य उपासाञ्चकार उपविष्टवानि[3]त्यर्थः।।२९।।

एवं मुमुक्षुभिः उपास्यत्वं मुक्तप्राप्यत्वं नित्यविभूत्यधिपतित्वञ्चाऽनितरसाधरणमुक्तम्। अनेन मुक्तिदत्व मप्यनितर साधारणं सूचितम्। तदेव व्यञ्जयन् नमस्करोति **नेति**। कश्चिदप्ययं जनो मत्प्रभृति जनो यस्य भगवतो मायां नाऽतितितर्तिनाऽतिक्रामति - " दैवी ह्येषा गुणमयी मम माया दुरत्यया मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"( भ.गी. 7-14) इति भगवदुक्तार्थोऽत्र अनुसन्धेयः। नाऽतितितर्ति, किन्तु तया मुह्यति। अत एव भूतेषु समं सह चरन्तम् अन्तरात्मतया नियमयन्तम् अर्थं परमपुरुषार्थस्वरूपं यं परमात्मानं न वेद न जानाति। यत्प्रसादात्तु अतितितर्ति न मुह्यति वेद चेतिभावः। तं भूतेषु समञ्चरन्तमपि निर्जितात्मात्मगुणम्। एक आत्मशब्दो देहपरः अपस्तु जीवपरः। चिदचिद्दोषास्पृष्टमित्यर्थः। अत एव परेषामस्माक मपीशं नमामः।।३०।।

कश्चाऽप्यस्य मायां नातितितर्तीत्यनेन अस्य दुरवगमचेष्टितंत्वं सूचितम्। तदेव व्यक्तीकरोति - **इमे** इति इमे वयं देवा ऋषयश्च यस्य प्रियया तन्वा शरीरभूतेन सृष्टा अपि " तत्र सत्त्वं निर्मलत्वात्प्रकाशकम्"

1- - 1. W. Omits 2 A,B,T Omit सुवर्णं 3. W. °त्यन्वयः

( भ.गी. 14-6) इत्युक्तविधसत्त्वगुणप्रधाना अपीति भाव:। अत एव बहिरन्तरश्च आविः अविर्भूतज्ञाना अपि यस्य भगवतो गतिं चेष्टां सूक्ष्मां दुर्विभाव्यां न विद्महे। उक्तविधां वयमेव न विद्महेकुत इतरप्रधानाः रजस्तमः प्रधाना असुराद्या जानीयु:।।३१।।

**यदेकवर्ण** मिति। नित्यविभूत्यधिपतित्व मुक्तम्। अथ लीलाविभूत्यधिपतित्वमनितरसाधारणं वक्तुं कृत्स्नजगदन्तर्गतानां पृथिव्यादिनां[1] तदवयवत्वेन तच्छरीरकत्वं तत्प्रभवत्वञ्च वदन् तं पुरुषसूक्तप्रतिपाद्य-विराड्रूपमुभयविभूत्यधिपतित्वरूपमहाविभूत्यात्मकाऽनितरसाधारणधर्मयुक्तं वारं वारं अनुस्मरन् तत्प्रसादं प्रार्थयते पादौ इत्यादि द्वादशभिः। इयं मही पृथ्वी[2] यस्य स्वकृतैवा स्वेन सृष्टैव। "पद्भ्यां भूमिः" (पु.सू.13) इति श्रुतेः, पादौ स महाविभूतिब्रह्मशब्दवाच्यो नः प्रसीदतामित्यन्वयः। महीं विशिनष्टि - यत्र मह्यां चतुर्विधः जरायुजाण्डजस्वेदजोद्भिज्जरूपोभूतसर्गो भवति। "पुमान्न देवो न नरो न पशुः न च पादपः" (विष्णु. 2-13-98) इत्युक्त चतुर्विधो वा स भगवान् आत्मतन्त्रः स्वतन्त्रः महापुरुषः परमपुरुषो वै राजपुरुषो वा नोऽस्माकं प्रसन्नो भवतु।।३२।।

**विज०** नित्यत्वेनाद्भुताभिः देवस्य हरेः विद्यमानाभिः हरिगुणगणान् प्रतिपादिकाभिः। न न्वादरणीय पक्षो नास्तीति कथं सङ्गच्छते? "परा पूर्वेषाम्" इति श्रुतेः देवानां भगवत्पक्षत्वावगमात् अत्राऽपि देवार्थममृत मथनात् इतिचेत् न। भक्तिवशः पुरुषः "यमेवैष वृणुते तेन लभ्यः"(कठ.उ. 2-22) इत्यादिश्रुतेः देवाना मनुग्राह्यत्वात्तत्पक्षत्वं, स्वार्थं न, इति विवेकात्। "अनुग्राह्यतया पक्षा देवानात्मार्थतो हरेः" (ब्रह्मतर्के) इति वचनात्।।२५।।

वेदशिरोविशारदाना मस्मिं स्तोत्रेऽधिकार इति ज्ञापयन् ब्रह्मा वेदान्तोत्क विशेषणविशिष्टत्वेन स्तौतीत्याह - **ब्रह्मेति**। "निष्कलं निष्क्रियं शान्तम्" (श्वेता.उ.6-19) सत्यं ज्ञानमनन्तम्"(तैत्ति.उ.2-1-1) आत्मा वा इदमेक एवाऽग्र आसीत्। (ऐत.उ.1-1-1) "हृदय आहितं यत् नैषा तर्केण मति रापनेया" (कठ.उ. 2-9) "नहि सुज्ञेय अणुरेष धर्मः(कठ.उ. 1-21) "महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" (तैत्रा.उ. 6-32) "विद्यानां प्रथमो वक्ता" "यद्वाचाऽनभ्युदितम्" (केन.उ. 1-5) "यो देवानां नामधा एक एव" "तत्सवितुर्वरेण्यम्" (म.न.उ.11-7) इत्यादिश्रुतयः प्रतीकतो ग्राह्याः, बहुश्रुतिसङ्ग्रहरूपत्वात् पूर्वोत्तर सम्बन्धोऽत्र नान्वेषणीयः।।२६।।

---

1. A,B,T °व्यादीनां 2. A,B,T Omit पृथ्वी

प्राणमनोधियात्मनां विपश्चितं वेदितारम् "यः प्राणे तिष्ठन्" (बृह.उ. 3-7-16) "प्राणस्य प्राणमुत चक्षुषश्चक्षुः" (बृह.उ. 4-4-18) इत्यादयः "आत्मनि तिष्ठन्" (बृह.उ.3-7-22) इत्यादि । अर्थानीन्द्रियाणि च आभासयति दीपयतीत्यर्थोन्द्रियाभासः,अर्थेन्द्रियाणां सन्निकर्षमुत्पाद्य तद्विषयं ज्ञानं जनयतीत्यर्थः। "यस्य तस्य भासा सर्वमिदं विभाति" (कठ.उ. 6-2-15) यस्ततो भयविच्छदः एवमस्यामेतद्विद्धि[1] [2]अनिद्रम् अस्वप्रमव्रणम् अकायं [3]लिङ्गशरीररहितम् अक्षतं वा। यत्र यस्मिन् हरौ गृध्रस्य सर्वं काङ्क्षमाणस्य जीवस्य पक्षौ पतत्रवद्वर्तमानौ पृथक् अधोर्ध्वमार्गहेतू छायातपौ अविद्याशास्त्रजन्य विद्यालक्षणौ न स्तः "छायात्वविद्या सम्प्रोक्ता जन्यविद्या तपः स्मृतम् जीवगृध्रस्य तौ पक्षावध और्ध्वपथोः पृथक्रतौ विष्णोस्तु न विद्यते नित्यविद्या स्वरूपिणः" (ब्रह्मतर्के) इति वचनादुक्त एवार्थ इति तं त्रियुगं व्रजामह इत्यन्वयः। त्रीणि युगानि यस्य स तथा तं, तेष्ववतारा दिति "स्वयम्भू स्त्रियुगः कृष्णः शार्ङ्गो दामोदर स्तथा" इत्यभिदानम्। "अक्षरात्सम्भवतीह विश्वम्" "एत दध्येवाऽक्षरं ब्रह्म" (कठ.उ.2-16) खं सुखरूपं ज्ञानरूपं वा। "कं ब्रह्म, खं ब्रह्म" (छान्दो.उ.4-10-4)।।२७।।

अजस्य विष्णो रधीनं चक्रं पुनः प्रवाहरूपेण परिवर्तमानत्वात् चक्रसंज्ञं जगत् यः केशवोऽक्ष मक्षस्थानीयो यस्य तत् यदक्ष माहुः तमृतं प्रपद्ये इत्यन्वयः। चक्रं न वृत्तं तदेवर्त [4]मित्यादि चक्रश्चेत्केन चिदीर्यमाणं परिवर्तते। अस्य किं प्रेरक मित्यत उक्तम् अजयेति "कार्यते ह्यवशःकर्म सर्वः प्रकृतिजैर्गुणैः (भ.गी.3-5) इति। अस्य वैलक्षण्यमाह - मनोमय मिति। कान्यस्याराणीत्यत्राह - पञ्चदशारमिति। श्रोत्रदीनि दश, शब्दादयः पञ्च, पृथिव्यादीनि वा प्राणादयो वा पञ्च एत एवाराणि [5]दलानि यस्य तत्तथा, तत् आशु शीघ्रभ्रमं व्याप्तं वा। त्रिणाभिः त्रयोगुणास्सत्त्वादयो नाभिः यस्य तत्तथा। यदक्ष मित्यनेनोक्तं केशवाधारत्वं स्पष्टयति - विद्युद्बल मित्यादिना विद्युत् विशेषेण द्योतमानत्वात् ब्रह्म बल माधारो यस्य तत्तथा। "विद्युद्ब्रह्मोत्युपासीत" "जगच्चक्रस्याक्षभूतो बलरूपश्च केशवः"(ब्रह्मतर्के) इति च। देवासुरमनुष्यादयोऽष्टौ नेमि र्यस्य तत्तथा तत्।।२८।।

इदानीं तुरीयमूर्तिं नमति - यदिति। एकोवर्णो यस्य तदेकवर्णं स्वरव्यञ्जनविभाग विवक्षा मन्तरेण [6]व्यक्तेरेकत्वम् , अन्यथा षोडशस्वरा इति संख्यानुपपत्तिः। ओमित्ये तदक्षर मिदं सर्वं "प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम्। सर्वव्यापिनमोङ्कारम्" तमसोऽज्ञानात्परं तद्रहितमित्यर्थः। तुरीयं तत्सर्वदृक् सदा

1. A,B,M "त" दिवि 2. Ma. adds अज 3. Ma. adds हि 4. Ma. Omits इत्यादि 5 A. Omits दलानि 6 Ma. "रनेकं

प्रकृतेः परं वा। "अक्षरात्परतःपरः" (मुण्ड.उ.2-1-2) "कूटस्थोऽक्षर उच्यते" उत्तमः पुरुषः(भ.गी.15-16) सत् सत्यं ज्ञानं अवसादयति नाशयत्यज्ञानं "न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः" निर्दोषज्ञानं वा ऐकात्म्य प्रत्ययसारम् 'षद्लृ गतौ' इति धातुः। अलोकं लोकव्यवहाराविषयम् , अदृष्टमव्यवहार्यमलक्षणम् , अचिन्त्य मव्यपदेश्यम् अत एव अव्यक्तम् अनन्तपारम् अन्तपारवर्जितम् पारं पूरणम् , समुदायो मात्राणा मिति शेषः। अनन्तमात्रमित्यर्थः इति वा। अमात्रोऽनन्तमात्रश्च। धीराः योगरथेन भक्तिपूर्वकध्यानलक्षणरथेन यदुपासते भजन्ति "ओङ्कार आत्मैव संविशति आत्मनाऽऽत्मानम् य एवं वेद" (माण्डू.उ.12) यश्चोपसुपर्णपत्रं सुपर्णपक्षसमीपे जीवाख्यवाहनपृष्ठे आसाञ्चकार उपविवेश। "सर्वस्य हृदये स्थितः", "य आत्मनि तिष्ठन्" (बृह.उ.3-7-22) "द्वा सुपर्णा सयुजा" (मुण्ड.उ.3-1-1)।।२९।।

जनो यया मायया वेदन्तार्थं ज्ञानविषयं हरिं प्रति ज्ञानाख्यपुरुषार्थं वा। मुह्यति "अनीशया शोचति मुह्यमानः"(मुण्ड.उ.3-1-2) कश्चन तामसप्रकृतिः यस्य तां मायां नाऽति तितर्ति नाऽतिक्रामति अत्येतुं समर्थो न भवति। सात्त्विकश्चे दस्य प्रसादेन जानाति। "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" (माण्ड.उ. गौडपा. का. 1-16) "यमेवैष वृणुते" (कः.उ.2-22) तं नमामीत्यन्वयः। नितरां जित आत्मा आत्मगुणाश्च येन स तथा तम् "निवृत्तेस्सर्व दुःखाना मीशानः प्रभुरव्ययः" (आगम.10) "एको देवः सर्व भूतेषु गूढः" (श्वेता.उ.6-11) "स एष सर्वेश्वरः एष सर्व एषोऽन्तर्याम्येष योनिः सर्वस्य" (नृ.पू.ता.4-2)।।३०।।

सात्त्विकानामपि भगवत्कटाक्षवीक्षामन्तरेण तज्ज्ञानं दुरापमित्यर्थादुक्तं तत् स्पष्ट माह - **इम** इति। विभो! यत्कृपयैव येन सत्त्वेन गुणेन सृष्टाः येन बहिरन्तरञ्च सृष्टाश्चेमे वयं यस्य तव सूक्ष्मां गतिं विश्वव्यापिनीं सच्चिदानन्दाकृतिं न विद्महे, यदनुग्रहमन्तरेण इति शेषः। न च ज्ञानाभावात् तज्ज्ञानाभाव इत्याह - ऋषयश्च ज्ञानिनोऽपि; अन्यथा ब्रह्मादीना मप्राधान्यं स्यात् कैमुत्यन्याय माह - कुत इति। हेतुगर्भ विशेषण माह - इतरेति। इतर स्तमोगुणः प्रधानो येषां ते, तथा।।३१।।

स्वकृतेयं मही यस्य पादाविव न स्वरूपपादौ यत्र यस्यां मह्यां जरायुजादिचतुर्विधो भूतसर्गः स वै स एव प्रसीदता मित्यन्वयः। महापुरुषः पुरुषोत्तमः महा द्विविधं भवनं यस्य स तथा। विविधभवन मेकस्य कथ मुपपद्यते इति तत्राह - बह्म अपरिच्छिन्न गुणपूर्णत्वात्। अथ कस्मा दुच्यते ब्रह्मेति? "बृहन्तो ह्यस्मिन्

गुणाः'' इति श्रुतेः। पादावित्यनेन ''पादोऽस्य विश्वाभूतानि'' (पु.सू.2) इति श्रुत्युक्तार्थः:। ''पातालमेतस्य हि पादमूलम्'' (भाग.2-1-26) इति स्मृत्युक्तार्थश्चेति उभयं वक्ष्यत इति ज्ञातव्यम्।।३२।।

**अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः**
**लोकास्त्रयोऽथाखिललोकपाला. प्रसीदतां नः[1] स महाविभूतिः।।३३।।**

**[2]सोमं मनो यस्य समामनन्ति दिवौकसां वै बल मन्ध आयुः।**
**ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः[3] स महाविभूतिः।।३४।।**

**अग्निर्मुखं यस्य तु जातवेदाः जातः क्रियाकाण्ड निमित्तजन्मा।**
**अन्तस्समुद्रे[4] तु पचन्स्वधातून् प्रसीदतां नः स महाविभूतिः।।३५।।**

**यच्चक्षुरासी त्तरणि र्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम्।**
**द्वारञ्च मुक्ते र[5]मृतस्य मृत्योः प्रसीदतां नस्स महा विभूतिः।।३६।।**

**प्राणादभूद्यस्य चराचराणां प्राणा[6]स्सहो[7] बल मोजश्च वायुः।**
**अन्वास्म सम्राजमिवाऽ[8]नुगा वयं प्रसीदतां नस्स महाविभूतिः।।३७।।**

**श्रोत्रा द्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य [9]नाभ्याः।**
**प्राणेन्द्रियात्मा[10]सु[11]शरीरकेतनं प्रसीदतां नस्स महाविभूतिः।।३८।।**

**बलान्महेन्द्र स्त्रिदशाः प्रसादान्मन्यो[12-]र्गिरीशो धिषणा[-12]द्विरिञ्चः।**
**खेभ्यश्च छन्दां स्यृषयो मे[13]ढ्रुतः कः प्रसीदतां न स्य महाविभूतिः।।३९।।**

**श्रीर्वक्षसः पितरश्छायायाऽऽसन् धर्मःस्तनादितरः पृष्ठतोऽभूत्।**
**द्यौर्यस्य शीर्ष्णोऽप्सरसो विहा[14]यात् प्रसीदतां नस्स महाविभूतिः।।४०।।**

**श्रीध० अम्भ** इति। उदारं वीर्यं शक्तिः यस्य तदम्भो यस्य रेतः स नः प्रसीदतु। उदारवीर्यता माह - यतोऽम्भसो लोकादयः सिध्यन्ति जायन्ते।।३३।।

**सोम** मिति। यस्सोमो देवाना मन्धेऽन्नम्, अत एव बल मायुश्च। नगानां वृक्षानाम्। प्रकर्षेण जनयति वर्धयतीति प्रजनः तम्, यस्य मनः समाम[15]नन्ति, स नः प्रसीदतु।।३४।।

---

1. A,B,G,J,M,Ma,T ब्रह्म 2. H,V,W सोमो 3. H,V,W ब्रह्म'' 4. A,B,G,J,T, ''द्रेऽनुणचरन्स्व, M,Ma द्रे पश्चतर स्स्व'' 5. A,B,G,J,T,W ''तञ्च मृत्युः 6. A,B,G,J,M,Ma,T ''ण'' 7. M,Ma add वै 8. H,V,W ''नुय'' 9. M,Ma नाभे. 10. M, Ma स्व 11 A,B,G,J,T ''केत, M,Ma बन्धु· 12- -12. H,V ''र्गिरित्रो परुषाः M,Ma ''र्गिरीशोऽशरणा''; W.र्गिरित्रो हर्षा'' 13. M,Ma ''तस्तु प्र'' 14. A,B,G,H,J,M,Ma,T,V ''रात् 15 H,VOmit नः

**अग्नि रिति**। अग्निर्यस्य तु मुखं जातः। कथम्भूतः जातं वेदो धनं यस्मात्। क्रियाकाण्डं तत्प्रतिपाद्यं कर्म तन्निमित्तं जन्म यस्य अन्तस्समुद्रे उदरमध्ये स्वधातू न्याकार्हा नेवान्नादीन् [1]अनुपचन्। प्रसिद्धसमुद्रेऽपि [2]बडबानलरूपेण उदकान्येवाऽनुपचन् [3]अग्निः।।३५।।

**यदिति** एष तरणिः [4]आदित्यो यस्य चक्षुः आसीत्। कथम्भूतः? देवयानमर्चिरादिमार्गदेवता। त्रयीमयः "सैषा त्रय्येव विद्या तपति" इति श्रुतेः। ब्रह्मणो धिष्ण्य मुपासनास्थानम्। "य एषोन्तरादित्ये हिरण्मयः पुरुषः" (छन्दो.उ.1-6-6) इति श्रुतेः मुक्तेर्द्वारं देवयानत्वात्, अमृतश्च पुण्यलोकत्वात्। मृत्युश्च कालात्मकत्वात्। एवम्भूत स्तरणिः यस्य चक्षुः [5-]स नः प्रसीद[-5]तु।।३६।।

**प्राणादिति**। कथम्भूतो वायुः चराचराणां **सह** आदिधर्मवान् प्राणः यं प्राणं वयं बुद्ध्याद्यधिष्ठितारो देवाः सम्राजं भृत्या इव अन्वास्म अनुसृत्य स्थिताः। एवम्भूतो वायुः यस्य प्राणादभूत् सः [6-]तत्र सहो मनस उत्साहः, बलंशारीरम्, ओज ऐन्द्रियम्[-6]।।३७।।

**श्रोत्रादिति**। स्वानि देहगतानि छिद्राणि, प्राणः पञ्चवृत्तिः, इन्द्रियाणि च आत्मा मनश्च असवो नागकूर्मादयः, शरीरश्च तेषां [7]केतनम् आश्रयभूतं स्वं यस्य पुरुषस्य नाभ्याः प्रजज्ञे, सः ।।३८।।

**बलादिति**। यस्य बलान्महेन्द्रोजज्ञे। [8-]त्रिदशा देवाः धिषणात् बुद्धेः[-8]। छन्दांसि ऋषयश्च स्वेभ्यः। कः प्रजापतिः।।३९।।

**श्रीरिति**। इतरोऽधर्मः।।४०।।

**वीर०** तथा अम्भो [9]जलं यद्रेतः [10]यस्य कार्यभूतं त्रयो लोकाः लोकपालाश्च सिध्यन्ति, [11]यत इति शेषः यस्मा-दुत्पद्यन्ते जीवन्ति येनेति शेषः। वर्धमानाः यत्रेति शेषः। स ब्रह्म शब्दवाच्यो महाविभूति र्नः प्रसीदताम् ।३३।।

सोमं चन्द्रमसं यस्य मनो वदन्ति "चन्द्रमा मनसो जातः" (पु.सू.) [12-]इत्यादिश्रुत[-12]यः। सोमं विशिनष्टि - य स्सोमो दिवौकसां देवानाम् अन्धमन्नम्, अमृतकरत्वात्[13], अत एव बलमायुश्च। नगानां वृक्षाणां प्रजानां चराणाञ्च प्रकर्षेण जनयति वर्धयतीति प्रजनः। अत एव तेषामीशो यः सोमः तं यस्य मनो वदन्ति मनसो जातं, विराड्रूपस्य मनःस्थानीयश्च वदन्ति स ब्रह्म महाविभूतिर्नः प्रसीदताम्। बलादीनि परमात्मविशेषणानि

1. H,VOmit अनुपचन् 2. A,B,T बाडब" 3- -3. A,B,J add यस्य मुख स· 4 H,V Omit आदित्य· 5- -5. H.V. Omit 6- -6. B,H,J,VOmit 7 A,B,J "तमा" 8- -8. B,H,J,V,Omit 9. W.Omit जल 10 A,B,Tयत्कार्यं 11 A,B,T Omit यतः 12. - - 12 A,B,T इति श्रुतेः 13 A,B,T add इति भाव.

वा। देवादीनां यश्च बलादिहेतुः स ईशो ब्रह्म महाविभूतिः प्रसीदितामिति[1-1]।।३४।।

तथा यस्याऽग्रिर्मुख मुच्यते। "मुखादिन्द्रश्चाऽग्निश्च"(पु.सू.1-6) इत्यादि श्रुतिभिः यस्य मुखस्थानीयो मुखाज्ज्ञातश्चाऽग्निः स ब्रह्म महाविभूतिः प्रसीदता मित्यन्वयः। यस्य मुखमग्नि जात इति वाऽन्वयः अग्निं विशिनष्टि - जातवेदाः जातं स्वस्विन् निश्चितं चारु पुरोडाशादिकमिन्द्रादिभ्यो वेदयति 'विदॢल्लाभे' प्रापयति इति जातवेदाः, तथा क्रियाकाण्डनिमित्तजन्मा क्रियाकाण्डनिमित्तं यज्ञादिक्रियाकलापात्मकवेदपूर्व भागार्थानुष्ठाननिमित्तं जन्मायस्य सः। अन्तस्समुद्रे समुद्रो देहम् "त्र्यात्मकत्वात्तु भूयस्त्वात्" इति न्यायेन जलांश प्रचुरत्वात् अन्तस्समुद्रे देहमध्ये जाठररूपेण स्वधातून् स्वाधिष्ठितदेहस्थान्[2] शुक्लशोणितादि सप्तधातून्, पचन् परिणमयन्। एवम्भूतोऽग्नि र्यस्य मुखं सः प्रसीदताम्।।३५।।

तथा तरणिरादित्यो यस्य चक्षुरासीत्। "चक्षोस्सूर्यो अजायत" (पु.सू. 1-6) इति श्रुतेः। स महाविभूतिः नो[3]ऽस्माकं प्रसीदताम्। तरणिं विशिनष्टि - देवयानमर्चिरादिमार्गभूतः, त्रयीमयः ऋग्यजुस्साम प्रचुरः, स[4] एष तरणिः ब्रह्मणः परस्य धिष्ण्यं स्थानं "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"(छान्दो.उ.1-6-6) इति श्रुतेः। ब्रह्मण उपासनस्थान मित्यर्थः। मुक्त द्वारं देवयानत्वात्[5] अमृतञ्च अमृतसाधनं पुण्यानुष्ठानकालज्ञापकत्वात्[6] मृत्युः उदयास्तमयाभ्याम् आयुर्व्यय करत्वात्एवम्भूतस्तरणिर्यस्य चक्षुः स महाविभूतिः प्रसीदताम्।।३६।।

तथा यस्य प्राणाद्वायुरभूत् "प्राणाद्वायुरजायत"(पू.सू.1-6)इति श्रुतेः। स महाविभूतिः प्रसीदताम् कथम्भूतो वायुः? चराचराणां भूतानां सह आदिर्जनयिता। तत्र सहो मनसो बलम्। बलं[7] दैहिकम्। ओज इन्द्रियाणां बलं, प्राणः पञ्चवृत्तिमान्, यं पञ्चवृत्तिं प्राणं वायुं बुद्ध्याद्यधिष्ठातृदेवताः, सम्राजं सार्वभौम भृत्याः इव अन्वास्म अनुवर्तिनः स एवम्भूतो वायुः यस्य प्राणा दभूत् स प्रसीदताम्।।३७।।

तथा यस्य श्रोत्रा द्दिशो जज्ञिरे - "दिशः श्रोत्रात् पुरुषसूक्ते (पु.सू.1-6) श्रवणात्। स्वानि देहगतच्छिद्राणि हृदा जज्ञिरे हृदया दुद्बभूवुः। पुरुषस्य वैराजस्य नाभ्याः खमन्तरिक्षं जज्ञे। "नाभ्या आसीदन्तरिक्षम्" (पु.सू. 1-6) इति श्रुतेः। प्राणशब्दः कर्मेन्द्रियपरः, इन्द्रियशब्दो ज्ञानेन्द्रियपरः आत्मामनः, असुशब्दः पञ्चवृत्ति प्राणवायुपरः शरीरञ्च इत्येतेषां केतनं आश्रयं खं यस्य नाभ्यजज्ञे स प्रसीदताम्।।३८।।

---

1 - -1. A,B,T इत्यन्वयः 2. A,B,T add धातून् 3. W Omits अस्माकम् 4. W Omits सः 5.A,B,T add इति भावः 6.A,B,T इति भावः 7.A,B,T Omit बलं

यस्य बलान्महेन्द्रो जज्ञे। प्रसादात् त्रिदशा जज्ञिरे। मन्योः क्रोधात् गिरित्रो रुद्रः, हर्षाद्विरिञ्चो ब्रह्मा, खेभ्यः[1] छन्दांसि गायत्र्यादीनि। "छन्दांसि जज्ञिरे तस्मात्" (पु.सू.1-4) इति श्रुतेः ऋषयश्च खेभ्यो विवरेभ्यः जज्ञिरे।मेढ्रात् कः प्रजापतिः, मेढ्राधिष्ठाता सः प्रसीदताम्।।३९।।

तथा यस्य वक्षसः श्रीस्सम्पत् जज्ञे। छायया छायातः पितर आसन्, स्तनाद्धर्मः, पृष्ठतः इतरोऽधर्मः, शीर्ष्णः शिरसः द्यौः। "शीर्ष्णो द्यौस्समवर्तत" (पु.सू.1-6) इति श्रुतेः। विहासा[2]दप्सरसः आसन् सः प्रसीदताम्।।४०।।

**विज०** इदञ्चैकं महाविभूतित्वं हरेर्युक्तमित्याह - **अम्भ** इति। त्रयोलोका अथ अखिललोकपालाश्च उदारवीर्यं उत्कृष्टबलं यदम्भो यस्य रेतो भवति तेन वर्धमानाः सिध्यन्ति सिद्धा अवाप्तफला भवन्ति जीवन्ति उत अन्तरमपि तृप्तिलक्षणं जीवन मानुवन्ति अपि सोऽर्चत परं तस्यार्चत आपो जायन्ते "आपो नारा इति प्रोक्ताः आपो वै नरसूनवः" (विष्णु.पु.1-4-6) "यद्यत्प्रथमंममृतं तद्वसव उपजीवन्ति"इत्यादि सूर्य सोम[3-]यमेन्द्रादी[-3]न् महेन्द्रादीन्वा विनाऽन्ये अखिललोकपाला अद्भिर्जीवन्ति। किञ्चापां सोमस्य च जीवनप्रदा इन्द्राद्या इतीमं विशेषं तुशब्दो ज्ञापयति। इममेव विशेषं तुशब्दो ज्ञापयति इति कुतः अन्यत्किं न स्यात् इतीयं शङ्का "सूर्य सोम यमेन्द्रादी नृतेऽन्ये लोकपा अपि। अद्भि र्जीवन्ति सोमाञ्च महेन्द्रादीनृतेऽखिलाः। अपां सोमस्य चेन्द्राद्याः सर्वे वै जीवनप्रदाः (ब्रह्मतर्के) इत्यनया परिहृतेति ज्ञायते। महती विभूतिः सूर्यसोमविधि विशेषकल्पकैश्वर्यलक्षणा यस्य स तथा एवं विधः क इति तत्राह ब्रह्मेति।।३३।।

यो दिवौकसां बल मन्ध आयुर्वै बलाद्यभिवृद्धिहेतुः यश्च नगानां वृक्षाणामङ्कुर जननसामर्थ्य प्रदत्वेनेशः यश्च प्रजानां प्रजनः सुरतानन्दगर्भलक्षणहेतुः तं सोमं यस्य मनः स मामनन्तीत्यन्वयः। तं देवाना मन्नम्, इन्द्रादीन् ऋते इति शेषः। अथ यच्चतुर्थ ममृतं तन्मरुत उपजीवन्ति, सोमेन सुखेन इति। सोमं यस्य मन स्समामनन्ति, यो देवानां बलादिहेतुः, यश्च नगाना मीशो यश्च प्रजानां प्रजनः स हरिः प्रसीदताम् इति वा। सोमेन देवादि बलप्रदत्वेन महाविभूतिः "सोमोदद्गन्धर्वाय, सोमः प्रथमः", (मन्त्रप्रश्ने) "ब्रह्मा देवानां पदवीं कवीना मृषिर्विप्राणां महिषो मृगाणां श्येनां गृध्राणां स्वधितिर्वनानां सोमःपवित्रमत्येति रेभन्" (म.ना.उ.8-4) अथवा देवादिबलप्रदमहाविभूतिकः।।३४।।

---

1.W स्वयं 2.A.B.T "रा" 3 - - 3 A,B,Ma Omit

अग्नि र्यस्य मुखं मुखाज्जातः। "सप्तसुप्रथमा" इति पञ्चम्यर्थे प्रथमा। मुखमाश्रित्य वर्तते च। अग्रणीत्वादग्निरिति[1] अग्निशब्दस्याऽन्यत्र प्रपत्तिसम्भवात् कथं निर्णयः स्या दिति तत्राह - जातवेदा इति "अग्निर्वा अहमस्मीत्यब्रवीत् जातवेदा वा अहमस्मि"(केन.उ. 3-4) इति। जातं सर्वं वेत्तीति जातवेदश्शब्दस्याऽपि सावकाशत्वेन पूर्वोक्तसंशयानस्तारः स्यादिति तत्राह क्रियेति। क्रियाकाण्डमेव निमित्तं तत् तथा तेन जन्म यस्य स तथा "अग्निर्वै देवानां मुखं हृदयतमः" इति श्रुतेः। अग्निमुखेन इन्द्रादि देवतानां स्वर्हविर्भागप्राप्त्यर्थमग्निहोत्रादौ मथनादिना अग्नेः प्रसिद्धस्य जन्मोपपत्तिरिति तद्रसव उपजीवन्ति अग्निनैव मुखेनेति च अग्नेः पाचकत्वशक्तिरपि श्रीहरिर्नियतेत्यभिप्रायेणाह अन्तस्समुद्रे उदरान्तः स्थित्वा स्वधातून् स्वाधीनानि चतुर्विधान्यन्नानि पचतो जरयतः "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तत्पुरीषं भवति। यो मध्यमस्तन्मांसं योऽणुस्तन्मन"(छान्दो.उ.3-6-5-1) इति। "पचाम्यन्नं चतुर्विधम्" (भ.गी.15-14) इति सर्वोपकारकाग्निजनकत्वलक्षणमहाविभूतिः[2]। तुना वाचोऽपि हरे र्मुखं क्षेत्रमिति सूचयति "वाचो वह्नेर्मुखं क्षेत्रम्" इति स्वोक्तेः।।३५।।

तरणिः सूर्यः यस्य चक्षुष आसीत् इत्यन्वयः। "चक्षोस्सूर्यो अजायत"(पु.सू.1-6) तरन्त्यनेन संसारं पुरुषाः इति तरणिरिति नाम सूचितमर्थं स्पष्ट माह - देवेति। देवानां संसारं मुक्त्वा गतानां यानं मार्गः उत्तरायणमार्गदेवतेत्यर्थः। अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मान मन्विष्य आदित्यमभिजायते त्रय्यामीयत इति त्रयीमयः। वेदप्रतिपाद्येषु प्रधानं वा। त्रयीमयाय त्रिगुणात्मधारिणे एष तरणिः ब्रह्मणः परमात्मनो धिष्ण्यमभिव्यक्तिस्थानम् "यश्चासावादित्ये" (तैत्ति.उ.2-8) "ध्येयस्सदा सवितृमण्डलमध्यवर्ती" मृत्यो स्संसारात् मुक्ते द्वारम्, द्वयोर्मुक्तयोः कस्या इति तत्राऽऽह[3] - अमृतस्येति। विदुषां विषयस्येत्यर्थः स यावत्क्षिप्येन्मन स्तावदादित्यं गच्छत्येतयैव खलु लोकद्वारं विदुषां प्रपदनं विरोधोऽविदुषाञ्चामृतस्य[4] मुक्तेर्मृत्योश्च प्राप्तिहेतुरिति वा। एवं विधमाहात्म्योपेतसूर्यजनकमहाविभूतिः।।३६।।

चराचराणां सहो बलजो हेतुः स्वयञ्च तादृग्गुणः अधिभौतिकं वायुरध्यात्मं प्राणो यस्य हरेः प्राणात्सह आदिगुणवदात्मनोऽभूत् "आत्मन एष प्राणो जायते नान्वरिष्ठप्राण उवाच मा मोह मपद्यथ अहमेवैत न्पञ्चविधमात्मानं विभज्यैतत् बाणमवष्टभ्य विधारयामि" (प्रश्न.उ.3-3) इति ते प्रीताः प्राणं स्तुवन्ति एषोऽग्नि

1.A "दग्निश 2. Ma omit महा" 3. A,B अ" 4. Ma adds विषयस्य

स्तपत्येष सूर्यः प्राणैकऋषिरत्र विश्वस्य सत्पतिः वय मासाद्य दातारः पिता त्वं मातरिश्वनः वयं यश्च सम्राज मन्वास्म वयं प्राणनामानं चक्रवर्तिनमनुवर्तिन माहव इव प्राणचतुर्मुखयोरेकत्वादिवेति अन्यत्रावधारणार्थं यथा सम्राडे[1] वाधिकृतान्नियुङ्क्ते एतान् ग्रामानधितिष्ठस्वेति। एवमेवैष प्राण इतरान्प्राणान् पृथगेव सन्निधत्ते पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणःस्वयं, प्रतिष्ठित इति शेषः। सम्राजं यं भगवन्तमन्वास्मैवेति वा। सर्वोत्तम प्राणजनकमहाविभूतिः "प्राणस्य प्राणमुत चक्षुषश्चक्षुः" (बृह.उ.4-4-18)।।३७।।

यस्य श्रोत्रा दिशो, यस्य हृदयाच्च खानीन्द्रियाणि, यस्य पुरुषस्य नाभेश्च खमाकाश इत्यते प्रजज्ञिरे इत्यन्वयः। अत्र " चन्द्रमा मनसो जातः" (पु.सु.1-6) इत्यारभ्य "दिशः श्रोत्रात्" (पु.सु.1-6) इत्यन्तं वाक्यं प्रमाणं दर्शयति। तैजसाहङ्कारगुणव्यञ्जकहृदयादीन्द्रियाणीत्यर्थः। तैजसानीन्द्रियाणीत्युक्तेः। "सहस्रशीर्षा पुरुषः" (पु.सु.1-1) प्रसन्नो भवत्वित्यन्वयः। प्राणेन्द्रियाणि व्याप्य तिष्ठतीति प्राणेन्द्रियात्मा ब्रह्मणो वा एतानि करणानि "एतत्सर्वं परे आत्मनि सम्प्रतिष्ठते पृथिवी च" (प्रश्न.उ.4-70) इत्यारभ्य प्राणश्च विधारयितव्यश्च इत्यनेन काठकोपनिषद्गतेन वाक्येन सविस्तर उच्यते स्वशरीरभूतायाः पृथिव्याः बन्धुः "यस्य पृथिवी शरीरम्" (बृह.उ. 3-7-3) दिङ्नामदेवतादिसर्जनप्रतीतं[2] स महाविभूतित्वं।।३८।।

गुणगुणिनोरभेदाभिप्रायेणाह - बला दिति। बलादिगुणेभ्यः इन्द्रादीना मुद्भवः निर्दोषत्वेन मन्युरहितस्य न मन्युस्वभावः। तादृक्स्वभावरूपीति सर्जनाभिप्रायाद्दर्शितः[3]। "कारणगुणः कार्येषु समवैति" इति न्यायरक्षणार्थञ्च अशरणात्स्वाधिष्ठानाल्लयोदधौ पृथिव्याद्यधिष्ठानाभावात् स्वमहिम्न एवेत्यर्थः। 'किं स्विदासीदधिष्ठानमारम्भणे स्वे महिम्नि धिषणा' दिति केचित्पठन्ति। सप्तेन्द्रियैः सप्तच्छन्दांसि ऋषयः प्रजापतयः, "क स्तस्य मेढ्रम्" (भाग.2-1-32) इत्युक्तेः विरिञ्चादि देवजनकमहाविभूतिः।।३९,४०।।

**विप्रो मुखाद्[4]ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलञ्च।**
**ऊर्वोर्[5-]विड्ओजोऽङ्घ्रिरवेदशूद्रौ[-5] प्रसीदतां न स्स महाविभूतिः।।४१।।**

**लोभोऽधरात्प्रीति रुपर्यभूद् द्युतिर्नस्तः पशव्यः[6] स्पर्शेन कामः।**
**भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां न स्स महाविभूतिः।।४२।।**

**द्रव्यं वयः कर्मगुणान्[7]विशेषं यद्योगमाया विहितान्[8]वदन्ति।**
**यद्दुर्विभाव्यं प्रबुधा[9]वबोधं प्रसीदतां नस्स महाविभूतिः।।४३।।**

1. A,B, "ड्डि" 2. A,B,M "तम" 3. A,B,Ma "तं 4. A,B,G,J,T मुखं ब्रह्म 5- -5 M,Ma "विशोऽङ्घ्रे रभवन् च शूद्राः
6. M,Ma "व्य" 7. M,Ma "णाश्च 8. M,Ma "ताःव" 9. A,B,G,J, H,T,V "धापबाधं

**नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभप्रतिपूरितात्मने।[1]**
**गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नमस्स्वभूतये।।४४।।[2]**

**स त्वं नो दर्शयात्मान मस्मत्करणगोचरम्।[3]**
**[4]प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम्।।४५।।**

**तै स्तैः स्वेच्छाधृते[5] रूपैः काले कलि स्वयं विभो।**
**कर्म दुर्विषहं यन्नो भगवां[6-] स्तत्करोति[-6] हि।।४६।।**

**क्लेशभूर्यल्पसाराणि कर्माणि विफलानि हि।[7]**
**देहिनां विषयार्तानां[8] न तथैवाऽर्पितं त्वयि।।४७।।**

**नावमः[9] कर्मकल्पोऽपि विफलायेश्वरार्पितः।**
**कल्पते पुरुषस्यैष[10] सह्यात्मा दयितो हितः।।४८।।**

**श्रीध०** विप्र इति विड्वैश्यः। ओजोनैपुण्यं[11] तस्य वृत्तिः अङ्घ्रिः अङ्घ्रिजावित्यर्थः। अवेदशूद्रौ अवे दो वेदव्यतिरिक्ता शुश्रूषा वृत्तिः[12] तद्वृत्तिमान्। शूद्रश्च। "[13-]ऊर्वो विशोऽङ्घ्रे[-13]रभवंश्च शूद्राः" इति पाठान्तरं सुगमम्।।४१।।

**लोभ** इति। उपर्युत्तरोष्ठात्। नस्तः नगसिकातः। द्युतिः कान्तिः पशव्यः पशूनां हितः कामः स्पर्शोनाभूत्।।४२।।

**द्रव्य** मिति। द्रव्यं भूतानि वयः काल[14]ः विशेषः भौतिकप्रपञ्चः[15]। यत् यस्मात् दुर्विभाव्यम्। कुतः प्रबुधापबाधं विवर्द्धि रपोह्यमानम्। पाठान्तरे प्रबुधानां मायेत्यवबोध्यो यस्मिन्नित्यर्थः।।४३।।

तदेव सप्रपञ्च मुपवर्ण्य निष्प्रपञ्चं उपवर्णयन्[16] प्रणमति **नमोऽस्त्विति**। वृत्तिभि र्दर्शनादिभिः नभस्वान्वायुः तस्यैव ऊति लीला यस्य तस्मै।।४४।।

**स** इति। ते[17] सस्मितं मुखाम्बुजं दिदृक्षूणां नोऽस्मच्चक्षूरादिकरण गोचरं यथा भवत्येवंञ्चात्मानं दर्शय।।४५।।

भक्तेच्छानुवर्तित्वं च तव बहुशो दृष्टमेवेत्याह **तैस्तैरिति**। यन्नो दुर्विषहमशक्यं कर्म तद्भवान्[18] स्वय मेव करोति हि।।४६।।

1 M,Ma परि 2 A,B,G,H,J,T,V नभस्वदूतये 3. M,Ma "रः 4. M,Ma प्रयताना 5. M,Ma कृ" 6- -6. H,V,W भवान्वै तत्कं, M,Ma भगवान् वै क"7. A,B,G,J,T ता. M,Ma च 8. H,V. "र्था" 9. M,Ma "ध" 10. M,Ma "व 11. A "पुणं 12. A,B,J Omit वृत्ति 13- -13 H,V विड ङ्घ्रे र" 14. A,B,J "लम् 15. A,B,J "ञ्चत 16. B,J, अनु" 17. B,J Omit ते 18. A,B,J "द्भगवां

न च बहिर्मुखानामिव त्वद्भक्तानामस्माकं त्वय्यर्पितानि पूर्वपुण्यानि विपरीतफलानि भवितु मर्हन्तीत्याह क्लेशे इति। क्लेशो भूरि येषु, अल्पं सारं फलं येषु। यद्वा, विफलान्येव सकामानां कर्माणि, त्वय्यर्पितं तु न तथा।।४७।।

तत्र अवैफल्यमुपपादयति - नेति अवमोऽल्पोऽपि[1] कर्मकल्पः कर्माभासोऽपि ईश्वरार्पितश्चेत् विफलाय[2] आयासाय न कल्पते हि यस्मात् स एष ईश्वरः पुरुषस्यात्मा, अत एव दयितो हितश्च। न ह्यात्मनि दयिते हिते[3] चाऽर्पितं निष्फलं स्यात्।।४८।।

**वीर०** तथा यस्य मुखा द्विप्रः विप्रकुलं, गुह्यमतीन्द्रियार्थावबोधि ब्रह्म वेदाश्चासीत्। "ऋ च स्सामानि जज्ञिरे" (पु.सू.1-4) "ब्राह्मणोऽस्य मुखमासीत्"(पु.सू.1-5)इति श्रुतिः। भुजयोर्बाहुभ्यां राजन्यो, बलञ्चासीत्। बाहू राजन्यः कृतः (पु.सू.1-5) इति श्रुतिः। ऊर्वो विंट् वैश्यः ओजो नैपुण्यं तस्य वृत्तिश्च, अङ्घ्रिः अङ्घ्रिजा वित्यर्थः अवेदशूद्रौ अवेदः वेदव्यतिरिक्ता शुश्रूषा वृत्तिः, तद्वृत्तिमान् शूद्रश्च। 'विडङ्घ्रेरभवश्च शूद्रः' इति पाठान्तरं सुगमम्। ' ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत' (पु.सू.1-6) इति श्रुतेः।।४१।।

अधरादधरोष्टात् लोभः, उप र्युत्तरोष्टात् प्रीतिरभूत्। नस्तः नासिकातः द्युतिः कान्तिः। पशव्यः पशूनां हितः, कामः स्पर्शेनाभूत्, भ्रुवोर्यमः, कालः पक्ष्मभवः पक्ष्मणो जातः। सः प्रसीदताम्।।४२।।

किं बहुना? द्रव्यं भूतपञ्चकम्, वयः कालम्, कर्मजीवा दृष्टं गुणान् सत्वादीन्, विशेषं ब्रह्माण्डं, तदुपलक्षितं कार्यवर्गञ्च यस्य योगमायया ईक्षणात्मकसङ्कल्पेन विहितान्वदन्ति। द्रव्यादिकारणात्मकं विशेष रूपकार्यात्मकञ्च सर्वं वस्तु सत्सङ्कल्पविहितं वदन्ति इत्यर्थः। अत एव यद्य त्स्वरूपं दुर्विभाव्यं चेतनाचेतनसजातीयत्वेन चिन्तयितुमशक्यं प्रबुधावबोधं प्रकृष्टविद्वदवबोधं स महाविभूतिर्नः प्रसीदताम्।।४३।।

एवं कार्यावस्थप्रपञ्चशरीरकं वैराजपुरुषं प्रसाद्य अथ कारणावस्थं नमस्करोति - **नम** इति। उपशान्तशक्तये सर्गाद्यनभिमुखचिदचित्कालादिशक्तये, स्वराट् स्वतन्त्रं स्वस्वरूपं तस्य भावो याथात्म्यं स्वाराज्यं तस्य लाभेन स्वानन्दानुभवेनेत्यर्थः। तेन प्रतिपूरित आत्मा स्वरूपं यस्य तस्मै, स्वतन्त्रानवधिकानन्द स्वस्वरूपानुभवपूर्त्याऽवाप्तसमस्तकामायेत्यर्थः। मायया रचितेषु गुणेषु न सज्जमानाय लीलारसविमुखाय स्वभूतये स्वाभाविकैश्वर्याय तस्मै नमो नमः।।४४।।

---

1. H.V Omit अपि 2. H.V. श्रमाय 3 B.J Omit हिते

एवं प्रकृतिपुरुषविलक्षणं विभूतिद्वयाधिपं सर्वकारणं भगवन्तं प्रसाद्य नमस्कृत्य स्वाभिप्रेतं विज्ञापयितुं तावत्तद्दर्शनं प्रार्थयति - **सत्व** मिति। उक्तविध स्त्वमात्मानं दिव्यमङ्गल विग्रहं दिदृक्षूणां प्रपन्नानां नोऽस्माकमस्मच्चक्षुरादिकरणगोचरं यथा भवति तथा सस्मितं ते मुखाम्बुजं दर्शय।।४५।।

ननु, "न चक्षुषा पश्यति कश्चनैनम्" (क.ठ.उ. 6-9) इति श्रुत्युक्तविधया[1] चक्षुराद्यगोचरोऽहं कथं त्वच्चक्षुरादिकरणविषयः स्याम् इत्यत्राह - तै स्तै रिति। हे विभो! काले काले "यदा यदाहि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थान मधर्मस्य" (भ.गी.4-7) इत्युक्तकाले स्वेच्छाधृतैः, न तु पुण्यपापात्मक कर्मणा[2] धृतैः रूपैरवतारैः भवान्नोऽस्माकं दुर्विषहं दुरासदं दुष्करं कर्म करोति हि। अघटितघटनात्मकक्रियाशक्ते स्तव स्वविग्रहदर्शयितृत्वं न दुर्घटमिति भावः।।४६।।

सत्यम्, आत्मानं सकृत्स्तुतिकर्मणा हेतुना कथ दर्शयेयम्? - इत्यत्राऽऽह- **क्लेशेति**। विषयार्तानां अनुकूलविषयालाभदुः खपीडितानां देहिनां क्लेशो भूरिः, येष्वल्पः सारः सुखं येषु, ततः कर्मधारयः तानि कर्माणि यथा विफलानि भवन्ति, तथा त्वय्यर्पितं कर्म न विफलं भवति हि।।४५।।

कर्मकल्पोऽपि धर्माभासोऽपि[3], अवमः लौकिकव्यापारोऽपि ईश्वरे त्वय्यर्पितश्चेत् विफलाय न कल्पते, न विफलो भवति हि, यस्मात्स एवेश्वरः पुरुषस्यात्मा अत एव दयितः प्रियः हितश्च न ह्यात्मनि दयिते हिते चाऽर्पितं कर्म निष्फलं स्यादित्यर्थः।।४८।।

**विज०** उपरि उत्तरोष्ठात् प्रीतिः द्युतिः कान्तिश्च, पशव्यं पशुजीवनम्। नस्तो नासिकायाः, स्पर्शेन गुणेन जातः कामः स्त्रीविषयः, कालो मृत्युः।।४१,४२।।

द्रव्यं भूतपञ्चकं,वय आयुर्लक्षणं, कर्म त्रिविधं गुणा भक्त्यादयः शुक्लादयो वा। शेषं स्वभाव जीवकालादयः यस्य हरे र्योगमायया स्वरूपभूतेच्छया विहता उपेक्षिताः पतन्ति प्रच्युता भवन्तीत्यन्वयः। "द्रव्यं कर्म च कालश्च" (भाग.2-5-14) इति। किञ्च, यद्दुर्विभाव्यं एवंविधमिति भावयितु मशक्यं - स वा एष आत्मा, नेति। किञ्च, प्रबुद्धज्ञानिनां अवबोधो ज्ञानं यस्मात्तथा। अनेन स्वानुग्रहेण स्वविषयज्ञानं सुशक मित्युक्तं भवति। "अज्ञानं ज्ञानदो विष्णुः 'यमेवैष वृणुते' (कट.उ. 2-28) इत्यादि। द्रव्यादि सत्ता प्रदत्वेन ब्रह्माद्यचिन्त्यमहिमत्वेन ज्ञानदातृत्वेन परिपूर्णैश्वर्यः प्रसीदतामित्यन्वयः। नवत्वसंख्याविशिष्टं द्रव्यम्। 'वय गतौ इति धातोः वयति अवगच्छत्यनेन, नीलोत्पल मित्यादिव्यवहारं पुरुष इति वय स्समवायः, उत्क्षेपणादीनि

---

1 W Omits श्रुति" 2.A,B,T कर्मधृतै 3 A,B,T क"

पञ्च कर्माणि, शब्दस्पर्शरूपरसगन्धादिचतुर्विंशतिगुणाः, सामान्यविशेषौ शेष मित्यनेनोच्यते। एते यद्योगमायया विहता अहितीकृताः पतन्ति पातयन्त्यधः, पुरुषमिति शेषः। नरकहेतव इत्यर्थः। विषकण्ठ कणभक्षशङ्करो त्रिदशबलपञ्चशिखाक्षपादवादान्महदपि सुविचार्य लोकतन्त्रं भगवदुपास्तिमृतेन सिद्धि रस्तीति प्रमितेनाऽयमुक्तार्थ इति सिद्धम् कणादाक्षपादमतज्ञानात् सिद्धिर्माभूत्, अद्वैतज्ञानेन सा स्या दिति तत्राह - यदिति। अद्वैतमतोक्तविधया भावयितु मशक्यम्। अनेनाऽन्येऽपि दुर्वादिवादा अपि निरस्ता इति ज्ञातव्यम्। कर्मणा पुरुषार्थ सिद्धिः स्यात्तर्हि इति, नेत्याह - प्रबुधेति। अनेन भाट्टादिमतमपि प्रत्युक्तम्।।४३।।

उपात्सर्वाधिकाद्विष्णोः शान्ता आनन्दमूर्तयो यासां ताः तादृश्य श्शक्तयो भार्या यस्य स तथा, तस्मै "निवृत्तस्पष्टशक्तये" इति च स्वाराज्यलाभः स्वयम्प्रकाशमानानन्दः, तेन परिपूरित आत्मा यस्य स तथा तस्मै। नित्याविर्भूतानन्दस्वरूपायेत्यर्थः। मायया स्वाधीनप्रकृत्या रचितेषु निर्मितेषु गुणेषु विषयेषु वा प्रवर्तमानायाऽपि तद्योग्याभिर्वृत्तिभिः दुःखलक्षणाभिः न सज्ञमानाय निरवद्यत्वेन दुःखानुभूतिरहितायेत्यर्थः। स्वभूतये स्वयम्भुवे स्वरूपपूर्णैश्वर्यायेति वा।।४४।।

अस्मत्कारण गोचरोऽस्मदिन्द्रियविषयो भूत्वा ।।४५।।

भक्तानुकम्पामन्तरेण तवाऽन्यत्कृत्यं न विद्यते इत्याशये नाह - तैस्तैरिति हे विभो! यद्यदा नोऽस्माकं दुर्विषहं सोढु मशक्यं कर्म दुःखलक्षण मसुरादेः, स्या दिति शेषः। तदा भगवान् स्वयमसुरादेः दुर्विषहं कर्म पराक्रमलक्षणं करोतीति वा इत्यन्वयः। कथम्? स्वेच्छाकृतै स्तैस्तै रूपैः "यदा यदा हि धर्मस्य" (भ.गी.4-7) इति स्मृति र्हिशब्देन गृहीता।।४६।

ज्ञान मेव मुक्तिसाधनं, न कर्म तन्मतदूषणात् इत्यभिप्रायो यदि, तर्हि कर्मकरणं व्यर्थमित्याशङ्क्य, सत्यम्, भगवदर्पणाख्यचिकित्साभावे साऽस्ति चेत् फलवदित्याशयेनाह - क्लेशेति। विषयार्तानां देहिनां कर्माणि विफलानि विरुद्धफलानि, अनभीष्टफलानीत्यन्वयः। कथं भूरिक्लेशानि अल्पसाराणिचेश्वरार्पितं कर्म तथाऽनर्पितवद्विफलं न स्यादित्यन्वयः।।४७।।

साङ्गं कर्म ईश्वरार्पितं सफलमस्तु, अनङ्गं कथमिति तत्राह-नेति पुरुषस्य कर्मकल्पः कर्माभासः अङ्ग-साकल्येन रहितः अत एवाधर्मोऽपि यदीश्वरार्पितः, तर्हि विफलाय न कल्पते। किन्तु फलवानेव स्या दित्यन्वयः। तत्र किं कारणम्? अत्राह - स इति। यत्प्रीत्यै कर्म करोति स आत्मा परमात्मा हितः

प्रेक्ष्येष्टकारी दयितोऽनिमित्तबन्धुः हि यस्मात्तस्मात् इति शेषः। नाधर्म इति केचित्पठन्ति स्मृत्यविहितः "सर्वधर्मान् परित्यज्य" (भगी. 18-66) इत्युक्तेः।।४८।।

**यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम्।**
**एव माराधनं विष्णोः सर्वेषामात्मनश्च हि।।४९।।**

**नमस्तुभ्य मनन्ताय दुर्वितर्क्यात्मकर्मणे।**
**निर्गुणाय गुणेशाय सत्वस्थाय च साम्प्रतम्।।५०।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे अमृतमथने पञ्चमोऽध्यायः।।५।।

**श्रीध०** अनन्तफलत्व माह - यथेति। यथा हि मूलावसेचनं स्कन्धानां शाखानाञ्च भवति।।४९।।

एवं सत्यपि त्वदर्पितकर्मणां त्वद्भक्ताना मस्माकं यन्निमित्त[1] मिदं दुःख मिति तत्[2]त्वमेव वेत्सीत्याशये नाह नमः इति। दुर्वितर्क्याणि आत्मकर्माणि स्वभावचेष्टितानि यस्य तस्मै।।५०।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चमोऽध्यायः।।५।।

**वीर०** ईश्वरार्पितस्य स्वल्पस्याऽपि कर्मणोऽनल्पफलत्व माह - **यथेति**। यथाहि तरोः मूलावसेचनं मूले जलावसेचनं स्कन्धानां शाखानाञ्च भवति, एव मात्मनः परमात्मनः विष्णोः आराधनं सर्वेषां हि सर्व पुरुषार्थानां साधनं भवतीत्यर्थः।।४९।।

स्तुति नमस्कारादि कर्मणा विना नाऽन्यस्त्वत्तोष हेतु रस्तीत्यभिप्रयन्नाह - **नम** इति। दुर्वितर्क्याणि इतर सजातीयत्वेन विभावितु मशक्यानि आत्मकर्माणि स्वचेष्टितानि यस्य तस्मै, अनन्ताय त्रिविधपरिच्छेद रहिताय, निर्गुणाय हेयगुण रहिताय, सत्त्वादि गुणानां नियन्त्रे, सत्वस्थाय सत्त्वगुणोन्मेषनिमित्त कर्मानुगुण मधुना प्रवर्तमानाय तुभ्यं नमः। साम्प्रतं नमस्कार एव युज्यते ईदृशं त्वां प्रसादयितुं नम एव युज्यते नाऽन्य[3] उपाय इत्यर्थः। यद्वा, गुणत्रयोन्मेषनिमित्तकर्मानुगुणं प्रवर्तमानायाऽपि साम्प्रतमधुना सत्त्वस्थायेति वाऽन्वयः।।५०।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां
व्याख्यायां पञ्चमोऽध्यायः।।५।।

1. A,B,J कि" 2. A,B,J Omit तत् 3. A,B,T add एव

**विज०** ननु यजतेत्यादि विहित कर्म परित्यज्य भगवदेकाराधनाया मितरदेवता तृप्त्यभावेनाऽपुरुषार्थः स्यादिति, तत्राह-यथेति। स्कन्धानां शाखानां तृप्तिं जनयतीति शेषः। तेनाङ्कुरफलपुष्पसमृद्धिलक्षणपुरुषार्थो यथा भवति, तथा सर्वेषामिन्द्रादीनामात्मनः स्वस्यापि तृप्त्यानन्दानुभवलक्षणपुरुषार्थः स्यादिति भावः। "मुखादिन्द्रश्चाऽग्निश्च" (पु.सू. 1-6) इत्यादिवाक्यं हिशब्देन दर्शयति। तेनेन्द्रादीनां श्रीनारायणशाखिशाखात्वं दर्शितं भवति। तथाहीतिवत् यथाहीत्येकं वाक्यम्।।४९।।

अनन्तायेत्यनेन मुखाम्बुजमिति परिच्छिन्नत्वशङ्कां निवारयति - दुर्वितर्क्येत्यादिना। न स्वरूपस्य आनन्त्यम्, अपि तु तत्कर्मणामप्युच्यते निर्गुणायेत्यनेन शबलत्वं निवारयति गुणेशायेत्यनेन। गुणैः प्रवर्तमानस्यापि गुणसम्पर्कप्राप्तं दोषं निरुणद्धि - सत्त्वस्थायेत्यनेन गुणै यौगपद्य प्रतीतिं[1] निवारयति साम्प्रत मित्यनेन। सत्त्वगुणयुक्तत्वं स्थितिकालश्च दर्शयति यतस्त्वं सत्त्वगुणप्रवर्तकोऽधुना। तस्मादस्मानापदः पालयेति चार्थः।।५०।।

इति श्रीमद्भागवते महापुराणे
पारमहंस्यां संहितायां श्रीविजयध्वजतीर्थ विरचितायां टीकायां
अष्टमस्कन्धे पञ्चमोऽध्यायः।।५।।

---

1. A,B °प्रतीतं

ooo0ooo

# षष्ठोऽध्यायः

**श्रीशुक उवाच**

एवं स्तुत स्सुरगणै र्भगवान् हरिरीश्वरः।
तेषा माविरभूद्राजन् सहस्रार्कोदयद्युतिः।।१।।

तेनैव म[1]हसा सर्वे देवाः[2] प्रतिहतेक्षणाः।
नापश्यन्स्वं दिशः क्षोणी मा[3]त्मानञ्च कुतो विभुम्।।२।।

विरिञ्चो भगवान्दृष्ट्वा सह शर्वेण [4-]तां तनुम्[-4]।
स्वच्छां[5] मरकतश्यामां[6] कञ्जगर्भारुणेक्षणाम्[7]।।३।।

तप्तहेमावदातेन लसत्कौशेयवाससा।
प्रसन्नचारुसर्वाङ्गी[8] सुमुखीं[9] सुन्दरभ्रुवम्।।४।।

महामणिकिरीटेन केयूराभ्याञ्च भूषिताम्[10]।
कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजाम्[11]।।५।।

काञ्चीकलापवलयहारनूपुर शोभिताम्।[12]
[13-]कौस्तुभाभरणां लक्ष्मीं[-13] बिभ्रतीं[14] वनमालिनीम्[15]।।६।।

सुदर्शनादिभिः स्वास्त्रै र्मूर्तिमद्भि रुपासिताम्[16]।
तुष्टाव देवप्रवरः सशर्वः पुरुषं परम्।।
सर्वामरगणै स्स्वाकं[17] सर्वाङ्गै रवनीङ्गतैः[18]।।७।।

**ब्रह्मोवाच**

अजात[19]जन्मस्थिति संयमाया[20]ऽगुणाय निर्वाणसुरवार्णवाय।
अणो रणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे पुनः स्तुति र्विष्णा र्वाविर्भूते सुरैः कृता। तन्मन्त्राज्ञाऽसुरै स्साक ममृतार्थे महोद्यमः

**एवमिति**। सहस्रार्काणामुदये द्युतिरिव द्युतिः यस्य ।।१।।

1. M,Ma "स" 2. A,G "णि" 3. M,Ma "ञ्चाग्रतो 4- -4. M,Ma भारता! 5. M,Ma "च्छं 6. M,Ma श्यामं 7. M,Ma "णाम् 8. M,Ma "ङ्ग 9 M,Ma "स्वं 10 M, Ma "तम् 11. M,Ma "जम् 12. M,Ma "तम् 13- -13 M,Ma "णांलक्ष्म 14. M,Ma "तं 15. M,Ma "नम्। 16. M,Ma "तम् 17 M,Ma स्सार्धं 18. A,B,G,J,M,Ma,T "नि" 19. M,Ma "य 20. H,M,Ma V,W "यगु"

**तेनेति**। महसा तेजसा प्रतिहतानीक्षणानि चक्षूंषि योषाम्।।२।।

**विरिञ्च इति**। तामाविर्भूतां तनुं विरिञ्चो दृष्ट्वा तुष्टावेति पञ्चमेनान्वयः। कञ्जगर्भवदरुणे ईक्षणे यस्याः।।३।।

**तातेति**। तप्तहेमवदवदातेन पीतेन लसता[1] कौशेयवाससा युक्ताम्। प्रसन्नानि चारूणि सर्वाण्यङ्गानि यस्याः शोभनं मुखं यस्याः, सुन्दरे भ्रुवौ यस्याः ।।४।।

**महामणीति**। महान्तो मणयो यस्मिंस्तेन किरीटेन।कर्णा भरणे कुण्डले ताभ्यां निर्भातौ यौ कपोलौ ताभ्यां श्रीर्मुखाम्बुजे यस्याः।।५।।

**काञ्चीति**। कौस्तुभ आभरणं कण्ठे यस्याः लक्ष्मीं वक्षसि बिभ्रतीम्।।६।।

**सुदर्शनेति**। देवप्रवरो ब्रह्मा! सर्वाङ्गै र[2]वनीङ्गतैः साष्टाङ्गं प्रणतैः ।।७।।

* 'अनावि राविरासेयं नाऽभूताऽभूदितिस्[3]तुवन् ब्रह्माऽभिप्रैति स[4]त्यत्वविभुत्वे भगवत्तनोः'। श्रीमूर्तेरयमाविर्भाव एव नतु अस्मदादिवत् जन्मादि तवाऽस्तीत्याह **अजातेति**। न जाता जन्मादयो यस्य कुतः? अगुणाय। अतो निर्वाणसुखस्यार्णवाय', अपारमोक्षसुखस्[5]वरूपायेत्यर्थः। तथाऽप्यणो रप्यणिम्नेऽतिसूक्ष्माय [6]दुर्ज्ञानत्वात्। वस्तुतस्तु अपरिगण्य मियत्तातीतं धाम मूर्तिर्यस्य तस्मै। नचैतदसम्भावितम् यतो महानचिन्त्योऽनुभावो यस्य तस्मै ।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं संस्तुतो भगवानाविर्बभूवेत्याह मुनिः **एवमिति**। हे राजन्। इत्थं सं[7]स्तुतः सम्यक्स्तुतः हरिरीश्वरो भगवान् सहस्राणामर्काणां सूर्याणामुदये द्युतिरिव [8]द्युति र्यस्य सः। अभूतोपमेयम् तेषां ब्रह्मादीनाम्, पुर इति शेषः। आविर्बभूव [9-]प्रकटोऽभूत्[-9]।।१।।

तेन महसा तेजसा प्रतिहतानि ईक्षणानि येषान्ते, सर्वे देवाः स्वादीनेवनाऽपश्यन्, कुतः विभुमाविर्भूतं पश्येयुरित्यर्थः।।२।।

भगवान्विरिञ्चो ब्रह्मा, शर्वेण रुद्रेण सह तां भगवतस्तनुं दृष्ट्वा तुष्टावेति पञ्चमेनान्वयः। तनुं विशिनष्टि निर्मलामिन्द्रनीलवच्छायां कञ्जगर्भवदरुणे इक्षणे यस्यास्ताम्।।३।।

1.H,V "स्तो" 2. A,B,J "नि" * श्रीधरीयोऽयंश्लोकः 3. A,B,J बुवन् 4. A,B,J नित्य" 5. A,B,J Omit स्व 6. B दुर्ज्ञेय"
7.W Omits संस्तुतः 8. A,B,T Omit द्युतिरिव 9--9 W Omits

तप्तहेमवदवदातेन विशुद्धेन पिशङ्गेन च लसता कौशेयवाससा, युक्तामिति शेषः। प्रसन्नानि चारूणि सुन्दराणि च सर्वाण्यङ्गानि यस्याः, सुन्दरं मुखं यस्याः, सुन्दरे भ्रुवौ यस्याम्।।४।।

महान्तो मणयो यस्मिन्, तेन किरीटेन केयूराभ्याञ्च अलङ्कृतां कर्णाभरणे कुण्डले ताभ्याम् नितरां भातौ यौ[1] कपोलौ ताभ्यां श्रीः शोभा मुखाम्बुजे यस्या स्ताम्।।५।।

काञ्चीकलापादिभिः शोभितां कौस्तुभ आभरणं कण्ठे यस्यास्तां लक्ष्मी वक्षसि बिभ्रतीं, वनमाला अस्या मस्तीतितथा ताम्।।६।।

मूर्तिमद्भिः पुरुषाकृतिभिः स्वकीयैस्सर्वैः सुदर्शनादिभिरस्त्रैः रुपासितां सेव्यमानां [2]सशर्वः[2] रुद्रेण सहितः देवप्रवरो ब्रह्मा सर्वाङ्गै रवनीं भूमिं गतैः प्राप्तैः[3] देवैः साष्टाङ्ग प्रणतैः देवैस्सह परं पुरुषं तुष्टाव।।७।।

तावत्स्तोतुं प्रवृत्तः कर्मायत्तजन्मादिरहितं निरस्तनिखिलदोषं ज्ञानानन्दादि कल्याणगुणोदधिं सर्वान्तरात्मान मपरिच्छिन्नस्वरूपं महा प्रभावं नमस्करोति - **अजातेति**। न जाता जन्मादयः कर्मायत्ता यस्य। तत्र हेतु रगुणाय सत्त्वादि प्राकृत गुणवश्यत्व प्रतिभटाय, निर्वाणसुखार्णवाय, निर्दुःखानन्दमहोदधये, अणोर्जीवाऽदप्यणिम्ने अन्तरात्मतया तदन्तःप्रवेशयोग्याय अपरिच्छेद्यस्वरूपाय महाप्रभावाय तुभ्यं नमो नमः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

ज्ञानवत् ज्ञानपूर्वकं यथा तत्त्वस्तुतिरपि हरेः प्रीतिजननी त्येतमर्थ प्रपञ्चयत्यस्मिन्नध्याये। तत्राऽऽदौ हरेराविर्भाव प्रकारं वक्ति एवमित्यादिना, ब्रह्माणं पुरस्कृत्येति शेषः।।१।।

आत्मानं स्वान् जातावेकवचनम् ,अग्रतः स्थितम् ।।२,३।।

अवदातेन पीतेन "अवदातोऽरुणे पीते श्वेते श्यामे च कथ्यते" इति। वाससोपलक्षितम्।।४।।

कपोलश्रिया युक्तमुखाम्बुजम्।।५।।

कलापो भूषणं, लक्ष्मलाञ्छनं श्रीवत्स नाम ।।६।।

देवप्रवरः ब्रह्मा।।७।।

अजाय विष्णवे, "अजा विष्णु हर च्छागाः" (अम.को 3-187) इत्यतोऽजशब्दस्योभयत्रवृत्तावपि अत्र

1. A.B.T. Omit यौ 2--2 W सरुद्रः 3. A B.T. add युक्तैः.

विष्णु रेवोच्यते - सर्वेति। सर्वकारणत्वेन निर्देशात् ततः परत्वप्रतीतेः जन्मस्थिति संयमाय जन्मादीनां तदेकाधीनत्वात् तथोक्तिः, गुणाय " विज्ञान मानन्दं ब्रह्म" (बृह.उ.3-9-28) इति श्रुते रभिप्रायात् गुणत्वोक्तिः। निर्वाण सुखार्णवाय शरीराभिमानानुत्थ सुख समुद्राय अपरिगण्यमहिम्ने।।८।।

रूपं तवैतत्पुरुषर्षभेज्यं श्रेयोर्थिभिर्वैदिकतान्त्रिकेण[1]।
योगेन धात स्सह न स्त्रिलोकान्[2] पश्याम्यमुष्मिन्नुह विश्वमूर्तौ[3]।।९।।

* त्वय्यग्र आसी त्वयि मध्य आसीत्त्वय्यन्तआसीदिदमात्मतन्त्रे।
त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात्।।१०।।

त्वं माययाऽऽत्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः।
पश्यन्ति युक्ता मनसा मनीषिणो गुणव्यपाये[4]ऽप्यगुणं विपश्चितः।।११।।

यथाऽग्निं मेधस्यमृतञ्च गोषु भुव्यन्नमम्बूद्यमने[5] न[6] वृत्तिम्।
योगै र्मनुष्या अधियन्ति हि त्वां गुणेषु बुद्ध्या कवयोऽधियन्ति[7]।।१२।।

तं त्वां[8] वयं नाथ! समुज्जिहानं सरोजनाभाति चिरेप्सितार्थम्।
दृष्ट्वा गता निर्वृतिं मद्यसर्वे गजादवार्ता इव गाङ्ग मम्भः।।१३।।

सत्वं विधत्स्वाऽखिल लोकपाला वयं यदर्था स्तव पादमूलम्।
समागता स्ते बहिरन्त रात्मन् किंवाऽद्य[9] विज्ञाप्य मशेषसाक्षिणः।।१४।।

अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्ने रिव केतवस्ते।
किं वा विदामेश[10]! पृथग्विभाविता[11] विधत्स्व शं नो द्विजदेवमन्त्रम्[12]।।१५।।

## श्रीशुक उवाच

एवं विरिञ्चादिभिरीडित स्तद्विज्ञाय तेषां हृदयं यथैव[13]।
जगाद जीमूत गभीरया गिरा बध्दाञ्जलीन्[14]संवृत[15] सर्वकारकान्।। १६।।

1. M,Ma "कैश्चा 2. M,Ma "न्भव 3. M,Ma "तै * This versa is found in M,Ma edition as follows - त्वय्यग्रआसी दिद" मात्मतन्त्रे त्वमादि रन्तो जगतोऽस्य मध्यम्। घटस्य मृत्स्नेन परः परस्मात् त्वमवचाऽ शेषमशेष नामा ।।१०।। 4. A,B,G,J,M,Ma,T "वाये 5. M,Ma त्स्वनने 6. A,B,G,J,T चवृत्तिम्। M,Ma तथोर्व्यां 7. A,B,G,J,T योवदन्ति।; M,Ma यो वयन्ति। 8. H,M,Ma,V,W त्वा 9. A,B,G,J,T कि वाऽन्य; H,V किञ्चाद्य 10 M,Ma "धे" 11. A,G,J "भाता 12. M,Ma मित्रा 13. A,B,G,J,T त" 14. A "म्भृ" 15. M,Ma "कामान्

**श्रीध०** तन्मूर्तेः सनातनत्वमपरिमेयत्वञ्चोपपादयति - **रूपमिति**। हे पुरुषर्षभ! पुरुषोत्तम![1] हे धातः। एतत्तव रूपं वैदिकेन तान्त्रिकेण च योगेनोपायेन श्रेयोऽर्थिभिः सदा इज्यं पूज्यम्। अतो नेदमिदानी मपूर्वं जातमिति भावः। ननु यूयं देवाः सदा[2] पूज्यत्वेन प्रसिद्धाः? सत्यम्, सर्वेप्यत्रैवाऽन्तर्भूता इत्याह - उ अहो! ह स्फुटम्। अमुष्मिंस्त्वयि नोऽस्मान् त्रीन्[3] लोकांश्च सह पश्यामि तत्र हेतुः - विश्वं मूर्तौ यस्य, अतस्तवैतद्रूपं परिच्छिन्नमपि न भवतीति भावः।।९।।

विश्वमूर्तित्व मेवाऽऽह - **त्वयीति**। घटस्य मृत्तिका यथा आदिरन्तश्च मध्यश्च तथा त्वमस्य जगतः। तत्र हेतुः - परस्मात्प्रधानादपि परः।।१०।।

मृत्तिकादृष्टान्तेन परिणामं प्राप्तं वारयति - **त्वमिति**। स्वया स्वाधीनया अत एव गुणानां व्यपाये[4] परिणामेऽपि अगुणमेव त्वां युक्ताः पश्यन्ति। मनीषिणो विवेकिनः। विपश्चितः शास्त्रज्ञाः।।११।।

एत देव सदृष्टान्त माह - **यथेति**। यथाऽग्निं एधसि[5] काष्ठे मथनेन[6]। अमृत माज्यं गोषु दोहनादिना। भुव्यन्नं व्रीह्यादि कर्षणादिना। अम्बु च खननेन उद्यमनेन[7] पुरुषकारेण[8] वाणिज्यादिना वृत्तिं जीविकाम्। यद्वा, अम्बु उद्यमनेन[9] घटीयन्त्रादिनोद्धरणेन[10], योगै रुपायै[11] र्मनुष्या अधियन्ति प्राप्नुवन्ति। तथा[12] कवय स्त्वां बुद्ध्या गुणेष्वधियन्ति विदन्ति[13] च ।।१२।।

**तमिति**। हे नाथ। हे सरोजनाभ! अतिचिरादीप्सितमर्थं तं योगैक प्राप्यं त्वां सम्यक् उज्जिहान माविर्भवन्तं प्रत्यक्षतो दृष्टाऽद्य वयं निर्वृतिं गताः। दवार्ता दावाग्नि पीडिताः।।१३।।

यद्विधेयं तत्कथयतेति[14] चेत् - तत्राऽऽह **सत्वमिति**। हे अन्तरात्मन्! अशेषसाक्षिणस्ते बहिः किं वाऽन्यैः[15] विज्ञाप्यमस्ति।।१४।।

यूय मेव किञ्चित्कुरुतेति चेत्तत्राह - **अहमिति**। अग्नेः केतवो विस्फुलिङ्गा इव ते त्वत्तो वयं पृथक् विभाविता[16] स्सन्तः आत्मनः शंश्रेयः किं वा विद्मः। अतस्त्व मेव द्विजानां देवानाञ्च मन्त्रं विधत्स्व। इदं कुरुते त्युपायमुपदिशेत्यर्थः ।।१५।।

**एवमिति**। तत्[17] हृदयं मन्त्र उपदेष्टव्य इत्यभिप्रेतं यथा तथैव विज्ञाय जगाद। संवृतानि नियमितानि सर्वाणि कारकाणि[18] करणानि इन्द्रियाणि यै स्तान्।।१६।।

1. A,B,J Omit पुरुषोत्तम 2. A,B,J Omit सदा 3. H,V त्रिलोका" 4. A,B,J "वा" 5. A,B,J Omit एधसि 6. H,V मन्थ" 7. A,J "मने पु" 8. A,J "कारे 9. A,B,J "मने 10. A,B,J "रणे 11. H,V Omit उपायैः 12. A,B,J यथा 13. A,B,J वदन्ति 14. A,B,J "यंति 15. B "ऽज्ञैः 16. A "भाता 17. B,H,J,V Omit तत् 18. A,B,J Omit करणानि

**वीर०** अजातजन्मस्थिति संयमायेत्यनेन प्रकृतस्य दर्शितरूपस्य कर्मायत्तत्वं सूचितम्। तदेव रूपं विशिंषन् स्तौति - **रूपमिति**। हे पुरुषर्षभ! तवैतद्रूपं श्रेयोर्थिभिः कर्तृभिः वैदिकतान्त्रिकेण वेदपञ्चरात्रादि तन्त्राभ्यां मवबोधितेन योगेन साधनेन इत्थ माराधनीयं तस्मिन् रूपे विश्वं साक्षात्कृत्याऽह - हे धातः। अमुष्मिन्निह अ[1]स्मिन् हि रूपे सहत्रिलोकान् त्रिलोकैस्सह नोऽस्मान्पश्यामि। आर्षत्वात्सहयोगेऽपि तृतीयाया अभावः। त्रिलोकी[2] नित्यत्र कर्मधारयः दर्शनहेतुं वदन् रूपं विशिनष्टि - विश्वमूर्तौ विश्वाश्रयमूर्तौ विश्वमूर्ते! इति पाठान्तरम्। तदा हे विश्वमूर्ते[3] इति सम्बोधनम्[3]।।९।।

विश्वमूर्तित्वमेव प्रपञ्चयति - **त्वयीति**। इदं विश्वमग्रे मध्ये अन्तेच त्वय्येवाश्रय भूतेऽन्तरात्मन्यासीत्, अविनाभूतमासीत्। अत एवाद्याद्यवस्थंविश्वं त्वमेव। यद्यदवस्थं यदपृथक्सिद्धं तत्ततोऽभिन्नमिति भावः। अनेन जगदुपादानत्वमुक्तम्। उपादानोपादेययो रभेदप्रसिद्धं दृष्टान्तमाह। घटस्योपादेयस्य मृदुपादानभूता यथा न तस्माद्भिन्ना तथेत्यर्थः। उपादानत्वप्रयुक्तं विकारित्वं वारयति - परः परस्मादिति। परस्मात्स्वरूपात् अन्यथा भाववदचेतनाद्यः परः विलक्षणो जीवः तस्मा दपि स्वभावान्यथाभाववतः परो विलक्षणः स्वभावतोऽपि विकाररहित इत्यर्थः। उपादानत्वेऽपि तस्य सद्वारकत्वात् निर्विकारत्व मिति भावः।।१०।।

एवं विश्वोपादानत्वात् त्वं विश्व मूर्तिरित्युक्तम्। अथ विश्वस्यान्तरात्मत्वादपि त्वं विश्वमूर्तिरिति वक्तुं विश्वस्य स्रष्टृत्वं तदन्तरात्मतयाऽनुप्रवेशञ्चाह - **त्वमिति**। आत्माश्रयया स्वापृथक्सिद्धया स्वया स्वनियाम्यया माययेदं जगन्निर्माय सृष्ट्वा तदनुप्रविष्टः। " तत्सृष्ट्वा तदेवानु प्राविशत्" (तैति.उ. 2-6) इति श्रुत्यर्थोऽत्रानुसन्धेयः। अनुप्रविष्टमपि अनुप्रवेष्टव्य गतदोषास्पृष्टं "सत्यञ्चाऽनृतञ्च सत्यमभवत्" (तैत्रि.उ. 2-6) इति श्रुत्यर्थयाथात्म्यविदः पश्यन्तीत्याह। पश्यन्तीति गुणव्यर्पा[4]यो पि, गुणानां व्यर्पा[5]योऽन्यथाभावः परिणाम इति यावत्। गुणानां परिणामेऽपि त्वां, तत्राऽनुप्रविष्टं त्वामगुणं चेतनाचेतनगत हेयगुणरहितं विपश्चितः "सत्यञ्चानृतञ्च सत्यमभवत्" इत्यादि शास्त्रार्थ याथात्म्य विदः मनीषिणः तत्प्रतिपाद्यार्थयाथात्म्योपासनपराः युक्ताः सुसमाहितचित्ताः मनसा यो[6]गपरिशुद्धेन मनसा साधनेन पश्यन्ति साक्षात्कुर्वन्ति। 'सत्यञ्च' इत्यादिश्रुते रयमर्थः - परमात्मनः चिदचित्सङ्घातरूप जगदाकारपरिणामे च परमात्म

1.A,B,T आमुष्मिन् 2. W"कार" 3--3. W Omits 4. A "वा" 5. A "वा" 6.W Omits सु"

शरीरभूत चिदंशगताः सर्व एवाऽपुरुषार्थाः, तथा अचिदंशगता स्सर्वे विकाराः परमात्मनि कार्यत्वं तदवस्थयो स्तयो र्नियन्तृत्वेनाऽत्मत्वम्। परमात्मा च तयोः स्वशरीर भूतयो र्नियन्तृतयाऽऽत्मभूतः तद्गतपुरुषार्थै र्विकारैश्च न स्पृश्यते। अपरिच्छिन्नज्ञानानन्दमयः सर्वदैकरूप एव जगत्परिवर्तनलीलयाऽवतिष्ठते। विचित्र चिदचिद्रूपेण विक्रियमाण मपि ब्रह्म सत्यमेवाऽभवत्, निरस्तनिखिलदोषगन्ध मपरिच्छिन्न ज्ञानानन्दमेकरूप मेवाऽभवदिति[1]।।११।।

मनसा साधनेन पश्यन्तीत्यत्र दृष्टान्तान्वदन् उक्तमेवाऽर्थ मुपपादयति - **यथेति**। काष्ठादिष्वग्न्यादी न्यथा योगै रुपायैः; तत्र यथाऽग्नि मेधसि काष्ठे मथनेनोपायेन, यथा चाऽमृतं क्षीरं गोषु दोहनेन, यथा भुव्यन्नं कृष्याद्युपायेन, यथा वा वृत्तिं जीवनभूतमम्बुजलं मुत्खननेनोपायेन पश्यन्ति। उद्यमनेनेति पाठे स एवार्थः। तथा कवयः[2] विपश्चितो मनीषिणो मनुष्या बुद्ध्या योगविशुद्धया गुणेषु गुणपरिणामात्मकेषु सचेतनेषु पदार्थेषु त्वा मविक्रियमेकरूपमधियन्ति। " इकृस्मरणे " इति धातुः, विदन्ति साक्षात्कुर्वन्तीत्यर्थः।।१२।।

तद्दर्शनेनाऽऽत्मनो नितरां सुखितत्वं वदन् मत्प्रयोजनं कुर्विति प्रार्थयते - **तमिति** द्वाभ्याम्। हे नाथ! हे सरोजनाभ। अतिचिरादीप्सितमर्थं पुरुषार्थस्वरूपं उज्जिहानमाविर्भवन्तं तमुक्तविधं त्वां दृष्ट्वा सर्वे वयं निर्वृतिमानन्दं गताः, यथा दवार्ताः दावाग्नि पीडिताः गजाः गाङ्ग मम्भः[3] जलं प्राप्य निर्वृतिं प्राप्नुवन्ति।।१३।।

तथा स त्व मुक्तविधः त्वं, हे अखिल लोकपाल! यदर्थाः यत्प्रयोजनाः यत्कामयमानाः वयं तव पादमूलं समागताः शरणं गताः, तत्प्रयोजनं विधत्स्व कुरु। यद्विधेयं तत्कथयेत्यत्राऽऽह - हे बहिरन्तरात्मन्! बहिरन्तश्च व्यापिन्! अशेषसाक्षिणः सर्वं युगपत् साक्षात्कुर्वतः तव सर्वज्ञस्य विज्ञाप्यं किं वाऽस्ति। न किमीत्यर्थः।।१४।।

तर्हियूय मेव किञ्चित् कुरुतेत्यत्राऽऽह - **अहमिति**। अहं ब्रह्मा गिरित्रो रुद्रः ये च सुरादयो दक्षादयश्च प्रजापतयश्च सर्वे वयमग्नेः केतवः विस्फुलिङ्गा इव। ते त्वत्तः पृथग्भाविता स्सन्तः आत्मनः स्वानां[4] शं सुखं किं वा विद्मः, न किमपि। आत्मसुखसाधनं न विद्म इत्यर्थः। अतस्त्वमेव, हे ईश! द्विजानां देवानाञ्च मन्त्रं सुखकारिणीमालोचनां विधत्स्व। इदं कुरुतेत्युपायमुपदिशेत्यर्थः।।१५।।

एवं स्तुतो विज्ञापितश्च तानाह भगवानित्याह मुनिः - एवमित्थं ब्रह्मादिभिः ईडितः स्तुतो भगवां स्तेषां विरिञ्चादीनां तद्धृदयमभिप्रायं यथावद्विज्ञाय मेघनिर्ह्रादवद्गम्भीरया गिरा, बद्धा अञ्जलयो यैः, संवृतानि निर्यमितानि कारकाणीन्द्रियाणि यैः, तान्विरिञ्च्यादीन् जगाद।।१६।।

1 A,B,T त्यर्थ· 2. A,B,T Omits कवय· 3 A,B,T Omit अम्भः 4. W Omits स्वानां

**विज०** हे पुरुषर्षभ! मोक्षादि पुरुषार्थ काङ्क्षिभिः वैदिकै स्तान्त्रिकैश्च यदेतत्तव रूपं हे धातः! अमुष्मिन् रूपे योगेन सह त्रिलोकान् पश्यामि। हे विश्वमूर्ते! त्वं नश्शरणं भवेत्यन्वयः। भुवीति पाठे आधारे इत्यर्थः।।९।।

इव यथा घटस्यादिरन्तो मध्यश्च मृत्स्ना प्रशस्ता[1] मृदेवोत्तम कारणं, सलिलाद्यवान्तरम्, तथा त्वमपि अस्य जगतः आदिः[2] परस्मात्परः उत्तमहेतुः। अत्र मृद्वदुपादानकारणं न ब्रह्म, किन्तु तदधीनसत्ताकत्वात् दृष्टान्तोपादानमित्याशयेनाऽऽह - त्वमेवेति। च शब्देन ब्रह्मोपादानकत्वे सर्वस्य चेतनत्वापत्ति प्रसङ्गं सूचयति। अयमर्थोऽत्र विवक्षित इति कुतोऽवगतमिति तत्राऽऽह - अशेषेति ।।१०।।

ननु सृष्टिसंहृतिकर्तृत्वात् तदाद्यन्तत्वमस्तु, मध्यत्वं कथमिति तत्राऽऽह - **त्वमिति**। आत्मै वाऽऽश्रयो यस्या स्सा तथा तया अत एव स्वया स्वकीयत्वेनाऽभिमतया मायया प्रकृत्या इदं विश्वं निर्माय त्वं तदनुप्रविष्ट इति यस्मात् त्वां मध्यं वदन्तीति शेषः। "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" (तैत्ति.. उ. 2-6) इति श्रुतिः अत्र किं मानमिति तत्राऽऽह - पश्यन्तीति। मनीषिणो बुद्धिमन्तो मनसा मननलक्षणविचारेण युक्ता एवं पश्यन्तीति यत् तद्दर्शनं मानमित्यन्वयः। नन्वेवं तर्हि गुणसम्पर्किणो गुणदोषलोपः स्यात्? नस्यात्। अत्रा पीदमेव मानमित्याह - गुणेति। विपश्चितो गुणव्यवाये गुणकार्य समूहे स्थितमप्यगुणं गुणनिमित्त दोषरहितं त्वां, पश्यन्तीति शेषः। इतोऽपि ब्रह्म उपादान कारणं न, किन्तु निमित्तमेवेत्याशयेनाऽऽह-त्वमिति। माययेदं विश्वं निर्माय तदनुप्रविष्ठ इति मनसा युक्ता मनीषिणो गुणकार्ये जगति विषयं अगुणं गुणव्यतिरिक्तं कारणं निमित्तमेव त्वां पश्यन्तीत्यन्वयः। विपश्चितः पण्डिताः दर्शनपटव इत्यर्थः। अनेन विद्वद्दर्शन मत्र प्रमाणमिति दर्शितम् ।।११।।

गुणकार्ये स्थितं गुणदोषरहितं पश्यन्तीत्युक्तं, कथं तत्र पश्यन्तीति तत्राऽऽह - **यथेति**। यथा एधआदिषु अग्न्यादीनधियन्ति अधिगच्छन्ति तथा कवयो बुद्ध्यागुणेषुत्वामवयन्ति, जानन्तीत्यन्वयः। उर्व्यां उत्खनने सति अम्बु यथा, तथा शब्दः समुच्चये। अमृतं क्षीरं घृतं वा। भेदस्य दोषलेपराहित्यस्य च ज्ञापनाय अग्निनिदर्शनम्। सर्वस्मात्सारः स्वभक्तमुक्तिद इति ज्ञापनायाऽमृत दृष्टान्तः। उपजीव्यत्वज्ञापनाय अन्नं यथेति। भूयस्त्वतापहरत्व स्त्वदर्शनाय अम्बु यथेति।।१२।।

---

1. Ma Omits प्रशस्ता 2. A,B,M आद्यादि.

यस्त्वं सर्वोत्तमत्वोपजीव्यत्वादि गुणसम्पन्नः, वयं तं त्वां दृष्ट्वाऽद्य निर्वृतिं गता इत्यन्वयः। अतिचिरेण कालेन वाञ्छितार्थं समुज्झिहानं विचार्यमाणे सति सर्वोत्तमं भगवन्तम् उन्नतीकुर्वाणं दवार्ता वनवह्निक्लिष्टाः, गाङ्गं गङ्गासम्बन्धि।।१३।।

योऽर्थो येषां ते यदर्था यत्प्रयोजना अखिललोकपाला वयं तव पादमूलं समागताः। स त्वं तदर्थ मस्मभ्यं विधत्स्वेत्यन्वयः। तर्हि सोऽर्थः कः? इति तत्राऽऽह - ते बहिरिरिति। हे आत्मन्! स्वात्मन्! बहिरन्तस्साक्षिणः ते तवाऽद्य विज्ञाप्यं किं वाऽस्ति? न किमपीत्यन्वयः। अतोऽस्मदभीष्टं भवतस्सिद्ध मित्यर्थः।।१४।।

इतोऽप्यस्माभि र्विज्ञाप्यं नाऽस्ति, यतो वयं तव किङ्करा इति भावेनाऽह - **अहमिति**। यथा केतवः ज्वालाः अग्नेरुत्पद्यन्ते तमेवाऽऽश्रिताः एवं मदादयस्सर्वे त्वदुत्पन्नत्वात्त्वत्किङ्करा इत्यर्थः। किङ्करत्वं विशदयति किं वेति। ईशसृष्ट्यादि कर्तृत्वेन पृथक् पृथक् विभाविताः प्रख्याता वयं किं वा विधेम, कां तवाऽऽज्ञां कुर्मः? हे द्विजदेवमित्र! नोऽस्माकं तवाऽऽज्ञाकरण[1]लक्षणं शं विधत्स्व, इदं कुरुध्वमित्याज्ञापय। गिरित्र स्सदाशिवः।।१५।।

हृदय मभिप्रायम् जीमूतो मेघः संवृतसर्वकामान् अप्रकाशितस्वाभिप्रायान्।।१६।।

**एक एवेश्वर स्तस्मिन् सुरकार्ये सुरेश्वरः।**
**विहर्तुकाम स्तानाह समुद्रोन्मथनादिभिः।।१७।।**

## श्रीभगवानुवाच

**हन्त ब्रह्मन्नहो शम्भो! हे देवा! मम भाषितम्।**
**शृणुताऽवहिता स्सर्वे श्रेयो वः स्याद्यथा [2]सुराः।।१८।।**

**[3]यात दानवदैतेयै स्तावत्सन्धि र्विधीयताम्**
**कालेनाऽनुगृहीतै स्तै र्याव द्वो भव आत्मनः।।१९।।**

**अरयोऽपिहि सन्धेया स्सति कार्यार्थगौरवे।**
**अहिमूषक[4-]वत्पश्चात्[-4] अर्थस्य पदवीं गतैः।।२०।।**

---

1. A,B,Ma 'णंश 2. M.Ma पुरा। 3. M,Ma यातुधानैश्च 4- -4. A,B,J,M,Ma,T "वद्देवाद्य, B "वद्देवाअ"

अमृतोत्पादने यत्नः क्रियतामविलम्बितम्।
यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो[1] भवेत्।।२१।।

क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च[2] वासुकिम्।।२२।।

सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः।।२३।।

यूयं तदनुमोदध्वं यदीच्छन्त्यसुरा[3] स्सुराः।
न संरम्भेण सिद्ध्यन्ति सर्वेऽर्था स्सान्त्वया यथा।।२४।।

**श्रीध०** ईश्वरस्याऽपि तथैवाऽभिप्रेत मित्याह - **एक** इति। [4-]सुरेश्वरो भगवान्[-4] एक एकेश्वरः समर्थोऽपि [5-]सुरासुरैस्सह विहर्तुकामः तानाह[-5] ।।१७।।

**हन्तेति**। हे सुराः! हे देवाः! अन्ये च गन्धर्वादयः।।१८।।

**यातेति**। वः आत्मनः स्वतो यावद्भवो वृद्धि र्भवति।।१९।।

**अस्य** इति। अर्थस्य प्रयोजनस्य पदवीं सिद्धिं प्राप्तेः, पश्चा दहिमूषकवत् वध्यघातकभावेन[6] वर्तितव्य मिति शेषः। यद्वा [7-]सर्पग्राहिणा[-7] पेटिकायां निरुद्धोऽहिः यथा निर्गमद्वारविधानार्थं प्रथमं मूषकेण सन्धिं विधत्ते[8], पश्चात्तमेव कदाचिद्भक्षयति, तथा अर्थमार्गप्रवृत्तैः प्रथमं सन्धेया इत्यर्थः।।२०।।

ततस्तैस्सह यत्कार्यं तदाह - **अमृतेति**। यस्य अमृतस्य पीतस्य सतः।।२१।।

**क्षिप्त्वेति**। नेत्रं रज्जुम्।।२२।।

**सहायेनेति**। ननु तर्हि, तेऽप्यमृतपानेन अमराः स्युः, तत्राऽऽह - क्लेशभाजइति।।२३।।

बलिभिस्सहकारिभिः साध्या अर्थाः तदनुसरणं विना न सिध्यन्तीति कृत्वा सामदिकमुपदिशति - **यूयमिति** द्वाभ्याम्। हे सुराः। संरम्भेण सम्भ्रमेण, सान्त्वया साममार्गेण, यथा सिध्यन्ति ।।२४।।

**वीर०** सुरेश्वरो भगवान् स्वयमेक एव सुराणां कार्ये ईश्वरः कर्तुं समर्थोऽपि समुद्रोन्मथनादिभिः विहर्तुकामः विहर्तु मिच्छुः तानाह ।।१७।।

---

1. H,V,S मृतो 2. A,B,G,J,M,Ma,T तु 3. A,B,G,J,M,Ma,T यदि" 4- -4. B,H,J,V Omit 5- -5. B,H,J,V Omit 6. H.V 'तु' 7- -7. B,H,J,V, Omit 8. H.V Omit वि

उक्तिमेवाऽह -**हन्तेति**। हन्तेति दुर्लभ स्वप्रसादलाभप्रयुक्तमाश्चर्यं द्योतयति। हे ब्रह्मन्! हे शम्भो ! हे देवाः हे सुराः! अवान्तरभेदाभिप्रायेण सुरा देवाश्चेति सम्बोधन द्वयम्! अन्ये गन्धर्वादयश्च सर्वे यूयं वो युष्माकं यथा श्रेय स्स्यात्तथा मम भाषित मर्वाहितचित्तास्सन्तः शृणुत। अमरा इति पाठान्तरम्। तदा श्रेयो दर्शयति - यथा अमरा मृत्युर्रहिताः स्युरिति ।।१८।।

तावद्दानवैर्दैतेयैश्च सन्धि र्विधीयताम्। सख्यं क्रियताम्। कीदृशैः?[1] कालेनाऽनुगृहीतैः कालवशादनुकूलतां प्राप्तैः, न ते सन्धिं यास्यन्तीति शङ्का न कार्येति भावः। तै रसुरै र्वो युष्माक मात्मनः स्वत एव यावद्भवो वृद्धिः स्यात्, तावत् सन्धिर्विधीयतामिति पूर्वेणाऽन्वयः।।१९।।

"कार्यार्थिनः कुतोऽगर्वः" इति न्यायेन अरयोऽपि सन्धेया एवेत्याह - **अरयोपीति**। कर्तव्य प्रयोजनस्य गौरवे भूयस्त्वे सति तदर्थ मरय श्शत्रवोऽपि सन्धेया एवहि। हे देवाः! अर्थस्य प्रयोजनस्य पदवीं सिद्धि गतैः प्राप्तैः पश्चार्दाहमूषकवत् वध्यघातुकभावेन, वर्तितव्यमिति शेषः। यद्वा पेटिकायां निरुद्धोऽहिर्यथा निर्गमद्वार विधानार्थं मूषकेण सन्धिं विधत्ते, पश्चात्तमेव भक्षयति। तथा अर्थस्य पदवीं प्रवृत्तैः प्रथमं सन्धेया इत्यर्थः।।२०।।

तत स्तै स्सह यत्कार्यं तदाह - **अमृतेति**। स्पष्टोऽर्थः। अमृतं विशिनष्टि - यस्याऽमृतस्य पीतस्य सतः मृत्युग्रस्तोऽपि अमरो मृत्युरहितो भवेत्। यस्य पीतस्येति सम्बन्धमात्रेण षष्ठी। येन पीतेनामृतेन मृत्युग्रस्तो रमरो भवेदित्यर्थः।।२१।।

अमृतोत्पादनयत्नं विवृणोति - **क्षिप्त्वेति**। वीरुधः गुल्मानि, तृणानि लताश्चौषधयश्च, इमास्सर्वाः क्षीरोदधौ क्षिप्त्वा मन्दरं पर्वतं मन्थानं मन्थनदण्डं कृत्वा वासुकिं नेत्रं रज्जुं कृत्वा।।२२।।

मया सहायेन, हे देवाः। अतन्द्रिताः यूयं निर्मन्थध्वम्। ननु तेऽप्यमृतपानेन अमराः स्युः। तत्राऽऽह - क्लेशभाज इति। दैत्यास्तु केवलं क्लेशभाजो भविष्यन्ति, यूयमेव फलग्राहाः अमृतपासिनो भविष्यथेत्यर्थः।।२३।।

बलिभिस्सहकारिभिः साध्या अर्थाः तदनुसरणं विना न सेत्स्यन्तीति सामादिकमुपदिशति - **यूयमिति** द्वाभ्याम्। हे सुराः, यदसुरा इच्छन्ति तदेव यूय मनुमोदध्वम्, सान्त्वया साधुमार्गेण सर्वेऽर्था यथा सिध्यन्ति न तथा संरम्भेण क्रोधेन सिध्यन्ति[2]।।२४।।

1.W omits कीदृशैः। 2 A,B,T, add इत्यर्थः।

**विज०** यतो ब्रह्मादयः श्रीनारायणं शरणं प्रापुः, तस्मादेकएवेश्वरः सुरकार्य विषये ईश्वरः समर्थः।। १७।।

आरम्भे यथा येन विधिना युष्माकं श्रेयः स्यात् तं विधिं यातुधानै राक्षसै रनुगृहीतैः ऐकमत्येन गृहीतैः वः आत्मनो युष्मदात्मेनो भवः श्रेयो, [1-]वृद्धिर्वा[-1]।।१८, १९।।

हे देवाः! कार्यार्थगौरवे कर्तव्यस्य प्रयोजनस्य गुरुत्वे सति अर्थस्य प्रयोजनस्य पदवीं गतैर्भवद्भि रसुरा अरयोऽपि सन्धेया हीत्यन्वयः। कथमिव? अहिमूषकयोरिव। "यावन्मयूर सन्त्रस्तः सर्पो मूषकवेश्मनि। निलीय निर्भयः पश्चाद्भक्षित्वा मूषकं गतः" इति तान्त्रिकायाम्। 'सन्ति कार्यार्थ गौरवात्' इति पाठे कार्यार्थं गौरवादरयोऽपि सन्धेया इति न्यायास्सन्ति - इत्यन्वयः। अहिमूषक सन्धानमिव सर्पग्राहिणा सर्पमूषकौ गृहीत्वा फलकोर्ध्वद्वारखर्वमञ्जूषायां निहितौ। तत्रोपोषित स्सर्पोऽमनुत एकमूषिकादनात् वर मनेन सन्धिं कृत्वा इतो निर्याणमिति। मूषकमभाषत - "हे मूषक! उन्नतीभूत मत्फणाग्रे स्थित्वा त्वत्कृत फलकरन्ध्रेण आवां निर्गच्छाव ततः स्वस्थौ स्याव" इति। तेन तौ निर्गत्य स्थितं मार्जारभीतं मूषकं भक्षयित्वा सर्पोऽप्ययासीदिति किंवदन्ती।।२०।।

अविलम्बितं शीघ्रं, यस्य शक्त्या, वैशब्देन योग्यतां सूचयति ।।२१।।

नेत्रं रज्जुम्, " रज्जौ चक्षुषि नेत्रं स्या ज्ञाटाया मपि नेतरत्" इत्याभिधानम् ।।२२,२३।।

इच्छन्ति, कार्यसिद्धिमिति शेषः। सन्धानं वा, संरम्भेण द्वेषेन कोपेन वा, सान्त्वया क्रियया ।।२४।।

**न भेतव्यं कालकूटा द्विषाज्जलधिस्सम्भवात्।**
**लोभः कार्यो न [2]वो जातु रोषः काम[3]श्च वस्तुषु।।२५।।**

## श्रीशुक उवाच

**इति देवान् समादिश्य भगवान्पुरुषोत्तमः।**
**तेषा मन्तर्दधे राजन्। स्वच्छन्द गतिरीश्वरः ।।२६।।**

**अथ तस्मै भगवते नमस्कृत्य पितामहः।**
**भवश्च जग्मतुः स्वं स्वं [4]धामोपेयुर्बलिं सुराः।।२७।।**

1--1. Ma Omits. 2, B वै 3. A,B,G,J,M,Ma,T 'स्तु 4. M,Ma धामयेयुः

दृष्ट्वारीनप्यसंयत्ताञ्जात क्षोभान्स्वनायकान्।
न्यषेध दैत्यराट् श्लोक्यः सन्धिविग्रहकालवित्।।२८।।

ते वैरोचनि मासीनं गुप्तञ्चाऽसुरयूथपैः।
श्रिया परमया जुष्टं जिताऽशेषमुपागमन्।।२९।।

महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः।
अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात्।।३०।।

तदरोचत दैत्यस्य तत्राऽन्ये येऽसुराधिपाः।
शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः।।३१।।

ततो देवासुराः कृत्वा संविदं कृत सौहृदाः।
उद्यमं परमं चक्रु रमृतार्थे परस्परम्।।३२।।

**श्रीध० नेति**। वस्तुषु मथनादुत्पन्नेषु।। २५,२६।।

**अथेति**। सुरास्तु बलिमुपेयुः उपजग्मुः।।२७।।

**दृष्ट्वेति**। असंयत्तानपि दृष्ट्वा स्वनायकान् स्वभटान् युद्धोद्युक्तान् न्यषेधत्। श्लोक्यः कीर्त्यर्हः।।२८।।

**ते इति**। वैरोचनिं बलिम्। जित मशेषं त्रैलोक्यं येन तम्।।२९।।

**महेन्द्र** इति। तत्सर्व ममृतोन्मथनादि।।३०।।

**तदिति**। तत्र ये अन्ये चाऽसुराधिपाः पौलोमकालकेयादयः, शम्बरादयश्च, तेभ्यश्चाऽरोचत।।३१।।

तत इति। संविदं समयम्।।३२।।

**वीर०** किञ्च। जलधिसम्भवात्काल कूटाख्या द्विषात् न भेतव्यं नोद्वेजितव्यं, रुद्रो ग्रसिष्यतीति भावः। तथा वस्तुषु मथनादुत्पन्नेषु लोभः,कामः जातु कदचिदपि रोषश्च न वै कार्यः।।२५।।

इतीत्थं देवान्समादिश्य आज्ञाप्य भगवान्पुरुषोत्तमः अजितः तेषां ब्रह्मादीनां, पश्यतां सतामिति शेषः। हे राजन्! अन्तर्दधे अन्तर्हितवान् यतः स्वच्छन्दगति र्यथेच्छाव्यापारः ईश्वरः।।२६।।

अथ भगवतोऽन्तर्धानानन्तरं तस्मै तिरोहिताय भगवते नमस्कृत्य पितामहो ब्रह्मा, भवो रुद्रश्च स्वं स्वं स्थानं जग्मतुः, सुरा इन्द्रादयस्तु बलिं वैरोचनिं उपेयु रुपजग्मुः।।२७।।

---

1- -1. M,Ma नय सम्यक्तान् जातक्षोभा न्स्व° 2- -2. M,Ma राड्श्लो: 3. M,Ma तेऽन्व रोचन्त 4. A,B,G,J,M,Ma T परन्तप।
5- -5. A, युद्धोद्यतान्; B,J, Omit 6. W Omits किञ्च 7. A,B,T "दन्त"

अरीन् शत्रूनप्यसंयत्तान् युद्धायानुद्यतान् देवान्दृष्ट्वा श्लोक्यः, स्तुत्यः, दैत्यराट् बलिः, जातक्षोभान् सुरान् हन्तु मुद्यतांश्च स्वनायकान् असुरसेनामुख्यान् न्यषेधत् न्यवारयत्। यत स्सः सन्धिविग्रहयोः सन्धिवैरयोः काल मुचितं वेत्ति इति तथा।।२८।।

ते देवा असुरयूथपैः गुप्तमासीनं परमया श्रिया सम्पदा जुष्टं युक्तं, जिता अशेषा देवादयो येन तं वैरोचनिं बलिं उपागमन् [1]समीप मुपविविशुः[1]।।२९।।

तत इन्द्रो महामतिः श्लक्ष्णया मृद्व्या वाचा सान्त्वयित्वा सामोपायेन प्रसन्नं कृत्वा पुरुषोत्तमा[2]दजितात् यच्छिक्षितं तत्सर्वममृतोत्पादन प्रयत्नरूपमकथयत्।।३०।।

तदिन्द्रोक्तं दैत्यस्य बलेर्ये च शम्बरादयोऽसुराधिपाः ये च त्रिपुरवासिनः तेषाञ्च अरोचत [3]रुचिकरमभूत्[3]।।३१।।

ततो देवाश्चासुराश्च ते सर्वे संविदं समयं सङ्केतं कृत्वा परस्परं कृतं सौहृदं यैस्ते, हे परन्तप! अमृतार्थं परममुद्यमं यत्नं चक्रुः।।३२।।

**विज०** वो युष्माभिः ।।२५।।

तेषां पश्यताम्।।२६,२७।।

क्ष्वेलोदर्पः सिंहनादो वा, स्वो नायको येषां ते तथा।।२९, ३०।।

तेऽसुराः दैत्यस्य भृत्याः।।३१।।

संविदं सन्धिलक्षणवार्ताम्।।३२।।

**ततस्ते मन्दरगिरि मोजसोत्पाट्य दुर्मदाः।**
**नदन्त उदधिं निन्यु श्शक्ताः परिघबाहवः।।३३।।**

**दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः।**
**अपारयन्त स्तं वोढुं विवशा विजहुः पथि।।३४।।**

**[4]निपतन्स गिरिस्तत्र बहूनमरदानवान्।।**
**चूर्णयामास महता भारेण कनकाचलः।।३५।।**

1- -1. W Omits 2. W Omits अजितात् 3- -3. W Omits 4. H.V न्यपतन्स"

तां स्तथा भग्नमनसो भग्नबाहूरुकन्धरान्।
विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः।।३६।।

गिरिपातविनिष्पिष्टा न्विलोक्यामरदानवान्।
[1]कटाक्षैर्जीवयामास[-1] निर्जरा न्निर्व्रणा न्यथा।।३७।।

गिरिञ्चाऽऽरोप्य गरुडे हस्तेनैकेन लीलया।
आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः।।३८।।

अवरोप्य गिरिं स्कन्धात् सुपर्णः पततां वरः।
ययौ जलान्त उत्सृज्य हरिणा[2] स विसर्जितः।।३९।।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे मन्दराचलनयनं नाम षष्ठोऽध्यायः।।६।।

**श्रीध० तत** इति। परिघा इव बाहवो येषाम् ।।३३ - ३८।।

**अवरोप्येति**। विसर्जितः प्रस्थापितः। सुपर्णे तत्र स्थिते वासुकेः आगमनायोगादिति भावः।।३९।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षष्ठोऽध्यायः।।६।।

**वीर०** उद्यममेवाऽऽह - ततस्ते देवासुराः दुर्मदाः परिघा इव बाहवो येषां ते मन्दर गिरि मोजसा बलेनोत्पाट्य नदन्तः शक्त्या धारणशक्त्या क्षीरोदधिं निन्युः प्रापयितुं प्रवृत्ता बभूवुः।।३३।।

शक्रवैरोचनिप्रभृतयः सर्वे दूरभारोद्वहनेन श्रान्ताः अत एव मन्दरगिरिं वोढुमपारयन्तोऽशक्नुवन्तः विवशाः पथि गिरिं विजहुस्तत्यजुः।।३४।।

निपतन् स च गिरिः तत्र [3]पात्यमानो[-3] बहूनमरानसुरांश्च चूर्णयामास, यतस्स गिरिः महता भारेण कनकाचलः मेरुतुल्यः।।३५।।

तदा [4]तान् [5]असुरदानवान् भग्नमनसः भग्नोत्साहान् कांश्चित् भग्ना बाहव ऊरवः कन्धराश्च येषां तान्विज्ञाय भगवान्गरुडध्वजो गरुडारूढः आविर्बभूव।।३६।।

---

1--1. A,B,G,J,M,MaT ईक्षयाजी० 2. W °णान्" 3--3. W Omits 4. A,B,T Omit तान् 5. A,B,T सुर°

गिरिपातेन विनिष्पिष्टां श्चूर्णीकृतान् असुरान्दानवांश्च विलोक्य ईक्षयाऽमृतदृष्ट्या निर्जरान् देवान् निर्व्रणान् यथावज्जीवयामास। असुरांस्तु नाऽजीवयदिति भावः।।३७।।

तत एकेनैव हस्तेन लीलया गिरि मृद्धृत्य गरुडे आरोप्य स्वयमप्यारुह्य सुरगणै वृंतः पयोधिं प्रययौ।।३८।।

ततः पततां पक्षिणां वरः श्रेष्ठ स्सुपर्णो गरुडः स्कन्धाद्गिरिमवरोप्य जलान्ते जलसमीपे उत्सृज्य निधाय हरिणाऽनुविसर्जितः प्रस्थापितः ययावगात् । सुपर्णे तत्रस्थिते वासुकेरागमनासम्भवात् तदागमनाय विसर्जितो ययाविति भावः।।३९।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षष्ठोऽध्यायः।।६।।

**विज०** दुर्मदाः दुस्सहमदाः।।३३।।

दूरदेशं प्रति भारो भरणं यस्य स दूरभारो गिरि स्तस्य उद्वहो वहनं तेन[1] श्रान्ताः अपारयन्तः पारं गन्तु मशक्नुवन्तः ।।३४,३५।।

नाम्ना गरुडध्वज इति रूपधारी बभूव।।३६,३७।।

सुपर्णो गरुडः जलान्ते जलमध्ये। अत्र सुपर्ण इति कथनेन इदं तात्पर्यमवबोद्धव्यम्। वैवस्वतरैवतमन्वन्तरयोरमृतमथन मस्ति। तत्र वैवस्वत मन्वन्तरेऽनन्तनाम्ना गरुडेनोढो गिरिः, सुपर्णनाम्नोढो रैवतमन्वन्तरे "अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम्। अमृतार्थे सुपर्णोढो रैवतस्यान्तरे मनोः" (ब्राह्मे) इत्यनेनेति निश्चयोक्तेरिति।।३९।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां अष्टमस्कन्धे षष्ठोऽध्यायः।।६।।

---

1. A,B,T सुरा°

०००0०००

# सप्तमोऽध्यायः

## श्रीशुक उवाच

ते नागराज मामन्त्र्य फलभागेन वासुकिम्।
परिवीय[1] गिरौ तस्मिन् नेत्रमब्धिं मुदान्विताः।।१।।

आरेभिरे सुरा[2]यत्ता [3]मथितुं तेऽमृतार्थिनः[3]।
हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन्।।२।।

तन्नैच्छन् दैत्यपतयो महापुरुषचेष्टितम्।
न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम्।।३।।

स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः।
इति तूष्णीं स्थितान्दैत्यान् विलोक्य पुरुषोत्तमः।।
स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः।।४।।

कृतस्थान विभागास्ते[4] ह्येवं कश्यपनन्दनाः।
ममन्थुः परमायत्ताः अमृता[5]र्थे पयोनिधिम्।।५।।

मथ्यमाने[6]ऽर्णवे सो[7]ऽद्रि रनाधारो ह्यपोऽविशत्।
ध्रियमाणोऽपि बलिभिर्गौरवात्पाण्डुनन्दन!।।६।।

ते तु[8] निर्विण्णमनसः परिम्लानमुखश्रियः।
आसन्स्वपौरुषे नष्टे दैवेनाऽतिबलीयसा।।७।।

विलोक्य विघ्नेशविधिं[9] स[10] ईश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः।
कृत्वा वपुः काच्छपमद्भुतं महत्प्रविश्य तोयं गिरिमुज्जहार।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तमे मथनोद्भूत विषभीत्याऽखिलैर्जनैः। स्तुतस्सन् कृपया रुद्रः पपौ विषमितीर्यते।

त इति फलभागेन तवाऽप्यमृते भागो भविष्यतीत्या[11]मन्त्र्य सम्मन्त्र्य वासुकिं नेत्रं गिरौ परिवीय

---

1. M,Ma "धाय 2. A,B,G,J,T सं 3- -3. A,B,G,J,T अमृतार्थं कुरूद्वह; M,Ma अमृतार्थे कुरूद्वह 4. A,B,G,J, M,Ma,T "स्त एवं 5. A,B,G,J,T तार्थं 6. H,V "नाऽर्ण 7 A यो" 8. A,B,G,J,M,Ma,T सु" 9. M,Ma गतिं 10. A,B,G,J,M,Ma,T तदेश्वरो 11. H,V Omit आमन्त्र्य

संवेष्ट्य अब्धिं मथितुमारेभिरे[1] वासुकेर्मुखं तीव्रं दैत्यान्ग्राहयितुमेव, पूर्वं हरिः पुरस्तान्मुखं जगृहे। देवा अपि[2-2] ततोऽभवन्मुखं जगृहुः ।।१-४।।

**कृतेति**। कृतो धारणे स्थानविभागो यैः ।।५,६।।

**त इति**। दैवेन हेतुना स्वपौरुषे नष्टे सति।।७।।

**विलोक्येति**। विघ्नेशस्य विधिं तेन रचितं विघ्नम्। अवितथः सत्योऽभिसन्धिः सङ्कल्पो यस्य ।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

ते देवासुराः फलभागेन तवाऽप्यमृतभागो भविष्यतीत्येवं वासुकि मामन्त्र्य सम्प्रार्थ्य नेत्रीभूतं तं[3] गिरौ परिवीय परिवेष्ट्य मुदा युक्ताः।।१।।

अमृतार्थे अब्धिं मथितुमारब्धाः हे कुरूद्वह। वासुकेस्तीव्रं मुखं दैत्यान् ग्राहयितुमेव पूर्वं[4] हरिः पुरस्तात् मुखं जगृहे। ततो देवा अभवन्, मुखं जगृहुः ।।२।।

तन्मुखग्रहणरूपं महापुरुषस्य हरेश्चेष्टितं असुराधिपा[5] नैच्छन्। स्वाध्यायश्रुतसम्पन्नाः वेदशास्त्राध्ययन सम्पन्नाः जन्मभिः कर्मभिश्च प्रसिद्धाः वय ममङ्गलं हीनं[6] अहेः[7-] अङ्गं[-7] पुच्छं न गृह्णीम इत्यभिप्रायेण तूष्णीं स्थितान् दैत्यान् विलोक्य भगवान्पुरुषोत्तमः ।।३,४।।

स्मयमानो मुखं विसृज्य अमरैस्सहितः पुच्छञ्जग्राह - एवमित्थं कृतो ग्रहणस्थानविभागो यैस्ते कश्यपस्य नन्दनाः देवासुराः।।५।।

परमधिकमायत्ताः उद्यताः पयोनिधिं अमृतार्थं ममन्थुः। अर्णवे पयोदधौ मथ्यमाने सति अनाधारोऽद्रिः मन्दरोऽपोऽविशत् अपामधोभागं प्रविष्टोऽभूत्।।६।।

हे कुरुनन्दन! बलिष्ठैर्देवासुरैः ध्रियमाणोऽप्यद्रिः गौरवाद्भारभूयस्त्वात्, अपोऽविशदिति पूर्वेणान्वयः। ते देवासुरास्तु अतिबलीयसा दैवेन हेतुना स्वपौरुषे विनष्टे सति निर्विण्णमनसः अत एव परिम्लानमुखश्रियो बभूवुः ।।७।।

विघ्नेशस्य विघ्नाधिदैवतस्य विष्वक्सेनस्य तत्पार्षदस्य वा कस्यचिद्द्विरदवक्त्रादे र्विधिं चरितं तद्विघ्नं[8] विलोक्य तथा सत्यसङ्कल्पः दुरन्तवीर्यः अपारबलो भगवानीश्वरोऽजितः महत् बृहत् अद्भुतञ्च काच्छपं

1. A मथि 2- -2 H.V Omit 3. ABT Omit तं 4. W Omits पूर्वं 5 ABT दैत्या" 6 ABT निकृष्टं 7- -7. ABT महोरग"
8. A,B,T add अपि

वपुर्धृत्वा तोयं जलं प्रविश्य गिरिं मन्दरम् उज्जहार[1] उद्धृतवानित्यर्थः ।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हालाहलनाम तमोगुणजन्यमन्यथाज्ञानलक्षणम्, सुरानाम राजसा अज्ञानलक्षणाः। अमृतंनाम सात्त्विकं ज्ञानलक्षणं मुक्तिसाधनम् इत्याद्युत्पत्तिकथनेन महा[2]महात्म्यं स्पष्टयतेऽत्राध्यायद्वये। तत्राऽऽदौ मथनप्रकारं शास्त्रश्रवणलक्षणं कथयति - **ते नागराजेति**। परिधाय वेष्टयित्वा।।१।।

देवाः ततः पूर्वमभवन्नित्यन्वयः।।२,३।।

अर्थवादेनामङ्गलत्वमुपपादयति **स्वाध्यायेति**।।४,५।।

अपोऽविशत् जलमध्यं प्रविष्टः ।।६,७।।

विघ्नेशेनाऽधो गतिर्यस्य स तथा। तद्गिरिं, काच्छपं कच्छपस्य विद्यमानम्।।८।।

**तमुत्थितं वीक्ष्य कुलाचलं पुनः समुद्यता[3] निर्मथितुं सुरासुराः।**
**दधार पृष्ठेन सलक्षयोजनप्रस्तारिणा द्वीप इवाऽपरो महान्।।९।।**

**सुरासुरेन्द्रै[4] र्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः।**
**बिभ्रत्तदावर्तन मादिकच्छपो मेनेऽङ्ग कण्डूयन मप्रमेयः।।१०।।**

**तदा[5] सुराना[6]विश दासुरेण रूपेण तेषां बलवीर्य मीरयन्।**
**उद्दीपयन्[7] देवगणांश्च विष्णुर्दैवेन नागेन्द्र मबोधरूपः।।११।।**

**उपर्यगेन्द्रं गिरिराडिवाऽन्य आक्रम्य हस्तेन सहस्रबाहुः।**
**तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यै रभिष्टुवद्भिः सुमनोऽभिवृ[8]ष्टः।।१२।।**

**उपर्यधश्चाऽऽत्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः।**
**ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम्।।१३।।**

**अहीन्द्रसाहस्रकठोर[9]दृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः।**
**पौलोमकालेयबलील्वलादयो द[10]वाग्निदग्धा[11]स्सरला इवाऽभवन्[11]।।१४।।**

1. W. Omits उज्जहार 2. M Omits महा 3. A,B,G,J,M,Ma,T "त्थि" 4. W वेग 5. A,B,G,J,M,Ma,T तथा 6. M,Ma "णां वि" 7. H.V."भेव" 8. H.V.सृष्टः; M,Ma "वृष्ट्या 9. M,Ma करालादि" 10. A,B,G,H,J,T,V द" 11- -11. M,Ma "श्शलभा इवाऽपतन्

देवांश्च तच्छ्वासशिखाहतप्रभान् धूम्राम्बरस्रग्वरकञ्चुकाननाम्।[1]
समभ्यवर्षन्भगवद्वशा[2] घना ववुः समुद्रोर्म्युपगूढवायवः।।१५।।

मथ्यमानान्[3] तथा सिन्धोः[4] देवासुरवरूथपैः।
यदा सुधा न जायेत निर्ममन्थाऽजितः स्वयम्।।१६।।

**श्रीध० तमिति।** लक्षयोजन[5-]ः प्रस्तारो[-5] विस्तारोऽस्यास्तीति तथा तेन पृष्ठेन ।।९।।

**सुरासुरेति।** तस्य गिरे रावर्तनं भ्रमणमङ्गकण्डूयनं मेने ।।१०।।

**तदेति।** आसुरेणाऽसुराकारेण, दैवेन देवाकारेणरूपेणाऽविशत् ।।११, १२।।

**उपरीति।** आत्मनि देवदैत्यमध्ये [6-]तत्तदाकारेण[-6] गोत्रे दार्ढ्यरूपेण नेत्रे अभेद्या[7]बोधरूपेण। परेण हरिणा क्षोभितं नक्राणां चक्रं समूहो यस्मिन् ।।१३।।

**अहीन्द्रेति।** दृशश्च मुखानि च श्वासाश्च। अहीन्द्रस्य साहस्रमपरिमिताः कठोरा ये दृगादयः तेभ्यो निर्गताभ्यां अग्निधूमाभ्यामाहतं वर्चो येषां ते। सरला द्रुमविशेषाः ।।१४।।

**देवानिति।** देवांस्तु भगवद्वशा घनाः समभ्यवर्षन्। समुद्रोर्मिभिः उपगूढा वायवश्च शीतला ववुर्वान्ति स्म। कथम्भूतान् ? तस्याहीन्द्रस्य श्वासशिखा[8]भि र्हता प्रभा येषाम्। धूम्राण्यम्बरादीनि येषाम्।।१५, १६।।

**वीर०** तमुत्थितं कुलाचलं मन्दरं वीक्ष्य सुराश्चाऽसुराश्च पुनर्निर्मथितुं समुत्थिता बभूवुः। गिरिं बिभ्रतं कूर्मरूपिणं वर्णयति- दधारेति। लक्षं योजनानि प्रस्तारो विस्तारोऽस्यास्तीति तथा तेन पृष्ठेन दधार, [9-]मन्दर मिति शेषः[-9] कथम्भूतः? अपरो द्वीप इव जम्ब्वादिद्वीप इव। महान्विपुलदेहः।।९।।

सुरासुरश्रेष्ठैः कर्तृभिः भुजानां वेगेन बलेन वेपितं कम्पितं भ्रमन्तं गिरिं, अङ्ग! हे राजन्! पृष्ठे बिभ्रद-प्रमेयोऽपरिच्छिन्न बलशक्त्यादि युक्त्यादियुक्त आदिकच्छपरूप स्तदावर्तनं गिरिभ्रमणमङ्गकण्डूयनं मेने ।।१०।।

एवं जले कच्छपवपुषा गिरिं बिभ्रदेव विष्णुः पुनरसुरानसुररूपेणाऽऽविशत्। कथम्भूतः? तेषा मसुराणां बलंवीर्यञ्च ईरयन्नेधयमानः, तथा दैवेन रूपेण देवगणान् बलवीर्यादिक मुद्दीपयन्नाऽऽविशत् नागेन्द्रं वासुकि मबोधरूपः निद्रारूपः [10-]चकारात् नागेन्द्ररूपश्चेत्यर्थः। अज्ञः पृथक्स्वरूप एव सर्वबलोत्साह वीर्याणि प्रावर्धयदिति भावः। इन्द्रादिरूपः[-10] प्राविशत्।।११।।

1. M,Ma "माम्ब" 2.W "न्मघ" 3. H,V न 4. H,V "न्धो 5- -5. H V "न वि" 6- -6. B,H,J,V Omit 7. H,V "द्यरू" 8. H,V "खाग्निभि. 9- -9. W Omits 10- -10. W. Omits

अगेन्द्रमुपरि गिरेरुपरि अपरो गिरिराडिव सहस्रबाहु रेकेन हस्तेन गिरिमाक्रम्य पुनर्दिव्यभितः स्तुवद्भिः ब्रह्मादिभिः कर्तृभिः सुमनोभिः पुष्पैः [1]करणैरभिवृष्टः तस्थौ।।१२।।

[2]गिरे रुपर्यधस्तद्गोत्रनेत्रयोः गिरिनेत्रयो रात्मनि देवासुरषु च प्रविशता परेण परमात्मना समेधिताः समुपोद्बलिताः अत एव मदोत्कटा देवासुराः तरसा बलेन महाद्रिणा मन्दरेण क्षोभितं नक्राणां चक्रं [3]समूहो यस्मिन् तमद्रिं ममन्थुः।।१३।।

[4]तथा दृशः [5]नेत्राणि च मुखानि च श्वासाश्च अहीन्द्रस्य वासुकेः साहस्रमपरिमिताः कठोरा ये दृगादयः तेभ्यो निर्गताभ्या मग्निधूमाभ्यां हतं वर्चो येषां तेऽसुराः पौलोमादयः दावाग्निदग्धाः सरला द्रुमविशेषाः, त इवाऽभवन्।।१४।।

देवांस्तु मघवद्वशा [6]इन्द्राधीनाः घना मेघाः समभ्यवर्षन्। कथम्भूतान्? तस्य वासुके र्यः श्वास स्तस्य शिखया हता प्रभा येषां, धूम्राणि निश्वासधूमाक्तानि अम्बराणि वस्त्राणि स्रग्वराणि कञ्चुकानि आननानि च येषां तान्। किञ्च, समुद्रस्योर्मिभिः तरङ्गैः उपगूढाः संवृताः वायवः पवनाश्च ववुः प्रसस्रुः।।१५।।

यदा देवासुरै र्मथ्यमानादप्यब्धेः अमृतं न जायेत तदा भगवानजितः स्वयमेव निर्ममन्थ [7-]मन्थनं चकार[-7]।।१६।।

**विज०** तस्य गिरे रावर्तनं परिभ्रमणं कण्डूयनं मेने इत्यन्वयः।।९,१०।।

तमोगुणप्रवर्तकं रूपं यस्य स अबोधरूपः तिर्यग्रूप इति वा।।११, १२।।

आत्मन्यन्तः।।१३।।

अहीन्द्रस्य साहस्रसंख्यां गतानि करालानि च दिश इव विस्तृतानि च मुखानि अहीन्द्र साहस्रकराल दिङ्मुखानि तेषां निःश्वासा एवाऽग्नयः निःश्वासाग्नय स्तेषां धूमै राहतं वर्चो येषां ते तथा।।१४।।

अम्बरं वस्त्रं, कञ्चुकः कूर्पासकम्।।१५, १६।।

**मेघश्यामः कनकपरिधिः [8]कर्णविद्योतविद्युन्[9-]मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो[-9] [10]रक्तनेत्रः।**
**जैत्रै र्दोर्भिर्जगदभयदै र्दन्दशूकं गृहीत्वा मथ्नन् मथ्ना प्रतिगिरि रिवाऽशोभताऽथो[11]द्धृताद्रिः।।१७।।**

**निर्मथ्यमाना दुदधे रभूद्विषं महोल्बणं हालहलाह्व[12] मग्रतः।**
**सम्भ्रान्तमीनोन्मकराहिकच्छपा त्तिमिद्विपग्राहतिमिङ्गिलाकुलात्।।१८।।**

---

1. W Omits करणै. 2. A,B,J गिरि" 3. W Omits समूहः 4. W Omits तथा 5.W Omits नेत्राणि 6.W इन्द्रवशाः 7- -7.W Omits
8. W कण्ठ 9- -9. मूर्धाऽक्रामन् वियति चलितस्त्रग्भरो 10. H,V कण्ठः 11. A,B,G,J,M,Ma,T "धो धृ" 12. W "ख्य

तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्य[1] मप्रति।
भीताः प्रजा दुद्रुवु रङ्ग सेश्वरा अरक्ष्यमाणा श्शरणं सदाशिवम्।।१९।।

विलोक्य तं देववरं त्रिलोक्या भवाय देव्याभिमतं[2] मुनीनाम्।
आसीन मद्रावपवर्गहेतो स्तपोजुषाणं स्तुतिभिः प्रणेमुः।।२०।।

प्रजापतय[3] ऊचुः

देव देव महादेव भूतात्मन् भूत भावन।
त्राहिनश्शरणापन्नां स्त्रैलोक्यदहना द्विषात्।।२१।।

त्वमेकः सर्वजगता[4]मीश्वरो बन्धमोक्षयोः।
तं त्वा मर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम्।।२२।।

गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान् विभो।
धत्से यदा स्वदृग्भूमन् ब्रह्मविष्णुशिवाभिधाम्।।२३।।

त्वं ब्रह्म परमं गुह्यं सदसद्भावभाव[5]नम्।
नानाशक्तिभिराभात[6]स्त्वमात्मा जगदीश्वरः।।२४।।

**श्रीध० मेघश्याम** इति। [7]उद्धृतोऽद्रिः येन स [8]उद्धृताद्रिर्भगवान् परमपुरुषोऽनन्तर मशोभतेत्यन्वयः। कथम्भूतः कनकपरिधिः पीतवासाः कर्णयोः विद्योतमाना विद्युत्कुण्डलल्लक्षणा यस्य। तथा मूर्ध्नि भ्राजन्तो विलुलिताः कचा यस्य स तथा जैत्रैः जिष्णुभिः। दन्दशूकं सर्पम्। [9]मथ्ना मन्दराख्येन मथ्नन्[-9] प्रतिगिरिः प्रतिद्वन्द्वी पर्वतः।।१७।।

**निर्मथ्येति**। हालहलमित्याह्वा नाम यस्य। सम्भ्रान्ता मीना उद्गता मकरादयश्च यस्मिं स्तस्मात् तिमयो मत्स्याः तदा[10]दिभि राकुला[11]श्च ।।१८।।

**तदिति**। तद्विषम्। अप्रति अप्रतिमम्। प्रतिक्रियाशून्य मिति वा। कुतः, उग्रो वेगो यस्य। तदेवाऽऽह - दिशि दिशीति। [12]दिशि दिशि सर्वासु दिक्षु विसर्पत् विसारि। यद्वा - उग्रा वेगा रोमाञ्च स्वेदादयो यस्मादत एव [13]असह्यं विलोक्य भीता अन्येन केनाप्यरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुः जग्मुः ।।१९।।

**विलोक्येति**। त्रिलोक्या [14]भवाय उद्भवाय देव्यासहाऽद्रौ कैलासे आसीनं तथाऽपि मुनीनामभिमतं तेषा मेवाऽपवर्गाय तपो जुषाणम्।।२०।।

1. M,Ma वीर्यम् 2. M,Ma °युतं 3. °जा ऊ° 4. A,B,G,J,M,Ma,T °त ई° 5. A,B,G,J,T °न° 6. M,Ma °स,7. A,B,G,J धृ° 8. A,B,G,J धृ° 9- -9. B,H, J,V Omit 10- -10. B,H,J,V तिम्यादिभि 11. H,V °लात्। 12- -12. B,H,J,V Omit 13 A असह्यवीर्यं 14. B,H,J,V Omit भवाय

*" निर्गुणं सगुणञ्चैव शिवं हरि पराक्रमैः। स्तुवन्तश्च प्रजेशाना नामन्यन्तान्तरं तयोः।" ।।२१, २२।।

नन्वेवम्भूतो विष्णुरिति प्रसिद्धं, तत्राऽऽहुः। **गुणमय्येति**। अस्य जगतो यदा सर्गादीन्धत्से तदा, हे भूमन् स्वदृक् स्वतस्सिद्ध ज्ञानस्त्वं ब्रह्मादिसंज्ञां धत्से।।२३।।

तत्र हेतुः **त्वं ब्रह्मेति**। सदसतो भावान् देवतिर्यगादिरूपान् भावयतीति तथा। सृज्यन्तु त्वद्व्यतिरिक्तं नास्तीत्याऽऽहुः। आत्मैव त्वं नानाशक्तिभिर्जगद्रूपेणाऽऽभातः तस्मा[1] दीश्वरः ।।२४।।

**वीर०** मथ्नन्तमजितं वर्णयति - **मेघश्याम** इति। मेघ इव श्यामः "उपमानानि सामान्य वचनैः" (अष्टा 2-1-55) इति समासः। कनकपरिधिः कनकपरिधानः पीताम्बरः। कण्ठे द्योतमानविद्युन्निभाभरणः वियत्याकाशे मूर्ध्ना सकिरीटेनाक्रामन् चलितां स्रजं वनमालां बिभर्तीति तादृशः। रक्ते नेत्रे यस्य सः। जगता मभयप्रदैः दोर्भि र्भुजैः दन्दशूकं सर्पं गृहीत्वा मथ्ना गिरिणा आब्धिं मथ्नन् [2-]अधोधृताद्रिः[-2] अजितोऽपरो गिरिरिवाऽशोभत।।१७।।

एवं निर्मथ्यमाना दुदधेः प्रथमम् उल्बणं दुस्सहं हालहलाख्यं विषमुदभूत्। कथम्भूता दुदधेः? सम्भ्रान्ता मीना उद्गता मकरादयश्च यस्मिं स्तस्मात्। तिम्यादिभि र्मत्स्यविशेषैराकुलाच्च ।।१८।।

विषं विशिंषस्ततो भीतानां प्रजानां सदाशिवप्रपत्तिमाह - तदितितद्विषमप्रति प्रतिक्रियाशून्य मप्रतिमं वा। कुतः? उग्रः वेगो यस्य तदेवाऽऽह - दिशि दिशि प्रतिदिशम् उपर्यधश्च विसर्पत् उत्सर्पत् उद्गच्छच्च। एवं विधं तद्विषं, दृष्ट्वेति शेषः। अङ्ग हे राजन्। सेश्वरा स्सपालाः प्रजाः त्रिलोकस्थाः अरक्ष्यमाणा स्सदाशिवं शरणं दुद्रुवुः जग्मुः ।।१९।।

त्रिलोक्याः भवाय समृद्ध्यै दैव्या भवान्या सहाऽद्रौ कैलासे आसीन मपवर्गहेतो स्तपो जुषाणं मुनीनामभिमतं देववरं सदाशिवं विलोक्य स्तुतिभिः प्रणेमुः तुष्टुवुः प्रणेमुश्च।।२०।।

स्तुतिमेवाऽऽह - देवदेवेत्यादिना व्यक्तिस्ते अव्यक्तकर्मण इत्यन्तेन। तत्र परमकारणभूत भगवदसाधारणैः धर्मैः, आरोपितै र्वा तैः स्तुतिः क्रियते इति सर्व मुपपन्नम्, रुद्रवाचिशब्दानां शास्त्रदृष्ट्या रुद्रशरीरकपरमात्मपर्यन्तत्वेन वा, रुद्रस्य परमात्मावेशावताररूपत्वा द्वा सर्वं घटते। हे देवाना मपि देव! हे सर्वभूतान्तरात्मन्। हे भूतभावन! भूतस्रष्टः। शरणं गतानस्मान् त्रैलोक्यं दहतीति त्रैलोक्यदहनः। कर्तरि ल्युः। तस्मात् विषात् त्राहि पाहि।।२१।।

* श्रीधरीयोऽयं श्लोकः। 1. H,V यस्मा० 2- -2. W अधोक्षजः

सर्वस्य जगतो बन्धमोक्षयो स्त्वमेक एवेश्वरः तमेवम्भूतं प्रपन्नदुःखहरं त्वामेव कुशलाः सुधियः अर्चन्त्याराधयन्ति। मोक्षेश्वरत्वम् उपायोपदेशद्वारकम् इत्यभिप्रायेण विशिनष्टि - गुरुमिति ।।२२।।

गुणमय्या त्रिगुणात्मिकया स्वशक्त्या स्वांशभूतया मायया अस्य जगतः यदा सर्गादीन् विधत्से करोषि, तदा हे विभोः। हे स्वदृक् स्वप्रकाश, हे भूमन्। ब्रह्मविष्णुशिवाभिधां धत्से बिभर्षि ।।२३।।

गुह्यमौपनिषदं परमं सदसद्भावनं चिदचिद्रूप पदार्थभावनं परं ब्रह्मत्वमेव।"ब्रह्म दृष्टिरुत्कर्षात् " (ब्र.सू. 4-1-5) इति न्यायेन एवं विषाद्भीताः स्तुवन्ति, अत एव ब्रह्मत्वेन स्तुत मप्यात्मानं अब्रह्मभूतं ज्ञात्वा वक्ष्यति रुद्रः - "अहो बत। भवान्येतत् प्रजानां पश्य वैशसम् ------------ पुंसः कृपयतो भद्रे! सर्वात्मा प्रीयते हरिः" प्रीते हरौ भगवति " (भाग .8-7-37 & 40) इति आपन्नानामब्रह्मणि मयि ब्रह्मत्वेन स्तुतिं पश्येति भवान्यै दर्शयित्वा अवश्यं भूतदयया भगवान् सर्वान्तरात्मा परब्रह्मभूतः तुष्यतीति वक्ष्यति। तस्मात् न रुद्रे परत्वभ्रमः कार्यः। तस्माद्रुद्रशरीरकपरमात्मगताः सर्वे चैतत्प्रकरणोदिता धर्माः इत्यवगन्तव्यम्" भूयसां स्या द्बलीयस्त्वम्" इति न्यायेन भगवत्पारम्यस्य प्रायशोऽस्मिन्पुराणे प्रतिपादनात्। नानाशक्तिभि राभातश्चिदचित्कालादि शक्तिविशिष्टतयाऽऽभातः प्रपञ्च स्त्वमेव जगदीश्वर स्तदन्तरात्मा च त्वमेव ।।२४।।

**विज०** कनकपरिधिः कनककाञ्चीकः कर्णविद्योत विद्युत् इति लुप्तोपमेय मिति कर्णशब्दप्रयोगेन कुण्डलद्वयमुपलक्ष्यते तेनैवं योजनीयम्। विशिष्टो द्योतो ययोस्ते विद्योते, कर्णयो र्विद्योते विशिष्टदीप्तिनी विद्युद्रूपे इव कुण्डले यस्य स तथा विलुलिता विचलिता वनस्रग्वनमाला तां धारयतीति मूर्ध्नि शोभमानविलुलितवनस्रग्धरः दन्दशूकं नागेन्द्रं, मथ्ना मन्दराख्येन ।।१७।।

उन्मकराः उन्मुखमकराः उत्तिमयः उत्पतिततिमिमत्स्याः सम्भ्रान्तैः मीनादिभिः आकुलादब्धेः।।२८।।

दुद्रुवुः शीघ्रं जग्मुः ।।१९ - २२।।

यदा सर्गादीन् धत्से तदा ब्रह्माद्यभिधां धत्से ।।२३।।

सदसद्भावा देवासुरतिर्यगादयः तान् भावयति उत्पादयति वर्धयति वशीकरोति चेति अतः सदसद्भाव भावनम्। अनेन ब्रह्मशिवयो रन्तर्यामित्वेन स्थितमेव जगदुत्पत्त्यादि करोतीति निरणायि। नानाशक्तिभिः आभासः आ समन्ताद्भासो भासनं यस्य स तथा ।।२४।।

त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्वभावः।
कालः क्रतुस्सत्यमृतञ्च धर्म स्त्वय्यक्षरं यत्त्रिवृ दामनन्ति ।।२५।।

अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोक भवाङ्घ्रिपङ्कजम्।
[1]कालं गतिं ते[-1]ऽखिलदेवतात्[2]मन् दिशश्च कर्णौ [3]रसनां जले[4]शम्।।२६।।

नाभि र्नभस्ते श्वसनं नभस्वान् सूर्यश्च चक्षूंषि जलं स्मरेतः।
परा[5]वरात्माश्रयणं तवात्मा सोमो मनो द्यौर्भगवञ्छिरस्ते ।।२७।।

कुक्षिस्समुद्रा गिरयोऽस्थिसङ्घा रोमाणि सर्वौषधिवीरुधस्ते।
छन्दांसि साक्षात्तव सप्तधातव स्त्रयीमयात्मन् हृदयं [6]स धर्मः।।२८।।

मुखानि पञ्चोपनि[7]षद स्तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः।
य[8]त्तच्छिवाख्यं परमा[9]त्मतत्त्वं देव! स्वयञ्ज्योति रवस्थिति स्ते ।।२९।।

छाया त्वधर्मो[10]र्मिषु यैर्विसर्गो नेत्र त्रयं सत्त्वरजस्तमांसि।
[11]साक्षान्मनु श्शास्त्रकृत स्तवेक्षा च्छन्दोमयो दे[12]व! ऋषिः पुराणः।।३०।।

नते गिरित्राऽखिल लोकपाल विरिञ्च वैकुण्ठ सुरेन्द्र गम्यम्।
ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम्।।३१।।

कामाध्वरात्रिपुर काल[13]गराद्यनेक भूतद्रुहः क्षपयतः स्तुतये न तत्ते।
[14]यस्त्वन्तकाल इद मात्मकृतं स्वनेत्र वह्निस्फुलिङ्गशिखया भसितं [15]न वेद ।।३२।।

**श्रीध०** स्वतस्सिद्धज्ञान[16]त्व मुपपादयन्तो जगदात्मना आभान[17]प्रकारमाहुः - **त्वमिति**। त्वं शब्दस्य वेदस्य योनिः, अतः स्वतस्सिद्धज्ञानः। त्वं जगदादिर्महत्तत्त्वम्। आत्मा चाऽहङ्कारः। कथम्भूतः? प्राणेन्द्रियद्रव्याणां कारणभूता गुणा यस्य, राजसादित्रिविध इत्यर्थः। स्वभावादयश्च त्वमेव। तत्र क्रतुस्सङ्कल्पः सत्यमृतश्चेति यो धर्मः स च त्वम्। महदादि स्वरूपत्वे हेतुः त्रिवृत् त्रिगुणात्मकं यदक्षरं प्रधानं त्वयि त्वदाश्रयं तदामनन्ति। यद्वा एवम्भूते त्वयि त्रिवृदक्षरं प्रणवं प्रकाशकमाहुरित्यर्थः ।।२५।।

1- -1. M,Ma कालोर्गतिस्तेऽ" 2 A,B,G,J,M,Ma,T "त्मनो 3. A,B,G,J,M,Ma,T रसनं 4. M,Ma "श: 5. H,V "परा" 6. A,B,G,J,T सर्वधर्मः 7. M,Ma "षत्तवे" 8. H,V चिदाख्यं 9. A,B,G,J,T "मार्थ" 10. M,Ma "र्मृङ्यै" 11. A,B,G,J,T साख्यात्मनः; W साख्यात्मन 12. W वेद 13. M,Ma ह" 14 M,Ma यत्त्व 15. M,Ma तवेश। 16. H,V "नमु" 17. H,V. "स

**अग्निरिति**। अखिलदेवतात्मा "अग्नि स्सर्वा देवता:" इति श्रुते:। सोऽग्नि स्ते मुखम्। हे लोकभव द्वितीयान्तेषु विदुरित्यस्य सम्बन्ध:।।२६।।

**नाभिरिति**। परे अवरे[1] च ये आत्मानो जीवा स्तेषा माश्रय[2] स्ते[3] तवाऽऽत्मा अहङ्कार: ।।२७।।

**कुक्षिरिति**। हे त्रयीमयात्मन् वेदत्रयमूर्ते।।२८।।

**मुखानीति**। पञ्चोपनिषद: [4-]अत्र वर्णाधिक्य मार्षम्[-4] तत्पुरुषाघोरसद्योजातवामदेवेशानरूपा: मन्त्रा:। यै र्मुखै रष्टोत्तरत्रिंशन्मन्त्राणां वर्ग:। तेषामेव मन्त्राणां पदच्छेदेन अष्टोत्तरत्रिंशत्कलात्मका मन्त्रा इत्यर्थ: अवस्थिति रुपरतावस्था।।२९।।

**छायेति**। अधर्मस्योर्मिषु दम्भलोभादिषु ते[5] छाया। यै रूर्मिभि: विसर्ग: प्रतिसर्ग: संहार:। यद्वा, यै: सत्त्वादिभि: विविध: सर्ग:, तानि ते[6] नेत्रत्रयम्। हे देव छन्दोमय ऋषिर्वेद: स तवेक्षा ईक्षणम्। साक्षान्मनुरिति पाठे मनुर्वेद:। [7-]तमेवाह छान्दोमय इति[-7] ।।३०।।

[8-]तदेवाऽऽहे-[-8] **नेति**। हे गिरित्र, ते परं ज्योति रखिलानां लोकपालादीनां गम्यं न भवति। कुत:? यत्र रज आदि नास्ति। किं तज्ज्योति:। यन्निरस्तभेदं ब्रह्म '।३१।।

**कामेति**। कामश्चाध्वरश्च दक्षयज्ञ: त्रिपुरादयश्च ये [9]अनेकभूतद्रुह: तान् क्षपयत: संहरत स्ते तत्कर्म स्तुतये न भवति। अत्यल्पमेतदित्यर्थ:। गरभ[10]क्षणस्यापि अवश्यम्भावित्वेन सिद्धवन्निर्देश:। स्तुतयेऽलं न भवतीत्यत्र हेतु:। यस्तु भवान् स्वनेत्रवह्निविस्फुलिङ्गस्य शिखयेदं जगद्दसितं भस्मसाज्ञातं न वेद नाऽऽलोच[11]यत्यपि।।३२।।

**वीर०** [12]त्वमेव शब्दयोनि: शास्त्रप्रमाणक: जगदादि: जगत्कारणभूत: आत्मा "आत्मन आकाश स्सम्भूत:" (तै.त्ति.उ. 2-1-1) इत्युक्त स्त्वमेव द्रव्यं भूतपञ्चकं स्वभावो विशेषणं प्राणेन्द्रियद्रव्यगुणस्वभाव: प्राणादिविशेषणवानित्यर्थ:। कालादिशरीरकश्च त्वमेव। त्वच्छरीरको य: परमात्मा स एव कालादिशरीरक इति तात्पर्यं, सत्यमृतं "ऋतं सत्यं परं ब्रह्म" ( म.ना.उ.10-10) इत्युक्तं निर्विकारं सर्वान्तरात्मभूतं ब्रह्मत्वमेवेत्यर्थ:, धर्म: धर्मशरीरक स्तदाराध्यो वा त्वमेव। त्रिवृत्त्रयाणां वृद्वर्तनं यस्मिंस्तत्। अकारोकार मकारात्मकमक्षरं प्रणवं त्वय्येवाऽऽमनन्ति त्वद्विषयक मेवाऽऽमनन्तीत्यर्थ:।।२५।।

1. H.V 'प' 2. A,B,J Omit ते 3. H,V Omit तव 4- -4. A,B,J Omit 5. B,H,J,V Omit ते छाया 6. B,H,J,V Omit ते 7--7. H.V Omit 8- -8. A,B,J Omit 9. H.V add ते 10 ABJ क्षपण 11. H.V 'ह' 12. W Omits त्वमेव

विराड्रूपं स्तुवन्ति - अग्नि रिति। अखिलदेवतात्मा " अग्नि स्सर्वा देवता" इति सर्वदेवतामयत्वेन श्रुतोऽग्नि स्ते तव मुखम् क्षितिं पृथ्वीं हे लोकभव! तवाङ्घ्रिपङ्कजं [1-]पादपद्मं[-1] विदुः। कालंतु अखिलदेवतात्मनः तव गतिं विदुः। तथा दिश स्तवकर्णौ [2]विदुः। जलेशं वरुणं तव रसनं [3]जिह्वां विदुः।।२६।।

नभ [4]आकाश स्तव नाभिः, नभस्वान् वायुः तव[5]श्वसनं श्वासः, सूर्य स्तव चक्षूंषि नेत्राणि, जलं तवरेतः, तवात्मा परेऽवरे च ये आत्मानो जीवा स्तेषामाश्रयणमाश्रयः आधारः सोमश्चन्द्र स्तव मनः, हे भगवन्! द्यौः [6]स्वर्लोक स्तव शिरः ।।२७।

समुद्रा स्तव कुक्षिः, गिरयः पर्वतास्तु अस्थिसमुदायाः सर्वा ओषधयो वीरुधश्च तव रोमाणि, छन्दांसि गायत्र्यादीनि साक्षात्तव सप्त धातवः। हे त्रयीमयात्मन्! वेदप्रचुर मूर्ते! स प्रसिद्धो वेदोदितो धर्मः तव हृदयम्।।२८।।

हे ईश! पञ्चोपनिषदः तत्पुरुषाघोरसद्योजातवामदेवेशानात्म[7]काः, पञ्चानुवाका स्तव मुखानि मुखव्यापरात्मका इत्यर्थः। मुखानि विशिनष्टि - यै र्मुखैः त्रिंशदष्टोत्तरमन्त्रवर्गाः आष्टोत्तरत्रिंशन्मन्त्राणां वर्गाः तेषामेव मन्त्राणां परिच्छेदेन अष्टोत्तरत्रिंशत्कलात्मका मन्त्रा इत्यर्थः। हे देव! यत्स्वप्रकाशं शिवाख्यं" पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्"(म.ना.उ. 9.3) इति प्रसिद्धं परमात्मतत्त्वं तत् ते तवाऽवस्थिति स्वस्थानं परमात्मशरीरत्वेन तदपृथक्सिद्धत्वेन अवस्थितिः त्वमि[8]ति तात्पर्यम् ।।२९।

अधर्मस्योर्मिषु दम्भलोभादिषु तव छाया अप्रकाशः अधर्मोर्मयस्तव छायाभूता इत्यर्थः। यै स्सत्त्वादिभिः गुणैः विसर्गः प्रपञ्चसृष्टिः तानि सत्त्वरजस्तमांसि तव नेत्रत्रयम्। हे देव! छन्दोमयः गायत्र्यादि छन्दःप्रचुरः पुरातनः ऋषिर्वेदः साक्ष्यात्मनः सर्वज्ञस्याऽऽत्मनः शास्त्रप्रणेतुस्तव ईक्षा [9-]ईक्षणं ज्ञानमित्यर्थः[-9] ।।३०।।

हे गिरित्र! हे अखिललोकपाल! ते तव परंज्योतिः स्वप्रकाशं स्वरूपं विरिञ्च्यादिभि र्गम्यं न भवति, वैकुण्ठः उपेन्द्रः सुरेन्द्रः सुरेन्द्रसमभिव्याहारात् तस्याऽप्यगम्यत्वमति स्तुतिः। यद्वा, अस्य प्रकरणस्य रुद्रशरीरक परमात्मस्तुतिपरत्वात् परमात्मस्वरूपस्य अपरिच्छिन्नत्वेन तेनाऽपीयत्तयाऽवगन्तुमशक्यत्वात् - वेकुण्ठेनाऽप्यगम्यत्वमुक्तम्। ज्योति र्विशिनष्टि - यत्र ज्योतिषि रज आदयः प्राकृतगुणाः न सन्ति यद्ब्रह्म यञ्च निरस्तदेवमनुष्यादि भेदम् ।।३१।।

1- -1. W Omits 2. W Omits विदुः 3. W Omits जिह्वा 4. W Omits आकाशः 5. W Omits श्वसन 6. W omits स्वर्लोकः 7. ABT "क" 8. ABT "तः 9- -9. W Omits

कामश्चाध्वरश्च दक्षश्च त्रिपुरादयश्च येऽनेकभूतद्रुहः तान् क्षपयतः संहरत स्ते तव स्तुतये तत्कामादि क्षपणात्मकं कर्म न भवति तत्कर्मत्वत्स्तुतये न भवति।, अत्यल्पमेत दित्यर्थः। तदेव वक्तुं विशिनष्टि - यो भवांस्तु आत्मकृतं स्वसृष्ट मिदं जगत् अन्तकाले स्वनेत्रवह्निस्फुलिङ्ग स्य शिखया भसितं भस्मसाज्जातं न वेद न जानातीत्यर्थः ।।३२।।

**विज०** शब्दयोनि र्ज्ञप्तिकारणं यस्य स तथा प्राणादि सत्ताप्रदः तत्तत्स्वभावप्रवर्तकः क्रतुः सत्यकामः सङ्कल्पप्रवर्तको वा सत्यं सच्चिदानन्दरूपं ऋतुमेकप्रकारं धारकत्वाद्धर्मः यत् त्रिवृदाकारादि वर्णत्रयात्मकं तदक्षरं प्रणवलक्षणं त्वयि त्वद्वाचकत्वेन प्रवर्तत इत्यामनन्ति " ओ मित्येकाक्षरम्" (भ.गी. 8-15) इत्यादि वेदान्ताः ।।२५।।

अखिलदेवतात्मा अखिलदेवताभ्यो हविर्भागदाता हेलोकभव जगत्कर्तः। अखिलदेवतान्तर्यामिणः।।२६।।

द्रुहिण स्तवात्मा सत्त्वलक्षणं चित्तम्।।२७,२८।।

"ईशान स्सर्वविद्यानाम्" (मना.उ.10-8) इत्यादिपञ्चमन्त्राः यै र्मन्त्रैः त्रिंशदष्टोत्तरमन्त्रवर्गः अष्टत्रिंशत्कलालक्षणः मन्त्रसमूहः उत्पन्न इति शेषः। यच्छिवाख्यं तद्वस्तु तेऽवस्थितिरवस्थानं, तदनुग्रहादिति शेषः ।।२९।।

यैः सत्त्वादिभिः सर्गो भवति तानि सत्त्वादीनि तव नेत्रत्रयं साक्षान्मनुः शास्त्रकृतः तवेक्षा। ततो जातः देवर्षिस्तव छन्दोमयः इच्छातो जातः ।।३०।।

यत्तव परंज्योतिः रूपं तद्विरिञ्चादिभिर्गम्यं न सर्वात्मनेति शेषः। निरस्तभेदम् " नेह नानास्ति किञ्चन (बृह उ. 4-4-19) इति श्रुतेः ।।३१।।

कामाद्यनेकभूतहिंसकस्य क्षपयत स्संहरत स्तव स्तुतये [1]तज्जगत् न शक्तं[1] कुतः - इति तत्राह- यदिति। हे ईश! प्रलयकाले तव स्वस्य नेत्रस्य नेत्रवह्नेः स्फुलिङ्गशिखया भसितं भक्षितमिदमात्मकृतं जगदिति यत्तस्मा दित्यन्वयः। अत्र हरेति पदोपादाना दियं स्तुतिः श्रीहरिविषयेति ज्ञायते। "सर्वात्मा प्रीयते हरिः" (भाग. 8-7-40) इति वक्ष्यमाणवाक्याच्च। "तत्र तत्र स्तुतिपदैर्हरिरेव तु तद्गतः। स्तूयतेऽतो युक्तमेव-गुणाधिक्य वचोऽपि तु" (ब्राह्मे) इति वचनाच्च ।।३२।।

---

1--1 ABMa तच्छक्तिः

ये त्वात्मरामगुरुभि र्हृदि चिन्तिताङ्घ्रिद्वन्द्वं चरन्त मुमया तपसा[1]भितप्तम्।
कत्थन्त[2] उग्र[3]परुषं[4] निरतं श्मशाने ते [5]नूनमूतिमविदंस्तव[-5] [6]हातलज्जाः ।।३३।।

तत्तस्य ते सदसतोः परतः परस्य ना[7]ऽञ्ज स्स्वरूपगमने प्रभवन्ति भूम्नः।
ब्रह्मादयः किमुत संस्तवने वयन्तु तत्सर्गसर्गविषया अपि [8]शक्तिमात्रम्।।३४।।

एतत्परं प्रपश्यामो [9]न परं ते महेश्वर।
मृडनाय हि लोकस्य व्यक्ति स्तेऽव्यक्तकर्मणः।।३५।।

श्रीशुक उवाच

तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः।
सर्वभूतसुहृद्देव इद माह सतीं प्रियाम् ।।३६।।

[10-]श्रीशिव उवाच[-10]

अहो बत भवान्येतत् प्रजानां पश्य वैशसम्।
क्षीरोदमथनोद्भूतात् कालकूटा दुपस्थितम्।।३७।।

आसां प्राणपरीप्सूनां विधेयमभयं हि [11]नः।
एता[12]वान्हि प्रभो रर्थो यद्दीन परि[13]रक्षणम्।।३८।।

प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः।
बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ।।३९।।

पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः।।
तस्मा दिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे।।४०।।

**श्रीध०** [14]तदेवं नित्यं परानु[15]ग्रहे व्यग्रं त्वां ये निन्दन्ति तेऽतिमूर्खा इत्याहुः - **ये त्विति**। ये [16]त्वां उमया सह चरन्तं तस्यां नितरां रतं कामिनं कत्थन्ते प्रलपन्ति, तथा श्मशाने चरन्त मुग्रं क्रूरं परुषञ्च हिंस्रं कत्थन्ते। कथम्भूतम्? आत्मारामाश्च ते गुरवो विश्वहितोपदेष्टारः तै र्हृदि चिन्तित मङ्घ्रिद्वन्द्वं यस्य तथाभूतमपि तपसाऽभितप्तमपि। ते नूनं तव ऊतिं अविदन् अविदन् इति काकुः त्वल्लीलां नैव विदु रित्यर्थः।

---

1. M,Ma °से 2. M,Ma कथ्यन्त 3. MMa वपु° 4. H.V. नितरां 5- -5. M,Ma भूतभूतिमविदस्तव 6. H,M,Ma,V हीन 7. M,Ma नाऽन्त: 8. M,Ma भक्ति° 9. W नाऽप° 10- -10. H,M,Ma,V,W Omit 11. A,B,G,J,M,Ma,T मे। 12. H,V °वांश्च 13. A,B,G,J,M,Ma,T पालनम् 14. H,V Omit तत् 15. A,B,J °हव्य° 16. A,B,J तु

अतो [1]हीनलज्जाः त्यक्तत्रपाः। कथमात्मारामैः सेवितचरणयुगलस्य ते [2-]कामित्वं सम्भवति[-2]? कथं वा तपसाऽभितप्तस्य शान्तस्योग्रत्वं परुषत्वं वा सम्भवतीत्यविचार्यैवप्रल[3]पन्तीत्यर्थः।।३३।।

आस्तान्तावत् निन्दकानां वार्ता महान्तोऽपि तव तत्त्वं न जानन्तीत्याहुः- **तदिति**। तत्तस्मात्तव स्वरूपस्य गमने ज्ञाने ब्रह्मादयोऽपि न समर्थाः, संस्तवने तु कृतश्शक्ताः स्युः, तत्र वयं कथं प्रभवेम? यतस्तेषां सर्गे[4]ऽत्यन्तं अर्वाचीनाः। तथाऽपि यदेतत्त[5]व स्तवनमेत दात्मशक्तिपरिमितमात्र मित्यर्थः ।।३४।।

तदेवाऽऽहुः - **एतत्पर** मिति। [6]न परं रूपं तथाऽपि त्वद्दर्शनादेव कृतार्था वयमित्याहुः मृडनाय हीति। [7-]अव्यक्तकर्मणः अतर्क्यलीलस्य[-7] ।।३५, ३६।।

मत्प्रभाव मविचार्य विषपाने प्रवृत्तं मां कथञ्चिदियं प्रिया वार[8]यतीति शङ्कया तामनुज्ञापयन्नाह - **अहो बतेति** सार्धैश्चतुर्भिः वैशसम् दुःखम् ।।३७।।

**आसामिति**। प्राणपरीप्सूनां प्राणरक्षणेच्छूनां, मे मया प्रभोः समर्थस्य। अर्थः कार्यम्।।३८।।

किञ्च-**प्राणैरिति**। बद्धवैरेषु भूतेषु परस्परं जिघांसत्सु ।।३९।।

**पुंसइति**। कृपयतः कृपां कुर्वतः पुंसः। मे मत्तः स्वस्तिः शोभना सत्ता, सुखेन जीवित मस्त्वित्यर्थः।।४०।।

**वीर०** एवम्भूतं त्वां ये निन्दन्ति ते मूर्खा इत्याह - **येत्विति**। ये तु त्वां उमया भवान्या सह चरन्तं नितरां कामिनं कत्थन्ते प्रलपन्ति। तथा श्मशाने चरन्त मुग्रं क्रूरं परुषं हिंस्रञ्च कत्थन्ते। कथम्भूतम्? आत्मारामाश्च ये गुरवो विश्वहितोपदेष्टारः तैर्हृदिचिन्तित मङ्घ्रिद्वन्द्वं यस्य तथाभूतमपि तपसाऽभितप्तं ते नूनं तव ऊतिम्, अविदन् इति काकुः। त्वदीहितं नैव विदुरित्यर्थः। अत स्ते हातलज्जाः गतत्रपाः यानि कानिचित् त्वन्निन्दावचनानि तेषां निन्दान्यायेन इतरस्तुतौ तात्पर्यमिति भावः।।३३।।

एवम्भूतं त्वां ब्रह्मादयो बोद्धुमेव न प्रभवः, किं पुनः स्तोतुम् वयन्तु न सुतरां प्रभव इत्याहुः - **तदिति**। तत्तस्मात् उक्तविधत्वात्तव सदसतोः चिदचितोः कार्यावस्थयोः परतः कारणावस्थयोश्च परस्य विलक्षणस्य भूम्नो व्यापकस्य ते तव स्वरूपावगमने स्वरूपावबोधने ब्रह्मादयोऽप्यञ्जसा न प्रभवन्ति किमुत संस्तवने न प्रभवन्तीति तत्र वयं कथं प्रभवेम? कुतः यतस्तेषां सर्गसर्गविषयाः वयं तत्सृष्टसृष्टा वयं इत्यर्थः। अतो

---

1. A,B,J हात 2- -2. H,V कामत्वादिकं इति भाव.। 3. A,B,J "पादि" 4. A,B,J "न्तावां" 5. H.V Omit तव 6. H.V नाऽप"
7- -7. B,H,J,V Omit 8. A,B,J येदिति।

यदेतत् त्वत्स्तवनमपि[1] अस्मच्छक्तिमात्रं शक्त्यनुसारमात्रेण कृत मित्यर्थः ।।३४।।

नन्वेते सर्वे धर्मा स्त्वदुक्ताः परमात्मासाधारणाः, अहन्तु पुण्योपचिताधिकारविशेषभाक् कश्चिज्जीव इत्यत्राऽऽहुः - एतदिति। हे परमेश्वर! ते त्वत्तः पर मुत्कृष्टमपरमधमञ्च तत्त्वं न पश्यामः न जानीमः। किन्तु लोकस्य मृडनाय सुखापादनाय तवाऽव्यक्तकर्मणो व्यक्तिरित्येतत्तु जानीम इत्यर्थः। [2-]नूनं भवान्[-2] परमात्मा भवतु मा वा सर्वस्यापि चिदचिदात्मकस्य जगत स्तदात्मकत्वात् तदायत्तसत्तादिमत्त्वेन विना स्वनिष्ठस्वरूप स्वभावयोरभावात् तद्दृष्या तद्धर्मै रेव सर्वं वस्तु स्तोतव्य मित्येव तुष्टुविमेति भावः[3] ।।३५।।

[4-]एवमुक्तो देवः प्रियामाहेत्याह शुकः - तदिति[-4] । एवं भृशमधिकं ईडितः स्वस्मिन्नविद्यमानै रपि परमात्मासाधारणै र्गुणै रीडितः स्तुतो देवो रुद्रः तासां प्रजानां तत्कालकूटा दुपस्थितं व्यसनं दुःखं वीक्ष्य सर्वभूतसुहृत् प्रियां सतीं भवानीम् इदं वक्ष्यमाणमाह ।।३६।।

विषपाने प्रवृत्तं मां इयं प्रिया वारयेदिति शङ्कया ता मनुज्ञापयन्नाह - अहोइति सार्धै श्चतुर्भिः। हे भवानि! अहो बत, महत्कष्टम् एतत् प्रजानां वैशसं दुःखं पश्य। वैशसं विशिनष्टि - क्षीराब्धेर्मथनात् - यदुद्भूतं कालकूटाख्यं विषं तस्मात्समुपस्थितं सम्प्राप्तम्[5]।।३७।।

प्राणपरीप्सूनां जिजीविषूणां आसां प्रजानां मे मया अभयं विधेयं हि, यस्मात् प्रभोः समर्थस्यार्थः कर्तव्यप्रयोजन मेतावानेव कियान् यद्दीनानां परिपालनम् इत्येतावानेव ।।३८।।

तथाहि साधवः क्षणभङ्गुरैः हेतुगर्भ मिदं, स्वैः स्वकीयैः प्राणैः प्राणिनः पान्ति रक्षन्ति, किं प्राणिरक्षयेत्यत आह-आत्ममायया भगवन्मायया मोहितेषु अत एव परस्परं बद्धवैरेषु भूतेषु ।।३९।।

कृपयतः कृपांकुर्वतः पुंसः हे भद्रे! सर्वान्तरात्मा भगवान् प्रीयते। किं तत्प्रीत्या? अत आह - षाड्गुण्यपूर्णेहरौ प्रीते सति सचराचरोऽह मपि प्रीये नितरामानन्दयुक्तो भवामि। तस्मादिदं गरं विषं भुञ्जे भोक्ष्ये मे मत्तः प्रजानां स्वस्ति रस्तु। अय मनव्ययः स्वस्तिशब्दः सुखार्थकः। अत एव प्रयोगात्। "दैवी स्वस्ति रस्तु नः" (पु.सू.शान्ति पाठः 7) इत्यादि श्रुतिप्रयोगाच्च ।।४०।।

**विज०** ये त्वा ममुया उमाया अर्थे तपसे चरन्तम् अत एवाऽभितप्तं, श्मशाने निरतम्, अत एवोऽप्रवपुषं घोराकारं कत्थन्ते भाषन्ते ते तव भूतभूतिं पूर्णैश्वर्यम् अविदो न जानन्तः, अत एव निर्लज्जाः ।।३३।।

---

1. W Omits अपि 2- -2. W च्च 3. A,B,J Omit भाव. 4- -4. W. Omits 5. A,B,J add इत्यर्थः।

यत स्तव चर्यादुर्बोधातत्तस्मात् सदसतोः परतः प्रकृतेः परस्य तस्य भूम्नः ते स्वरूपगमने ब्रह्मादयोऽन्तर्यामिविषये विरिञ्चादयः अन्यत्र सनकादयो नाऽञ्जः प्रभवन्ति, वयं ब्रह्मपुत्राः स्तवने न प्रभवाम इति किमुत? वयं न तन्निकटवर्तिनोऽपीत्याह - तत्सर्गेति। तस्य ब्रह्मणः सृष्टिप्रवाहे निपतिताः, तर्हि क्रियमाणा केय मिति तत्राऽह - भक्तिमात्रमिति अस्मत्स्तुतिः भक्तिप्रकटनमात्रमित्यर्थः। तु शब्दोऽर्चनाद्योतकः ।।३४।।

अव्यक्तकर्मणस्ते व्यक्ति लोकस्य मृडनाय पालनाय इत्येतत्परं केवलं प्रपश्यामः परमन्यत्तवप्रयोजनं न पश्याम इत्यन्वयः। हे महेश्वर! परं तवैतद्रूपं पश्यामः तवान्तर्यामिरूपं परं हरिं न पश्यामः एतद्रूपप्रयोजन माह - मृडनायेति। व्यक्तिस्त्रिनेत्रादि लक्षणाकृतिः ।।३५, ३६।।

वैशसं नाशलक्षणम् ।।३७, ३८।।

पान्ति रक्षन्ति ।।३९।।

कृपयतः कृपाङ्कुर्वतः, गरं विषम् ।।४०।।

### श्रीशुक उवाच

एव मामन्त्र्य भगवान्भवानीं विश्वभावनः।
तद्विषं जग्धु मारेभे [1-]प्रभावज्ञाऽन्व[-1]मोदत।।४१।।

ततः करतलीकृत्य व्यापि हालाहलं विषम्
अभक्षयन्महादेवः कृपया भूतभावनः ।।४२।।

तस्याऽपि दर्शयामास स्ववीर्यं [2]जलकल्म[3]षम्।
यच्चकार गले नीलं तच्च साधोर्विभूषणम्।।४३।।

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः।।४४।।

निशम्य कर्म तच्छम्भो र्देवदेवस्य मीढुषः।
प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ।।४५।।

प्रस्कन्नं पिबतः [4]पाणेः यत्किञ्चिज्जगृहुः स्म तत्।
वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे।।४६।।

---

1- -1. H,V तं भवान्मन्व" 2. M,Ma गत" 3. A,B,G,J,M,Ma,T "ष: 4. W प्राणे·

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धेऽमृतमथने सप्तमोऽध्यायः ।।७।।

**श्रीध० एवमिति**। जग्धुमत्तुम् ।।४१।।

**तत इति**। करतलीकृत्य करतलपरिमित मात्र कृत्वा ।।४२।।

**तस्येति**। जलकल्मषो जलदोषो विषं यस्मा त्तं गले नीलं चकार साधोः कृपालोः ।।४३ - ४५।।

प्रस्कन्नमिति। प्रस्कन्नं गलितं। अपरे च ये सविषा स्तेऽपि जगृहुः। अनेन विषस्य तीव्रतोक्ता ।।४६।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तमोऽध्यायः।।७।।

**वीर०** एव मित्थं भवानी मामन्त्र्यऽनुज्ञाप्य विश्वसुखकरो भगवान् रुद्रः तद्विषं जग्धु मत्तु मारेभे। तत्प्रभावज्ञा भवानी अन्वमोदत अनुमोदितवती ।।४१।।

ततः तदनुमोदनानन्तरं सर्वतो व्यापि हालाहलाख्यं विषं करतलीकृत्य करतलमात्रपरिमितं कृत्वा भूतसुखकरो महादेवः कृपया अभक्षयत् ।।४२।।

जलकल्मषरूपं विषं स्ववीर्यं स्वबलं तस्यापि रुद्रस्यापि दर्शयामास, यस्मात्तं रुद्रं गले नीलं चकार। तच्च नैल्यं साधोः रुद्रस्य विशेषेण भूषण मेवाऽभूत्। जडकल्मष इति पाठान्तरम्। तदा दुस्सहं विषं कथं जरयामासेत्यत्राह - जडकल्मषः जडाना मितरेषामेव कल्मषो बाधकमित्यर्थः ।।४३।।

कृपालूना मियं परिपाटीत्याह - **तप्यन्त** इति। प्रायशः[1] साधवः साधु कुर्वन्ति परकार्यमिति साधवः, स्वार्थनिरपेक्षपरकार्यप्रसाधनस्वभावाः जनाः प्रायशो लोकतापेन स्वयमपि तप्यन्ते न तद्व्यर्थम्, अपि तु अखिलान्तरात्मनः परमपुरुषस्याऽऽराधनं तोषहेतुः।।४४।।

मीढुषः आश्रिताशीर्वर्षुकस्य शम्भोर्देवस्य तद्विषपानरूपं कर्म श्रुत्वा प्रजाः दाक्षायणी भवानी ब्रह्मा च वैकुण्ठो भगवांश्च शशंसिरे प्रशंसितवन्तः[2] ।।४५।।

शम्भो र्विषं पिबत स्सतो यत्किञ्चित्प्रस्कन्नं गलितं विषं तत् वृश्चिकादयः प्राणैः जगृहुः। विषौषध्यः काकतुण्डकरवीरादयः दन्दशूकाः दंशनस्वभावाः अन्ये जन्तवः, सर्पाणामुक्तत्वात्।।४६।।

1.W Omits प्रायशः 2. A,B,T add इत्यर्थः.

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तमोऽध्यायः ।।७।।

**विज०** भवान्या स्तदात्मार्थत्वात् विषभोजनं किं न निवारितमिति तत्राऽऽह - तत्प्रभावज्ञेति ।।४१।।

गले[1] कण्ठे कल्मषं यस्य स तथा। तस्य विषस्य स्ववीर्यं स्वरूपभूतवीर्यम्।।४२।।

किं तद्वीर्यम् इति तत्राऽऽह - यदिति। साधो र्देवस्य भूषण मभूत् न दूषणमित्यर्थः ।।४३।।

लोकोपकारार्थ मेव विषपानमित्याशयेनाऽऽह - तप्यन्त इति। अनेन किमस्य प्रयोजनमिति तत्राह - परमेति ।।४४।।

शशंसिरे इत्यनेन रुद्रस्य यशोऽर्थं हरिणा विषं न पीतमिति ज्ञायते - "रुद्रस्य यशसोऽर्थाय स्वयं विष्णुर्विषं विभुः। न सञ्जह्रे समर्थोऽपि वायुश्चोचे प्रशान्तये" (ब्राह्मे) इति वचनाच्च ।।४५।।

विषौषध्यः लाङ्गलीप्रभृतयः ।।४६।।

इति श्रीमद्भागवते सप्तमस्कन्धे
श्रीविजयध्वजतीर्थविराचितायां पदरत्नावल्यां
टीकायां सप्तमोऽध्यायः।।७।।

1. Ma Omits गले

o0o0o0o

# अष्टमोऽध्यायः

## श्रीशुक उवाच

पीतेगरे वृषाङ्केण प्रीतास्ते[1]ऽमरदानवाः।
ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत्॥१॥

तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः।
यज्ञस्य देवया[2]नस्य मेध्याय हविषे नृप॥२॥

तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डु[3]रः।
तस्मिन् बलिः स्पृहाञ्चक्रे नेन्द्र ईश्वरशिक्षया॥३॥

तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः।
दन्तैश्चतुर्भिः श्वेता[4-]द्रेर्हरन् शुक्लवतो महि[-4]म्॥४॥

[5-]*कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः।
[-5]तस्मिन् हरिः स्पृहाञ्चक्रे वक्षोऽलङ्करणे मणौ॥५॥

ततोऽभवत्पारिजातः सुरलोकविभू[6]षणः।
पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान्॥६॥

ततश्चाप्सरसो जाता निष्क[7]ग्रीवास्सुवाससः।
रमण्य स्स्वर्गिणां वल्गु गतिलीलावलोकनैः॥७॥

ततश्चाविरभूत्साक्षाच्छ्रीरमा भगव[8]त्परा।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदा[9]मनी यथा॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः। धन्वन्तरे हृते सोमे मोहिन्युद्भव ईर्यते॥

**पीत** इति। हविर्धानी सुरभिः॥१॥

1. H.V. ते सुर 2. M,Ma पा" 3. H.V "ण्डरः 4- -4. A,B,G,J,T "द्रेर्हरन्भगवतो महिम्; H,V, "द्रेर्हरन् शुक्लवतोमहि, M,Ma "भो हरिस्तं तु समग्रहीत् *This verse is not found in H,M,Ma,v Edns. 5- 5. W ततो गजा. करिण्योऽष्टौ कौस्तुभ श्चाभवन्नृप। पद्मरागे 6. A,B,G,J,T "णम् 7. A,B,G,J,M,Ma,T "कण्ठ्य" 8. M,Ma वत्प्रिया। 9. B,H,V "मि"

**तामिति।** देवयानस्य ब्रह्मलोकमार्ग प्रापकस्य यज्ञस्य सम्बन्धिने हविषे।।२।।

**तत उच्चैरिति।** ईश्वरशिक्षया प्रागेवकृतया।।३।।

**तत इति।** [1-]भगवतो य[-1]: श्वेताद्रिः कैलासस्तस्य महिं[2] महिमानम्। दन्तैः शिखरतुल्यैः[3] हरन् चन्द्रवत्पाण्डर[4] इत्यनुषङ्गः।।४-६।।

**ततश्चेति।** वल्गुभिः गत्यादिभिः स्वर्गिणां रमण्यो रतिकर्त्र्यः।।७।।

**ततश्चाविरिति।** सुदामा पर्वतः तत्रैकस्यांदिशि जाता सौदामिनी[5]। स्फटिकमणि[6]मयगिरिशृङ्गेषु अधिकं स्फुरन्ती विद्युदिव कान्त्या दिशो रञ्जयन्ती श्रीः सम्पत् साक्षान्मूर्तिधारिणी सती सैव भगवत्परा रमा आविरभूदित्यर्थः।।९।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं वृषाङ्केण रुद्रेण गरे विषे पीते भक्षिते सति ते सर्वे[7] अमराः दानवाश्चे न्द्रादयो वैरोचनादयश्च [8-]प्रीताः हृष्टास्सन्तः[-8] तरसा बलेन सिन्धुं ममन्थुः। ततस्तस्मिन् सिन्धावेवं मथ्यमाने सति ततो विषादनन्तरं हविर्धानी सुरभिः काम धेनुरभवत्।।१।।

तां हविर्धानीं अग्निहोत्रीं दधिपयोघृतादिहविःप्रदानेन अग्निहोत्रादि वैदिककर्मनिष्पादिनीं ब्रह्मवादिनः ऋषयः जगृहुः स्वीकृतवन्तः। किमर्थम्? हे नृप! देवयानस्य देवा यान्त्यस्मिन् कर्मणि इति देवयानं तस्य यज्ञस्य सम्बन्धिने मेध्याय हविषे पय आदि हविरर्थम्।।२।।

ततो हविर्धान्युद्भवानन्तरं चन्द्रवत्पाण्डुरः शुभ्रो हयः उच्चैश्रवा इति प्रसिद्ध उद्बभूव[9]। तस्मिन्नुच्चैःश्रवसि हये ईश्वरशिक्षया "लोभःकार्यो न वै जातु रोषः कामस्तु वस्तुषु" (भाग.8-6-25) [10-]इत्याद्युक्तरीत्या[-10] शिक्षया इन्द्रः स्पृहां न चक्रे। उच्चैःश्रवस्युत्पन्नामपि स्पृहामभिव्यक्तां न चक्रे। किन्तु मनस्येवाऽधादिति भावः। [11-]बलिः स्पृहां चक्रे[-11] इत्यर्थः।।३।।

तत उच्चैःश्रवस उदयानन्तरं ऐरावताख्यो वारणेन्द्रो गजश्रेष्ठः विनिर्गतः। कथम्भूतः भगवतो रुद्रस्य [12-]श्वेताद्रिः कैलासं तस्य[-12] महिं माहात्म्यं शोभां चतुर्भिर्दन्तैः शिखरतुल्यैर्हरन् चन्द्रवत्पाण्डुर इत्यनुषङ्गः।।४।।

---

1- -1. H,V Omit 2. H,V महि 3. A,B,J कल्पैः 4. A,B,J, °ण्डुरः 5. A,B,J °मनी 6. A,B,J कादिम° 7. A,B,T सुरा 8- -8. A,B,T Omit 9. A,T उद्भूतः। 10- -10. W इति पूर्वं कृतया भगवतः 11- -11. W. Omits 12- -12. A,B,T °न्द्रैः कैलासस्य

ततोऽष्टौ दिग्गजा अभवन्। ततो हे नृप! अभ्रम्वादयोऽष्टौ करिण्योऽभवन्। ततो महोदधेः कौस्तुभाख्यं रत्नमभूत्[1] , स च पद्मरागो मणिः तस्मिन् महामणौ भगवान् हरिः वक्षसोऽलङ्करणे निमित्ते स्पृहाञ्चक्रे।।५।।

ततः पारिजातो वृक्षः सुरलोकस्य विभूषण[2]रूपोऽभवत्। कथम्भूतः? यः शश्वत् सदाऽर्थिनः अर्थैः [3]पूरयति। पूरयन् अर्थान् पूरयन् भुवि भवान् यथाऽर्थान्[4] पूरयति अर्थिनामर्थान् तथा[5]भूत[-5] इत्यर्थः।।६।।

ततश्चाप्सरसः उद्बभूवुः। कथम्भूताः? [6]निष्कग्रीवाः[-6] स्वर्णाभरणविशेष[7]कण्ठ्यः शोभनानि वासांसि यासां ताः स्वर्गिणां स्वर्गतानां सुन्दरगतिभिः लीलावलोकनैश्च रमण्यः प्रियाः स्वर्गिणां रतिकर्त्र्य [8]इत्यर्थः।।७।।

ततः साक्षात् श्रीर्लक्ष्मीराविरभूत्। कथम्भूता? भगवत्परा भगवदनन्यार्हा कान्त्या दिशो रञ्जयन्ती प्रकाशयन्ती यथा सौदा[9]मनी विद्युत् तद्वत्। सुदामापर्वतः [10]तेनैकस्यां दिशि जाता सौदामनी स्फटिकादिमयगिरिश्रृङ्गेष्वधिकं स्फुरन्ती विद्युदिव कान्त्या दिशो रञ्जयन्तीत्यर्थः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

किमर्थं जगृहु रिति तत्राऽऽह - यज्ञस्येति। हविषे यज्ञस्य देवानां सोमपानस्य च मेध्याय देवानां सोमपानं यस्मिंस्तथा। तस्येति वा।।१-५।।

सुरलोकं विभूषयतीति सुरलोकविभूषणः।।६।।

निष्कमाभरणविशेषः, रमण्यो रमणीयाः।।७।।

रुच्या विशिष्टं द्योतयतीति विद्युत् , सा च सौदामनी।।८।।

तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः।
रूपौदार्यवयोवर्ण महिमाक्षिप्तचेतसः।।९।।

तस्या [11]आसनमानिन्ये महेन्द्रो महदद्भुतम्।
मूर्तिमत्यस्सरिच्छ्रेष्ठा हेमकुम्भै र्जलं शुचि।।१०।।

आभिषेचनिका भूमिराहरत् सकलौषधीः।
गावः पञ्च पवित्राणि वसन्तो मधुमाधवौ[12]।।११।।

---

1. W. 'गः म' 2. A,B,T भूतो' 3. W. Omits पूरयन् 4. W. Omits अर्थान्। 5- -5. W. Omits 6- -6. A,B,T Omit 7. B,W कण्ठाः 8. W. Omits इत्यर्थः। 9. A,B,T 'मि' 10. A,B,T तत्रै' 11. M,Ma "आसऽ" 12. M,Ma 'वम्

**ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि।**
**जगुर्भद्राणि गन्धर्वा नटयश्च[1] ननृतुर्जगुः।।१२।।**

**मेघामृदङ्गपणवमुरजानकगोमुखाम्[2]।**
**व्यनादयञ्छङ्खवेणु वीणास्तुमुलनिस्स्वनान्[3]।।१३।।**

**ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम्।**
**दिग्गजाः[4] पूर्णकलशैः सूक्तवाकैर्[5]द्विजेरितैः।।१४।।**

**समुद्रः पीतकौशेयवाससी समुपाहरत्।**
**वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम्।।१५।।**

**भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः।**
**हारं सरस्वती पद्ममजो नागाश्च कुण्डले।।१६।।**

**श्रीध० तस्यामिति**। तस्या रूपादिमहिम्ना आक्षिप्तं चेतो येषाम्।।९।।

भगवद्वक्षसि स्थितया श्रिया विलोकितानां देवानां[6] यथा पूर्वं सर्वसम्पत्प्राप्ति[7] मसुराणाञ्च तद्विपर्ययं वक्तुं तस्याः[8] अभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारं तावदाह[9] - तस्या आसनमित्यारभ्य[10] अथाऽऽसीद्वारुणीत्यतः प्राक्तनेन ग्रन्थेन।।१०।।

**आभिषेचनिका** इति। आभिषेचनिकाः अभिषेकोचिताः। पञ्चपवित्राणि पञ्चगव्यानि। मधुमाधवौ चैत्रवैशाखौ तद्भवं फलपुष्पादि। पाठान्तरेऽपि द्वन्द्वैक्ये स एवाऽर्थः। मधुमासे भवं मध्विति वा।।११।।

**ऋषय** इति। अभिषेक मभिषेकोचितं विधिम्। नटयो नटानां स्त्रियः।।१२।।

**मेघा** इति। शङ्खवेणुवीणाश्च व्यनादयन्। तुमुलो निःस्वनो येषां तान्मृदङ्गादीन्।।१३।।

**वीर०** तस्यां रूपादिमहिम्ना आक्षिप्तं चेतश्[11]चित्तं[12] येषां ते सर्वे ससुरासुरदानवाः स्पृहाञ्चक्रुः।।९।।।

भगवद्वक्षसि[13] स्थितया श्रिया विलोकितानां देवादीनां यथापूर्वं सर्वसम्प्रत्प्राप्तिमसुराणां तद्विपर्ययञ्च वक्तुं तस्या अभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारमाह - तस्या आसनं इत्यादिना अथाऽसीद्वारुणी इत्यतः प्राक्तनेन ग्रन्थेन। तस्या रमायाः उपवेशनार्थं महदद्भुतं च सिंहासनम् इन्द्र आनीय

---

1. M,Ma नार्यश्च। 2. M,Ma °रु° 3. M,Ma °तु° 4. A,B,G,J,M,Ma,T °दिग्गिभाः 5. A,B,G,J,T °वाक्यैः 6.A,B,J सुराणां 7. A,B,J Omit सर्व 8. A,B,T Omit तस्याः 9. A,B,J आह 10. A,B,J °दिना 11. A,B,T Omit चेतः 12. W.Omits चित्तं 13. A,BT °क्षःस्थि°

समर्पितवान्। गङ्गायमुनादयः[1] सरिच्छ्रेष्ठाः मूर्तिमत्यः[2] देहयुक्ताः[3] सत्यः हेमकुम्भैः शुद्धं जलमानिन्यिरे।।१०।।

भूमिरपि मूर्तिमती सती आभिषेचनिका अभिषेकोचिता ओषधीः सकला आहरदानिन्ये। गावस्तु पञ्च पवित्राणि पञ्चगव्यानि आजह्रुः। वसन्तः ऋतुः मूर्तिमान् मधुमाधवौ चैत्रवैशाखभवफलपुष्पाणि [4]आहर दित्यनुषङ्गः। पाठान्तरे द्वन्द्वैक्येऽपि स एवाऽर्थः। मधुमासे भवं मध्विति वा।।११।।

ततः ऋषयोऽभिषेकं [5]यथाविधि[-5] अभिषेकोचितविधिं यथावत्कल्पयाञ्चक्रुः। गन्धर्वा भद्राणि मङ्गलानि जगुः नट्यः नटानां स्त्रियः ननृतुः जगुश्च।।१२।।

मेघा मूर्तिमन्तो मृदङ्गादीन्वाद्यविशेषान् शङ्खवेणुवीणाश्च व्यनादयन्। तुमुलो निस्स्वनो येषां तान्मृदङ्गादींश्च।।१३।।

ततः पद्मकरां सतीं श्रियं दिग्गजाः पूर्णकलशैः सर्वौषधीयुक्तैः सरिच्छ्रेष्ठा नीतैः द्विजेरितैः सूक्तवाकैरभिषेचनिकमन्त्रैस्सह अभिषिषिचुः अभिषिक्तवन्तः।।१४।।

तत स्समुद्रः पीतकौशेयवाससी समर्पितवान्। ततो वरुणः मधुना मधुपानेन मत्ताः षट्पदाभृङ्गाः यस्यां तां वैजयन्तीं वनमालां, समुपाहरदित्यनुषङ्गः।।१५।।

विश्वकर्मा प्रजापतिः भूषणानि, सरस्वती हारम् अजो ब्रह्मा पद्मं, नागाश्च कुण्डले समुपाहरन्।।१६।।

**विज०** रूपादिमहिम्ना ।।९,१०।।

आभिषेचनिकाः अभिषेकयोग्याः साधनानि पञ्चपवित्राणि गोमयादीनि। माधवं स्वकालसम्भवम्।।११,१२।।

शङ्खादीनां तुमुलः निस्स्वनो येषु ते तथा ।।१३ - १६।।

**ततः कृत स्वस्त्ययनोत्पलस्रजं नदद् द्विरेफां परिगृह्य पाणिना**
**चचाल वक्त्रं सुकपोलकुण्डलं सव्रीडहासं दधती सुशोभनम्।।१७।।**

**स्तनद्वयं [6]चारुकुशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम्।**
**[7]इतस्ततो नूपुरवल्गुशिञ्जितैः विसर्पती हेमलतेव सा बभौ।।१८।।**

---

1. A,B,T गङ्गाद्यः 2. A,B,T Omit मूर्तिमत्यः 3. W. Omits देहयुक्ताः 4. A,B,T add उप 5- -5. W. विधि॰
6. A,B,G,J,M,Ma,T चाऽति॰ 7.A,B,G,J,M,Ma,T त॰

विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाऽव्यभिचारिसद्गुणम्।
गन्धर्वयक्षासुरसिद्धचारण त्रैविष्टपेया[1]दिषु नाऽन्वविन्दत।।१९।।

नूनं तपो यस्य न मन्यु निर्जयो ज्ञानं क्वचित्तच्च[2] न सङ्गवर्जितम्।
कश्चिन्महांस्तस्य न कामनिर्जयाः स ईश्वरः किं परतो व्यपाश्रयः।।२०।।

धर्मः क्वचित्त[3]स्य न भूत सौहृदं त्यागः क्वचित्त[4]स्य न मुक्तिकारणम्।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः।।२१।।

क्वचिच्चिरायुर्नहि शीलमङ्गलं क्वचित्तदप्यस्ति न वेद्य मायुषः।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्चन काङ्क्षते हि माम्।।२२।।

[5-]श्रीशुक उवाच[-5]

एवं विमृश्याव्यभिचारि सद्गुणै[6]ः वरं निजैक[7-]श्रयतोऽ[-7]गुणाश्रयम्।
वव्रे वरं सर्वगुणै रपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम्।।२३।।

तस्यां सु देश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम्।
तस्थौ निधाय निकटे तदुरः स्वधाम सव्रीडहासविकसन्नयनेन याता[9]।।२४।।

**श्रीध०** **विलोकयन्तीति**। पदमाश्रयः [10] ध्रुवं नित्यमव्यभिचारिणो नित्याः सन्तो गुणाः यस्मिन् तत्राऽन्वविन्दत। क्वचिदपि कस्यचिद्दोषस्य सद्भावात्।।१८ - १९।।

तदेवाऽऽह - **नूनमिति**। त्रिभिः मन्युनिर्जयो नास्ति[11] दुर्वासःप्रभृतिषु। क्वचित्[12] गुरुशुक्रादिषु। सङ्गवर्जितं ज्ञानं नास्ति महत्वेऽपि ब्रह्मसोमादौ न कामनिर्जयः। परतो व्यपाश्रयः परापेक्ष इन्द्रादिः, स किमीश्वरः।।२०।।

**धर्म इति**। न भूतसौहृदम्, परशुरामादिषु न मुक्तिकारणं त्यागः शिबिप्रभृतिषु। पुंसः कार्तवीर्यादेः वीर्यमस्ति। [13] अजवेगनिष्कृतं कालवेगेन निष्कृतं[14] परिहृतन्तु त्यक्तं[15] न भवति। [16-]अपि तु कालवेगनाशितमेवेति भावः[-16] गुणसङ्गवर्जित सनकादि द्वितीयो मम परो[17] नहि समाधि निष्ठत्वात्।।२१।।

**क्वचिदिति**। चिरायुष्यपि मार्कण्डेयादौ शीलमङ्गलं च नास्ति इन्द्रिय दमनशीलत्वात्। क्वचित्तद

1. M,Ma °शा° 2. H.V °तस्य 3. A,B,G,J,T °त्र 4. A,B,G,J,T °त्र; M,Ma तत्र 5- -5. A,G,J,T Omit 6. M,Ma °णं परं 7- -7. A,B,G,J,T °काश्रयतया गु°; H.V °काश्रयता गु°, M,Ma °काश्रयि सद्गु° 8. M,Ma निधाय 9. M,Ma भीता 10. A adds प्रतिरूपम् 11. A. adds तपस्विषु 12. B,H,J,V Omit क्वचित् 13. A. adds तत् 14. A,B,J Omit निष्कृतं 15. A,B,J Omit त्यक्तं 16- -16. A,B,J Omit 17. A,B,J वरो

प्यस्ति हिरण्यकशिपुप्रभृतौ आयुषस्तु[1] स्थैर्यं न वेद्यम् दुर्विज्ञानम्[2] भगवद्द्वेषेण अकस्मादेव मृत्युसम्भवात्। यत्र कुत्र च श्रीरुद्रे मार्कण्डेयादिवत् इन्द्रियदमनाद्यभावात् शीलमङ्गलञ्च आयुर्निश्चयश्चेत्युभयमस्ति न चाऽन्यः पूर्वोक्तः कश्चिद्दोषः, तथाऽपि सोऽप्यमङ्गलः श्मशानवासाद्यमङ्गलचेष्टितः। श्रीमुकुन्दं लक्ष्मीकृत्याऽऽह - कश्चेति। कश्चित्सुमङ्गलो निरवद्यश्च स तु मां न हि कांक्षते आत्मारामत्वात्।।२२।।

**एवमिति**। एवं विमृश्य रमा निरपेक्षमपि मुकुन्दमेव वरं वव्रे। तत्किम्? अव्यभिचारिभिः सद्भिः धर्मज्ञानादिभिः गुणैः निजैकाश्रयतया च नैरपेक्ष्येण वरं सर्वोत्तमम्। तत्र हेतुः अगुणाश्रयं प्रकृतिगुणातीतम्। पाठान्तरेऽप्ययमेवार्थः। अत एव स्वस्याः[3] ईप्सितम्। किञ्च,सर्वैर्गुणैरणिमादिभिरपेक्षितं वृतम्। अयं भावः - यद्यपि स्वयमात्मारामत्वेनाऽन्य[4]निरपेक्षः, तथाप्याश्रिता अणिमादिसिद्धीर्यथा नोपेक्षते तथा[5] मामपि नोपेक्षेत[6]। तावतैव तत्सेवयाऽहं कृतार्था स्यां किमन्यैः प्राकृतैरिति तमेव वृतवतीति।।२३।।

तदेवाऽऽह - **तस्योति** तस्यांसदेशे कमनीयां नवकञ्जमालां निधाय तदनुग्रहं प्रतीक्षमाणा तूष्णीं तस्य निकटे तस्थौ। कथम्भूतां मालाम्?माद्यन्तो ये मधुव्रताः तेषां वरूथस्य यूथस्य[7] गिरा उपघुष्टां नादिताम्। कथम्भूताः श्रीः सव्रीडहासेन [8-]विकसत् प्रफुल्लं यन्नयनं तेन[-8] तस्योरः स्वधाम याता सती वक्षः प्रतीक्षमाणा तस्थावित्यर्थः।।२४।।

**वीर०** ततः कृतस्वस्त्ययना कृतमङ्गलाश्रया श्रीः नदन्तो द्विरेफा भ्रमरा यस्यां ताम्, उत्पलस्रजं पाणिना परिगृह्य निरस्तनिखिलदोषस्य समस्तकल्याणगुणाकरस्य स्वाभिमतस्य पुंसः कण्ठे निधातुं परिगृह्योति भावः। चचाल कथम्भूता सती शोभनयोः कपोलयोः कुण्डले [9-]प्रतिफलन्ती[-9] यस्मिन्, सव्रीडो हासःयस्मिंस्तत् सुशोभनमतिसुन्दरं वक्त्रं दधती।।१७।।

तथा चन्दनकुङ्कुमाभ्यां उक्षितं सिक्तं लिप्तं समं निरन्तरञ्च यत् स्तनद्वयं तच्च चारु सुन्दरं कृशञ्चोदरञ्च दधती ततः सा श्रीः नूपुराणां वल्गुभिः मधुरैः शिञ्जितैः विसर्पती इतस्ततः चलन्ती हेमलतेव बभौ।।१८।।

तत आत्मनः स्वस्याः पदमाश्रयं ध्रुवं नित्यमव्यभिचारिणो नित्याः [10-]स्वाभाविकाः[-10] सन्तः कल्याणाः[11] गुणाः यस्मिंस्तत्। निरवद्यं निरस्तहेयगुणम्। एवम्भूतं पदं गन्धर्वादिमध्ये विलोकयन्ती विचारयन्ती नाऽन्वविन्दत नाऽपश्यत्। कचित्कस्यचिद्दोषस्य दर्शनेन नाऽन्वविन्दतेति भावः।।१९।।

---

1. A,B,J, Omit तु 2. A,J दुर्ज्ञातम्; B. दुर्ज्ञानम् 3. A,B,J °स्य 4. H,V Omit अन्य 5. A,B,J तद्वत् 6. H, V °क्षते 7. A,B,J Omit यूथस्य 8- -8. B,J विकसन्नयनं तेन; H.V विकसन्नयनान्तेन 9- -9. A,B,T प्रचलन्ती 10- -10. W. Omits 11. A,B,T °णगु°

तदेवाऽऽह - नूनमिति त्रिभिः। यस्य रुद्रदुर्वासःप्रभृतेस्तपस्त्वस्ति, तस्य मन्युनिर्जयस्तु[1] नास्ति। नूनमिति निश्चये। यस्य तु गुरुशुक्रादेः ज्ञानमस्ति, न तस्य ज्ञानं सङ्गवर्जितम्; किन्तु फलसङ्गादियुक्तमेव। कश्चिद्ब्रह्मादिर्महान् तथाऽपि न तस्य कामनिर्जयोऽस्ति, दुहितुरेव पत्नीत्वेन गृहीतत्वादिति भावः। यः परतो व्यपाश्रयः परापेक्षैश्वर्याश्रयः इन्द्रादिः स किमीश्वरः ? अनीश्वर एवेति भावः।।२०।।

क्वचित् यमादौ[2] धर्मोऽस्ति तथाऽपि न भूतसौहृदमस्ति। त्यागः क्वचित् शिबिप्रभृतिष्वस्ति यस्त्यागः शिब्यादिगतः स न मुक्तिकारणं न मुक्तिहेतुः। पुंसः कार्तवीर्यादेः वीर्यमस्ति तथाऽपि तदजवेगेन कालवेगेन[3][4] निष्कृतं परिहृतन्तु न भवति। द्वितीयः भगवतोऽन्यः कश्चिदपि सनकादिभिरपि सत्त्वादिप्राकृतगुणसङ्गवर्जितो न भवति। "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः"(भ.गी.18-40) इत्युक्तरीत्या गुणत्रय निर्मुक्तस्य श्रीभगवदन्यस्य कस्याऽपि जन्तोरभावात् इति भावः।।२१।।

क्वचिन्मार्कण्डेयादौ चिरायुरस्ति न तु शीलं मङ्गलञ्चास्ति इन्द्रियदमनधर्मशीलत्वादिति[5] भावः। क्वचित्तदप्यस्तिचेत् आयुषः स्थैर्यं न वेद्यं न निश्चेयम्। कुत्रचिद्रुद्रादौ उभयं चिरायुष्यं शीलञ्चाऽस्ति[6], तथापि सरुद्रादिः अमङ्गलः अमङ्गलवेषः। श्रीभगवन्तं लक्ष्यीकृत्याऽऽह - यश्च कार्त्स्न्येन सद्गुणाश्रयनिरवद्य निरतिशय मङ्गलमूर्तिर्भगवान्, स तु मां न हि काङ्क्षते, स्वत एव पूर्णत्वात् इति भावः।।२२।।

एवमित्थं विमृश्य रमा लक्ष्मीः निरपेक्षमपि मुकुन्दमेव वरं पतिं वव्रे। तत्र हेतुं वदन् मुकुन्दं विशिनष्टि अव्यभिचारिभिः अनितरसाधारणैः मङ्गलगुणैर्निजैः स्वकीयैः निरुपाधिकैः आश्रयतः आश्रयणात् वरं सर्वोत्कृष्टम् अगुणाश्रयं सत्त्वादिप्राकृतगुणानाश्रयञ्च। निजैराश्रयतागुणाश्रयं इति पाठान्तरम्। तदा निजैरव्यभिचारिसद्गुणैराश्रयतयाऽप्राकृतगुणाश्रयं वरमुत्कृष्टमित्यर्थः। सर्वगुणैराश्रयणसौकर्यावहैः आश्रयणीयत्वेनाऽपेक्षितम् अत एव ईप्सितं आप्तुमिच्छाविषयं मुकुन्दं वरं वव्रे।।२३।।

उक्तवरणप्रकारमेवाऽऽह - तस्येति। तस्य मुकुन्दस्य अंसदेशे स्कन्धप्रदेशे कमनीयां नवकञ्जमालां निधाय तदनुग्रहं प्रतीक्षमाणा तूष्णीं तस्य निकटे तस्थौ। कथम्भूतां मालाम्? माद्यतां मधुपानमत्तानां मधुव्रतानां भ्रमराणां वरूथस्य समुदायस्य गिरोपघुष्टां ध्वनिताम्। कथम्भूता श्रीः[7]? सव्रीडहासेन विकसत् यन्नयनं तेन तस्य भगवत उरो वक्षः स्वधाम स्वाश्रयं याता तद्वक्षः स्वाश्रयत्वेन प्रतीक्षमाणा सतीत्यर्थः।।२४।।

---

1. A,B,T 'ग्रह' 2. A,B,T परशुरामादौ 3- -3. W.Omits 4. A,B,T 'मादिषु 5.W. Omits दमन 6. A,B,T 'ञ्चे 7. A,B,T लक्ष्मीः

विज० वक्त्रं समं स्तनद्वयञ्च दधती।।१७,१८।।

आत्मनः स्वस्य निर्दोषं गन्धर्वादिषु पदं स्थानं पतिलक्षणं स्थानं नाऽन्वविन्दतेत्यन्वयः।।१९।।

ननु पदमनुपलभ्य किं पुंश्चली जातेत्याशङ्क्यां श्लोकद्वयेन परिहरति - नूनमिति। यस्य तपोऽस्ति तस्य मन्युनिर्जयो नास्ति नूनं निश्चये। "नूनं तर्केऽर्थनिश्चये" तर्कनिश्चितयोर्नूनम् (वैज.को.8-7-22) इत्यभिधानात् इति तर्कयामि वा। " विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः शरीर शोषणं प्राहुस्तापसा स्तप उत्तमम्" इति अनेन ऋषितया नारदादयः प्रतिषिद्धाः। क्वचित्पुंसि ज्ञानमस्ति तस्य ज्ञानं सङ्गवर्जितं फलस्नेहरहितं न स्यात्। नूनमिति अत्राप्यनुकृष्यते अनेन बृहस्पत्यादयो निषिद्धाः। कश्चिद्ब्रह्मा तत्र महानस्ति तस्य ब्रह्मणः कामनिर्जयो नास्ति "प्रजापतिः स्वां दुहितरं अभ्यध्यायत्" इति श्रुतेः। " कस्मै देवाय हविषा विधेम" (श्वेता.उ.4-13) इति च यः परतो व्यपाश्रयः परमन्यमाश्रयत इति सः ईश्वरः किम्? नैव। अनेन रुद्रादिर्निवारितः।।२०।।

तर्हि दण्डपाणिः स्यादिति तत्राऽऽह धर्म इति। क्वचित् संयमिन्यां धर्मोऽस्ति तस्य धर्मस्य भूतेषु दया नास्ति, निरनुक्रोशाधिकार प्रवृत्तत्वात्। क्वचित्कस्मिंश्चित्पुंसि पुण्यलक्षणो धर्मोऽस्ति तस्य प्राणिषु सौहृदं दुर्लभमिति सामान्यनिषेधो वा। तत्र त्यजनञ्च अर्थिभ्यो देवतादिभ्यो वा। न्यायार्जितधनादिदानं त्यागः। तच्च मुक्तिकारणं न भवति भगवदर्पणबुद्ध्या अननुष्ठितत्वात्। हानोपादानात् विलक्षणत्यागाधिकारित्वात् वायुरपि मुक्तिकारणं न; "मोक्षदस्तु जनार्दनः" इति वचनाद्वा। अनेन वायुर्लक्ष्यते। क्वचित्पुंसो वीर्यं तापादि दुःखनिवारकमस्ति, तदजवेगनिष्कृतं न, कालचक्र विजयि न भवति अनेन चन्द्रो निवारितः "क्षीणः क्षीणः प्रविशति" इति वचनात्। गुणसङ्गवर्जितो द्वितीयो नहि हरिं विनेति शेषः।।२१।।

क्वचिद्वस्तुनि चिरायुरस्ति चेत् तस्य शीलमङ्गलं नहि चिरजीविवत् क्वचिद्वस्तुनि तच्छीलमप्यस्ति तर्ह्यायुषो न वेद्यम् आयुर्ज्ञानं दुश्शकमित्यर्थः। कुत्र च क्वाऽपि तत्र यस्मिन् पुंसि उभयमायुः शीलञ्च सोऽपि पुमानमङ्गलः गर्वितः, सुमङ्गलः कश्चन लोकविलक्षणो मुक्तिजातीयो मां काङ्क्षते यदि सोऽपि न भवतीति शेषः।।२२।।

एवमिन्द्रादीनपि विमृश्य दोषानुक्त्वारमा मुकुन्दं परं पदं वव्रे इत्यन्वयः। अव्यभिचारिणो नाऽतिव्याप्तास्सन्तः अव्याप्त्यसम्भवाख्यदोषरहिताः गुणा लक्षणानि च यस्य स तथा तं

निजाश्चैकाश्रयिणश्चैकस्मिन्नेव वर्तमानाश्च सन्तश्च तप आदिगुणां येषां ते तथा तेषां पुंसामाश्रयं निजत्वादेकाश्रयित्वं "निजमात्मीयनित्ययोः" (वैज.को. 6-4-9) इति तत्तत्सत्ताप्रदत्वेन तदाश्रयत्वं युक्तं भक्त्यादि सर्वगुणैरपेक्षितत्वं न त्वन्यथा सौशील्यादि गुणै र्वा का च काङ्क्षत इत्यस्यापवादमाह - निरपेक्षमिति। तर्हि न कश्चन तस्मिन्नादरं करोतीति तत्राऽऽह - ईप्सितमिति। "एष ब्रह्माऽतिवृद्धस्तपति दिनपतिश्चञ्चलो मातरिश्वा दिग्वासा नीलकण्ठस्त्रिदशपतिरसौ गर्वितः क्षीयतेऽब्जः। इत्थं देव्या विचिन्त्य भ्रमरकुल कलगीत शब्द प्रफुल्ला दत्ता माला मुरारेस्सुरतरुकुसुमालङ्कृता पातु युष्मान्" इति पुराणज्ञा व्याचक्षते।।२३।।

तस्य हरेरंसे मालां निवीय निधाय तस्थावित्यन्वयः। उशतीमिष्टसाधनीभूतां कान्तां वा व्रीडया सह वर्तमानः सव्रीडः स चाऽसौ हासः सव्रीडहासः तेन विकसितनयनेन स्वस्या धाम तस्य हरेः उरः पश्यन्तीति शेषः भीता शरीरकम्पोपेता। अयञ्च शृङ्गारविशेषः "अनाद्यनन्तकालञ्च विष्णुमेवाश्रिता रमा। अन्येषां ज्ञापनार्थाय दोषानुक्त्वेतरान् जहौ" (ब्राह्मे) इति वचनात्। अधुना हरेर्लक्ष्मी प्राप्तिर्नाऽपूर्वमिति[1] शङ्का परिहर्तव्या। स्वस्याः श्रियः इत्युत्तरश्लोकविशेषणसामर्थ्याच्च।।२४।।

[2]तस्याः श्रिय स्त्रिजगतो जनको जनन्या वक्षो निवास मकरोत्परमं विभूतेः।
श्रीः [3]स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतीं स्त्रिलोकान्।।२५।।

शङ्खतूर्यमृदङ्गानां वादित्राणां [4]च निस्स्वनः।
देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत्।।२६।।

ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम्।
ईडिरेऽवितथैर्मन्त्रै स्तल्लिङ्गैः पुष्पवर्षिणः।।२७।।

श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः।
शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम्।।२८।।

निस्सत्वा लोलुपा राजन् निरुद्योगा [5]हतत्विषः।
यदा चोपेक्षिता लक्ष्म्या बभूवु र्दैत्यदानवाः।।२९।।

1. A,B भे पू 2. M,Ma स्व 3. M,Ma स्वप्र 4. A,B,G,J,T पृथुस्स्वनः ; M,Ma पृथक्स्वनः
5. A.B.G.J.M,Ma,T गतत्रपाः

**अथाऽऽसी द्वारुणी देवी कन्या कमललोचना।**
**असुरा जगृहुस्तां वै हरेरनुमतेन ते।।३०।।**

**अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः।**
**उदतिष्ठन्महाराज पुरुषः परमाद्भुतः।।३१।।**

**दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः।**
**श्यामलस्तरुणस्स्रग्वी सर्वाभरणभूषितः।।३२।।**

**श्रीध०** भगवानपि त्रैलोक्याभिवृद्धये स्ववक्षः तस्याः स्थानं ददावित्याह - **तस्या** इति। विशिष्टा भूतयो विभवाः यस्यास्तस्याः त्रिजगतो जनन्याः श्रियः[1] परमं सुस्थिरं, [2]यत्र वक्षसि[2] ऐधयताऽवर्धयत्।। २५,२६।।

**अथेति**। तल्लिङ्गैः विष्णु प्रतिपादकैः अवितथैः यथार्थैः ।।२७ - २९।।

**अथेति** । वारुणी वरुणदैवत्यं यदन्नं तन्मयी सुरा।।३०,३१।।

**दीर्घेति**। दीर्घौ पीवरौ दोर्दण्डौ यस्य। कम्बुग्रीवः शङ्खनाभिरिव त्रिरेखा सुवृत्ता ग्रीवा यस्य।।३२।।

**वीर०** त्रिजगतो जनन्यास्तस्याः अखिलविभूत्याश्रयभूतायाः श्रियः, त्रिजगज्जनको भगवान् स्वं वक्ष एव परं निवासस्थानमकरोत्, यत्र वक्षसि स्थिता श्रीः सकरुणेन निरीक्षणेन स्वाः प्रजाः साधिपतीं स्त्रिलोकांश्च ऐधयत अवर्धयत्।।२५।।

तदा शङ्खादीनां वाद्यानां सस्त्रीणां देवानुगानां गन्धर्वादीनां नृत्यतां गायतां च पृथक्पृथक् महान् ध्वनिरभूत्।।२६।।

तदा ब्रह्मादयस्सर्वे विश्वस्य स्रष्टारः पुष्पाणि वर्षन्तः विभुं भगवन्तं तल्लिङ्गैः भगवद्गुणप्रतिपादकै रवितथैस्सत्यैः यथावत्स्थितार्थप्रतिपादकैः न त्वाऽऽरोपितगुणप्रतिपादकैरित्यर्थः। मन्त्रैरीडिरे तुष्टुवुः।।२७।।

देवाः सप्रजापतयः प्रजाश्चश्रिया विलोकिताः शीलादिगुणसम्पन्नाः परां निर्वृतिमानन्दं लेभिरे।।२८।।

दैत्या दानवाश्च यदा लक्ष्म्योपेक्षिताः तदैव हे राजन् निस्सत्त्वाः निर्बलाः अत एव निरुद्योगाः त्यक्तलज्जाः लोलुपाः विमोहशीलाः बभूवुः।।२९।।

अथ श्रिय उद्गमनानन्तरं वारुणी देवी वरुणदैवत्यं यत्तन्मयी सुराधिदेवता कन्या कमले इव लोचने[3] यस्याः सा आसीदुद्बभूव। तां च हरेरनुज्ञया ते असुरा जगृहुः।।३०।।

---

1. A. adds त्रिजगतो जनको हरिः 2- -2. B,H,J,V Omit 3. A,B,T add नेत्रे

अथ अमृतार्थिभिः काश्यपैर्देवासुरैः मथ्यमानादुदधेः हे राजन्! परमाद्भुतः पुरुषः उदतिष्ठदुद्बभूव।।३१।।

तं विशिनष्टि - दीर्घौ पीवरौ च दोर्दण्डौ भुजौ[1] यस्य कम्बुवच्छङ्खवत् त्रिरेखा वृत्ता च ग्रीवा यस्य, अरुणे ईक्षणे यस्य श्यामलः[2] मेघ इव श्यामः तरुणो युवा स्रग्वी वनमाली सर्वैराभरणैरलङ्कृतः।।३२।।

विज० ऐधयत अवर्धयत्।।२५।।

"काहले गोमुखे तूर्यदुन्दुभौ च प्रचक्षते" इति च।।२६।।

तल्लिङ्गैः श्रीलक्ष्मणोपेतैः श्रीसूक्ते रित्यर्थः।।२७ - २९।।

वारुणी सुराभिमानिनी देवता च ।।३०।।

काश्यपैर्देवासुरैः परममुत्तममद्भुत माश्चर्यमाहात्म्यं यस्य स तथा।।३१।।

कम्बुग्रीवः रेखात्रयाङ्कितगलः।।३२।।

पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः।
स्निग्ध[3]कुञ्चित कोशान्त स्सुभग स्सिंहविक्रमः।।३३।।

अमृता[4]पूर्णकलशं बिभ्रद्वलयभूषितः।
स वै भगवतः साक्षाद्विष्णोरंशांशसम्भवः।।३४।।

धन्वन्तरिरिति ख्यातः आयुर्वेददृगिज्यभाक्।
तमालोक्याऽसुरास्सर्वे कलशञ्चाऽमृता[5]भृतम्।।३५।।

लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽऽहरन्।
नीयमानेसुरैस्तस्मिन् कलशेऽमृतभाजने।।३६।।

विषण्णमनसो देवाः हरिं शरण[6]मभ्ययुः।
इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत्।।
मा खिद्यता[7]मृतार्थं वः साधयिष्ये स्वमायया।
*इत्युक्त्वा सान्त्वयन् देवान् तत्रैवाऽन्तर्दधे हरिः।।३७।।

---

1.W. Omits भुजौ 2. A,B,T Omit श्यामलः 3. M,Maनील 4. M,Ma 'तस्य पू' 5. M,Ma 'ह' 6. A,B,G,J,M,Ma, T 'मापयुः 7. A,B,G,J,M,Ma, T 'त मिथोऽर्थं * This verse is not found in A,B,G,J,M,Ma, T Edns.

मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम्।
अहं पूर्व महं पूर्वं न त्वं न त्वमिति प्रभो।।३८।।

देवाः [1]स्वं भागमर्हन्ति ये तुल्यायासहेतवः।
सत्रयाग [2]इव ह्यस्मिन्नेष धर्मः सनातनः।।३९।।

इति स्वान्[3]प्रत्यषेधन्वै दैतेया जातमत्सराः।
दुर्बलाः प्रबलान् राजन् गृहीतकलशान्मुहुः।।४०।।

**श्रीध० पीतेति** । स्निग्धः कुञ्चितश्च केशानामन्तो यस्य।।३३,३४।।

**धन्वन्तरिरिति**। इज्यभाक् यज्ञभाग भोक्ता। अमृतेन आभृतं परिपूर्णम्।।३५,३६।।

**विषण्णेति**।[4] दैत्यानां परस्परं कलहोत्पादनेन योगमायया च मोहिन्या वोऽर्थं साधयिष्यामि, अतो माखिद्यतेत्याहेति शेषः।।३७।।

तदेवऽऽह-**मिथ** इति। तर्षः कामः, तद्युक्तानि चेतांसि येषाम्। इत्येवं समबलानां कलिरभूत् ।।३८।।

दुर्बलानान्तु आक्रोशप्रकारमाह - **देवा** इति द्वाभ्याम्। ये देवाः [5-]तुल्य आयासे[-5] हेतवस्साधकाः। तुल्य आयासो हेतुश्च धनादिर्येषामिति वा। सत्रयागे यथा सर्वेषां समं फलं तद्वत्। तथा च श्रुतिः। "ऋद्धिकामा स्सत्रमासीरन्" इति। "ये यजमानास्ते ऋत्विजः" इति च।।३९,४०।।

**वीर० पीते** वाससी यस्य बृहद्विपुल मुरो वक्षो यस्य सुमृष्टे निर्णिक्ते मणिमये कुण्डल यस्य, नीलः कुञ्चितः कुटिलः केशानामन्तोऽग्रभागो यस्य सः सुभगः सुकुमारः सर्वावयवसुन्दरो वा, सिंहस्येव विक्रमः पादविन्यासो यस्य।।३३।।

अमृतेन पूर्णं कलशं बिभ्राणः वलयैः अलङ्कृतः। कोऽसावित्यत्राऽऽह - [6]स वै इति। स वै साक्षाद्भगवतो हरेरंशांशेन सम्भवो यस्य।।३४।।

स तु धन्वन्तरिरिति प्रसिद्धः आयुर्वेदस्य द्रष्टा इज्यभाग् यागभोक्ता। तममृतकलशं बिभ्रतं धन्वन्तरिमालोक्य सर्वेऽसुराः सर्ववस्तूनि मथनादुत्पन्नानि लिप्सन्तः, अमृतेन आभृतं सम्पूर्णं कलशं तरसा बलेन, आशु वा [7]आहरन् [8-]आहृतवन्तः[-8]। अमृतभाजने तस्मिन् कलशे दैत्यैर्नीयमाने हृते सति।।३५,३६।।

---

1. M,Ma स्व° 2. A,B,G,J,M,Ma,T ह्येतस्मि° 3. H,V °ति° 4. A,B,J, add मिथः 5- -5. A,B,J तुल्येनाऽऽयासेन 6. W. Omits स वै 7. W. अ° 8- -8. W. Omits

देवा विषण्णमनसः खिन्नचित्ता हरिं शरणमाययुः। इत्थं तेषां देवानां दैन्यमालोक्य भृत्यानां[1] काममिष्टं अभीष्टं[2] करोतीति तथा। भगवान्मिथो दैत्यानां परस्परं कलहोत्पादनेन योगमायया मोहिन्या वो युष्माकमर्थं साधयिष्यामि, अतो माखिद्यतेत्याह - इतीत्थमुक्त्वा देवान् सान्त्वयन् हरिः तत्रैवान्तर्दधे।।३७।।

मिथः कलहमेवाऽऽह - मिथ इति। मिथः[3] तदर्थेऽमृतनिमित्ते तर्षः कामः तद्युक्तानि चेतांसि येषां तेषां दैत्यानां परस्परं[4] कलिः कलहो बभूव। कलहप्रकारमाह[5] - अहमिति। हे प्रभो राजन्! अहं पूर्वमह मेव पूर्वं पास्यामि न त्वमित्यादि, एवं कलिरभूदित्यर्थः।।३८।।

तत्र दुर्बलानां दैत्यानामाक्रोशप्रकार माह - देवा इति। देवा अपि स्वममृतभागमर्हन्ति; कुतः? यतो येऽपि देवास्तुल्याया स हेतवस्तुल्येनायासेन हेतवस्साधकाः यथा सत्रयागे -"य एव यजमानाः त एव ऋत्विजः" इति यजमानाभिन्नऋत्विक्कर्तृके बहुयजमानके च सर्वेषां समं फलं तद्वदयमेव सनातनो धर्मः।।३९।।

इतीत्थं हे राजन्! स्वान् गृहीतकलशान् प्रबलान् दैत्यान् दुर्बला दैतेया जातमत्सरास्सन्तो मुहुर्मुहुः प्रत्यषेधन् न्यवारयन्।।४०।।

**विज०** नीलकुञ्चितकेशान्तः नीलकुञ्चितकेशस्वभावः "अन्तस्त्ववसिते मृत्यौ स्वभावे परमात्मनि" (वैज.को. 6-5-5) इति।।३३।।

अमृतस्येति षष्ठी तृतीयार्थे, अमृतेन पूर्णं कलशमित्यर्थः।।३४।।

इज्यभाक् अमृतलक्षणमाहृतमाहारो यस्मिन्स तथा - "तेषां सत्याञ्चालनार्थं हरिर्धन्वन्तरिर्विभुः। समर्थोऽप्यसुराणाञ्च स्वहस्तादमुचत्सुधाम्" (ब्राह्मे) इति वचनात्। दैत्यैः हरिहस्तात् अमृतं हृतं न त्वशक्तत्वादिति दर्शनरहस्यम्।।३५-३७।।

तर्षचेतसाम् तृष्णायुक्तमनसाम्।।३८।।

यथा सत्रयागे सर्वेषां समानं फलम्।।३९,४०।।

**एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः।**
**योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम्।।४१।।**

---

1. A,B,T भक्तानां 2. W. Omits अभीष्टं 3. W. Omits मिथः 4. A,B,T मिथः 5. A,B,T मेवाऽऽह।

**प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम्।**
**समानकर्णाभरणं सुकपोलोन्नसाऽऽननम्।।४२।।**

**नवयौवननिर्वृत्त[1]स्तनभारकृशोदरम्।**
**मुखामोदानुरक्तालि [2]झङ्कारोद्विग्नलोचनम्।।४३।।**

**बिभ्रत् स्वकेशभारेण मालामुत्फुल्लमल्लिकाम्।**
**सुग्रीवकण्ठाभरणं सु[3]भुजाङ्गदभूषितम्।।४४।।**

**विरजा[4]म्बर [5-]संवीत नितम्ब द्वी[-5]पशोभया।**
**काञ्च्या [6]प्रविलसद्वल्गु [7]चलच्चरणनूपुरम् ।।४५।।**

**सव्रीडस्मितविक्षिप्त भ्रूविलासावलोकनैः।**
**दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः।।४६।। ***

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे भगवन्मायोपलम्भनं नाम अष्टमोऽध्यायः।।८।।

**श्रीध०** तद्रूपं वर्णयति **प्रेक्षणीयेति** पञ्चभिः प्रेक्षणीयमुत्पलमिव श्यामम्। सर्वेष्ववयवेषु सुन्दरम्। समानयोः कर्णयोःआभरणे यस्मिन् , सुकपोलञ्च तत् उत्कृष्टनासिकञ्च आनने[8] यस्मिन् ।।४१।४२।।

**नवेति**। नवयौ[9]वनेन निर्वृत्तयोः [10]प्रवृद्धयोः स्तनयोः भारे[11]णैव कृशमुदरं यस्मिन् [12-]मुखस्यामोदः सौरभः तस्मिन् अनुरक्तानाम् अलीनाम् हुङ्कारेण उद्विग्ने लोचने यस्मि[-12]न्।।४३।।

**बिभ्रदिति**। सुष्ठु ग्रीवा यस्मिन् कण्ठे आभरणं यस्मिन् तच्च तच्च। शोभना ग्रीवा येन तत्कण्ठाभरणं यस्मिन्निति वा। सुभुजयोः अङ्गदाभ्यां भूषितम्।।४४।।

**विरजेति**। विरजाम्बरेण [13-]निर्मलवाससा[-13] संवीतो नितम्ब एव द्वीपो विशालत्वात्तत्र शोभा यस्यास्तया काञ्च्या [14-]कषेणोल्लसत्[-14] वल्गु यथा भवत्येवं चलतोश्चरणयोर्नूपुरे यस्मिन्।।४५।।

**सव्रीडेति**। सव्रीडेन स्मितेन सह विक्षिप्ता कम्पिता या भ्रूः तस्या विलासेन सह यान्यव[15]लोकनानि तैः, दैत्ययूथपानां चेतस्सु[16] मुहुः काममुद्दीपयन्।।४६।।

---

1. M,Ma निष्पन्न 2.H,V,W हु° 3. M,Ma भूषणम्। 4. W. जोऽम्ब° 5- -5. M,Ma तं चित्रं वध्वीय 6. H,V कचोल्लस° 7. M,Ma स्फुटञ्च° *अनेन श्लोकेन विजयध्वजरीत्या अष्टमोऽध्यायः न परिसमाप्यते परन्तु अनुवर्तते। 8. A,B,J °नं 9.A B,J °वननि° 10. A,B,J Omit प्रवृद्धयोः 11. A,B,J °णे च 12- -12. A,B,J Omit 13- -13. B,H,J,V Omit 14- -14. A,B,J प्रकर्षेण विलसत् 15. A,B,J °किता°16. H,V add मुहुः

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टमोऽध्यायः ।।८।।

**वीर०** एतस्मिन् समये सर्वोपायविद्भगवान् ईश्वरो विष्णुः परमाद्भुतं केनाप्यदृष्टपूर्वमनिर्देश्यं देवादि[1]स्त्रीसजातीयत्वेन निर्देष्टुमशक्यं योषिद्रूपं दधार।।४१।।

तद्रूपं वर्णयति पञ्चभिः। प्रेक्षणीयमुत्पल[2]मिव श्यामं सर्वेष्ववयवेषु सुन्दरम् , समानयोः कर्णयोः आभरणे यस्मिन् सुकपोलञ्च तदुन्नतनासिकञ्च आननञ्च यस्मिन्।।४२।।

नवयौवनेन निर्वृत्तयोः प्रवृत्त्योः वर्तुलयोश्च स्तनयोर्भारेण कृशमुदरं यस्मिन् , मुखस्यामोदेन अनुरक्तानामलीनां झङ्कारेणोद्विग्ने चञ्चले लोचने यस्मिन्।।४३।।

उत्फुल्लानि मल्लिकाकुसुमानि यस्यां तां मालां स्वकेशभारेण केशपाशेन बिभ्राणं शोभना ग्रीवा यस्मिन् तत् कण्ठे आभरणानि च यस्मिन् तच्च शोभनयोः भुजयोः अङ्गदाभ्यां भूषितम्।।४४।।

विरजोऽम्बरेण संवीतः नितम्ब एव द्वीपः विशालत्वात् तद्वच्छोभा यस्याः तथा काञ्च्या प्रकर्षेण विलसत् वल्गु सन्दरं यथा भवति, एवं [3]चलतोः चरणयोः नूपुरे यस्मिन्।।४५।।

सव्रीडस्मितेन सह विक्षिप्ता कम्पिता या भ्रूः तस्याः विलासेन सह यान्यवलोकनानि तैः दैत्ययूथपानां चेतस्सु मुहुर्मुहुः काममुद्दीपयत्।।४६।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टमोऽध्यायः।।८।।

**विज०** सुकपोलोन्नतनासिकया युक्तमाननं यस्य तत्तथा।।४१,४२।।

नवयौवनेन निष्पन्दतोर्निश्चलतोः स्तनयोर्भारेण कृशं तनुतरं उदरं यस्य तत्तथा। मुखपरिमलेऽनुरक्तानां निरतानां अलीनां भृङ्गाणां हुङ्कारेण झङ्कारेण उद्विग्ने भ्रान्ते लोचने यस्य तत्तथा, सुष्ठु शोभना ग्रीवा यस्य तत्तथा शोभनं कण्ठाभरणं यस्य तत्तथा। शोभनैः भुजाङ्गदैः विभूषितम्।।४३,४४।।

---

1. A,B,T Omit स्त्री 2. A,B,T 'वत् । 3. A.B.T चञ्चलयोः

वधूनां विद्यमानानां वध्वीया तया शोभया चित्रं काञ्च्या च चित्रं, प्रविलसच्छोभमानं वा यथा वल्गु कर्णरमणीयं तथा स्फुटती शब्दंकुर्वती चरणनूपुरे यस्य तत्तथा।।४५।।

सव्रीडस्मितेन विक्षिप्तैः भ्रूविलासैः युक्तैरवलोकनैः उद्दीपयत् ज्वलयत्।।४६।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे अष्टमोऽध्यायः।।८।।

विजयध्वजरीत्या अत्र अध्यायसमाप्तिर्न विद्यते।।

०००००००

# नवमोऽध्यायः

**(विजयध्वजरीत्या अष्टमोऽध्यायः अनुवर्तते)**

**श्रीशुक उवाच**

[1-]अन्योन्यतस्सुधा[-1] पात्रं हरन्तस्त्यक्तसौहृदाः।
क्षिपन्तो दस्युधर्मेण[2-] [-2]ह्यायान्तीं ददृशुः स्त्रियम्।।१।।

अहो रूपं महो धाम [3]ह्यहो अस्या नवं वयः।
इति ते ताम[4]नुद्रुत्य पप्रच्छुर्जातहृच्छयाः।।२।।

का त्वं कञ्जपलाशाक्षि! कुतो वा किं चिकीर्षसि।
कस्याऽसि वद वामोरु! मथ्नन्तीव मनांसि नः।।३।।

न वयं त्वाऽमरे दैत्यैः सिद्धगन्धर्वचारणैः।
[5-]नाऽस्पृष्टपूर्वां[-5] जानीमो [6]योगेशैश्च कुतो नृभिः।।४।।

नूनं त्वं विधिना [7]सुभ्रु! प्रेषिताऽसि शरीरिणाम्।
सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम्।।५।।

सा त्वं नः स्पर्धमानानामेकवस्तुनि [8]मानिनि!
ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे।।६।।

वयं [9]काश्यप दायादा भ्रातरः कृतपौरुषाः।
विभजस्व यथान्यायं नैव भेदो यथा भवेत्।।७।।

इत्युपामन्त्रितो दैत्यैः मायायोषिद्वपुर्हरिः।
प्रहस्य रुचिरापाङ्गैः निरीक्षन्निदमब्रवीत्।।८।।

**श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका**

नवमे मोहितै दैत्यै रर्पितेऽमृतभाजने। तद्वञ्चनेन देवेभ्योऽमृतं दत्तं तयर्यते।।*

---

1- -1. A,B,G,J,T ते न्योन्यतोऽसुरा· पात्रं, M,Ma तेऽन्योन्य तस्सुभदापात्र 2- - 2 A,B,G,J,T धर्माण आ", धर्मेण आ" 3. A,B,G,J,M,Ma,T अहो 4 A,B,G,J,M,Ma,T मभि" 5- -5 स्पृष्ट पूर्वान्तु 6. A,B,G,J,M,Ma,T लोके" 7. A,B,G,J,T सुभ्रूः 8. M,Ma भामिनि 9. A,B,G,J,MaT, क" * H,V,add - इयञ्च अध्यायार्थ सूचिका कारिका केषुचित् व्याख्यान ग्रन्थेषु अन्यथा वर्तते तथाहि; "विमोह्य नवमे दैत्यान्, स्त्रीतन्वाऽपाययन्सुरान्। सुधां तमश्शिरश्छित्वारक्ष देवानितीर्यते"।

**अहो इति**। अहोरूपं सौन्दर्यं, धाम द्युतिरिति [1] वदन्तः का त्वमित्यादिना [2] पप्रच्छुः।।१,२।।

**कात्वमिति**। मथ्नन्तीव क्षोभयन्तीव ।।३।।

कस्याऽसी त्ययुक्त[3]पृष्ट मस्माभिः, यत स्त्वं न केन चिद्धुक्तपूर्वेत्याहुः - **नेति** [4]द्वाभ्याम्। त्वा त्वाम् अमरादिभि रस्पृष्टपूर्वां न जानीम इति [5]न अपितु जानीम एव।।४।।

[6]अस्माकमिदं त्वद्दर्शनन्तु ईश्वरेणैव सम्पादितमित्याहुः - **नूनमिति**। सर्वेन्द्रियाणाञ्च मनसश्च प्रीतिं विधातुं [7]विधात्रा सघृणेन [8]किं प्रेषिताऽसि? किं वा यदृच्छयै [9]वाऽऽगताऽसि! नैवम् , [10]दैवेन नूनं प्रेषितैवेत्यर्थः।।५,६।।

**वयमिति**। भेदो विग्रहो यथा न भवेत्तथा।।७,८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं विधं रूपं बिभ्रतीं आयान्तीं तां स्त्रियमन्योन्यं त्यक्तसौहृदाः अत एव क्षिपन्तः सुधापात्रं चौर्यधर्मेण हरन्तः [11]ते दैत्या ददृशुः।।१।।

दृष्ट्वा च अहो रूपं सौन्दर्यम् , अहो धाम द्युतिः, अहो अस्या योषितो नवं वयः इति वदन्तस्ते दैत्याः तां योषित मभिद्रुत्य अभिमुख मागत्य जात हृच्छयाः सञ्जातकामाः पप्रच्छुः।।२।।

प्रश्नप्रकारमेवाऽऽह - **का त्वम्** इत्यादिना। हे कञ्जपलाशाक्षि! का त्वम्? किञ्जातीया? कुत आगता? त्वं किं चिकीर्षसि कर्तुं मिच्छसि? कस्याऽसि कस्य सम्बन्धिन्यसि? वद, हे वामोरु! नोऽस्माकं मनांसि मथ्नन्तीव क्षोभयन्तीव वर्तसे।।३।।

कस्याऽसीत्ययुक्तमुक्तमस्माभिः, यत स्त्वं न केनचित् स्पृष्टपूर्वा इत्यूचुः - **नेति**। त्वा ममरादिभिर-स्पृष्टपूर्वां न जानीम इति न, किन्तु जानीम एव। अमरादिभिरेवास्पृष्टपूर्वा, कुतो नृभिः स्पृष्टपूर्वा [12]भवेरित्यर्थः।।४।।

आस्तामिदं त्वद्दर्शनन्तु ईश्वरेणैव कारितमित्याहुः - **नूनमिति**। हे सुभ्रु! शरीरिणामस्माकं सर्वेन्द्रियाणां प्रीतिं विधातुं [13]सघृणेन सकृपेण विधिना ईश्वरेण त्वं प्रेषिता किम्? नूनं न यदृच्छया आगताऽसि, [14]किन्तु नूनं दैवेनैव [15]प्रेषिताऽसि इत्यर्थः।।५।।

---

1. A, adds सम्भ्रमेण 2 A,B,J "दि प" 3. A,B,J उक्तं 4. H,V,Omit द्वाभ्याम् 5 H.V.किन्तु 6. A,B,J आस्ता मिदं 7. A,B,J Omit विधाता 8. A,B,J Omit कि 9. B,J, Omit एव 10. A,B,J Omit दैवेन 11. W Omits ते 12. W Omits इत्यर्थः 13. W Omits सघृणेन 14. A,B,T Omit किन्तु 15. W "तेत्यर्थः

हे मानिनि! अत्रैकस्मिन्वस्तुनि अमृतनिमित्ते स्पर्धमानानां परस्पर मभिभवतां बद्धवैराणां ज्ञातीना मस्माकं हे सुमध्यमे सं विधत्स्व सन्धिं कुरु, सम्यक् विभजस्वेति वा।।६।।

[1]कश्यपस्य दायादाः पुत्राः भ्रातरश्च अधुना कृतं पौरुषं कलहनिमित्तं यै स्ते वयमतो यथान्यायं अमृतं विभजस्व, [2]भेदः कलहो यथा न भवेत् [3]तथा विभजस्व।।७।।

दैत्यैरित्थमुपामन्त्रितश्चोदितः [4]प्रमोदितः श्लाघितोऽलभ्यलाभभूतो[4] माया योषिद्वपुः आत्मीय सङ्कल्पोपात्त स्त्रीवपु र्हरिः प्रहस्य सुन्दरै रपाङ्गैः निरीक्ष न्निरीक्षमाणः इदं वक्ष्यमाणमब्रवीत्।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

त्वा त्वाम् ।।१-४।।

विधिना विरिञ्चेन ।।५।।

शं विधत्स्व, शंविधानं मनस्सन्तोषं कुरु।।६,७।।

मायया इच्छया अङ्गीकृत स्त्रीदेहः।।८।।

### श्री भगवानुवाच

[5]कथं काश्यपदायादाः पुंश्चल्यां[6] मयि सङ्गताः।
विश्वासं पण्डिता[7] जातु कामिनीषु न यान्ति[8] हि।।९।।

सालावृकाणां स्त्रीणाञ्च स्वैरिणीनां सुरद्विषः।
सख्यान्याहु रनित्यानि नूत्नं नूत्नं विचिन्वताम्।।१०।।

### श्रीशुक उवाच

इति ते क्ष्वेलितै स्तस्या आश्वस्तमनसोऽसुराः।
जहसुर्भावगम्भीरं ददुश्चाऽमृतभाजनम्।।११।।

ततो गृहीत्वाऽमृतभाजनं हरि र्बभाष ईषत्स्मित शोभया गिरा।
यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम्।।१२।।

इत्यभिव्याहृतं तस्या आकर्ण्याऽसुरयूथपाः[10]।
अप्रमाणविद स्तस्या स्तत्तथेत्यन्वमंसत।।१३।।

---

1. W का" 2. A,B,T Omit भेद· 3. A,B,T, Omit विभजस्व 4- -4. Omits 5. A,B,G,J,M,Ma,T क" 6. Ma,M "ल्यामपि 7. A,B,G,J,T, "तो 8. A,B,G,J,T याति 9. M,Ma "जंत्सु" 10 A,B,G,J,M,Ma,T पुङ्गवा·

**अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम्।**
**दत्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः।।१४।।**

**यथोपजोषं वासांसि परिधायाऽहतानि ते।**
**कुशेषु प्राविशन्सर्वे प्राक्कूलेष्वभिभूषिताः[1]।।१५।।**

**प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च।**
**धूपामोदित शालायां जुष्टायामाज्यदीपकैः[2]।।१६।।**

**श्रीध० कथमिति**। सङ्गता अनुसृताः।।९।।

**सालावृकाणामिति**। हे सुरद्विषः।।१०।।

**इतीति**। भावेन केनाप्यभिप्रायेण गम्भीरं यथा भवत्येवं जहसुः।।११।।

**तत** इति। ईषत्स्मितेन शोभा यस्या स्तया मया कृतं साधु वा असाधु यद्यभ्युपेतं[3-] अङ्गीकृतं[-3] तर्हि विभजे।।१२।।

**इतीति**। असुरयूथपाः[4] दैत्यश्रेष्ठाः प्रमाण मियत्ता मजानन्तः।।१३,१४।।

**यथेति**। यथोपजोषं यथाप्रीति अहतस्य लक्षणम् "अहतं यन्त्रनिर्मुक्तं मुक्तं वासः स्वयम्भुवा। शस्तं तच्छुभकार्येषु[5- -5] तावन्मात्रेण सर्वदा" इति। प्रागग्रेषु कुशेषु विविशुः।।१५।।

**प्राङ्मुखेति**। धूपै रामोदितायां सुरभीकृतायां शालायाम्।।१६।।

**वीर०** तदेवाऽऽह - कथमिति। हे काश्यपदायादाः[6]। पुंश्चल्यां मयि कथं सङ्गताः अनुसृताः हि यस्मात् पण्डितः कदाचिदपि कामिनीषु पुंश्चलीषु विश्वासं न याति, न प्राप्नोति न कुरुते इत्यर्थः।।९।।

हे सुरद्विषः! सालावृक्राणां स्वैरिणीनां स्त्रीणाञ्च सख्यान्यनित्यान्याहुः। अनित्यत्वे हेतुं वदन् सालावृकान् स्त्रीश्च विशिनष्टि - नवं नवं विचिन्वताम् अन्वेषताम्।।१०।।

इतीत्थं तस्या मोहिन्याः क्ष्वेल्तिैः परिहासवचनैः विश्वस्तं मनो येषान्तेऽसुराः भावेन केनाऽप्यभिप्रायेण गम्भीरं यथा भवत्येवं जहसुः हसितवन्तः, अमृत पात्रञ्च ददुः।।११।।

ततोऽमृतभाजनं गृहीत्वा योषिद्रूपो हरि रीषत्स्मितेन शोभा यस्या स्तया गिरा बभाषे। तदेवाऽऽह -

1. A,B,G,J,M,Ma,T प्रागग्रेष्वभि 2 A,B,G,J,M,Ma,T "या माल्या" 3- -3, A,B,J "ताङ्गीकुरुत 4 A,B,J पुङ्गवाः
5- -5. A,B,J तन्माङ्गलिक्येषु 6. A,B,T क"

यदीति। कचित् साध्वसाधु वा मया कृतं यद्यभ्युपेतं युष्माभिरङ्गीकृतं स्यात् तर्हीमां सुधां वो युष्मभ्यं विभजे।।१२।।

इतीत्थं तस्या मोहिन्या अभिव्याहृतं वाक्य माकर्ण्य असुरश्रेष्ठाः तस्या अप्रमाणविदः प्रमाणं तद्वाक्यनिश्चयः,[1] तमजानन्तः तथेति यथेच्छं कुर्विति अन्वमंसत अनुजज्ञिरे।।१३।।

अतः तस्या अनुज्ञया उपोष्य कृतं स्नानं यैस्तेऽसुराः सुराश्च हविषा चरुणा अनलमग्निं हुत्वा विप्रेभ्यो भूतेभ्योऽन्येभ्यश्च गाः गवादीनि यथायोग्यं दत्वा द्विजैः कृतं कारितं स्वत्स्ययनं मङ्गलाचरणं येषाम्।।१४।।

ते देवा असुराश्च यथोपजोषं यथाप्रीति अहतानि नूतनानि सद्योयन्त्राग्निर्मुक्तानि वस्त्राणि परिधाय [2]वसित्वा अभितो भूषिताः सर्वे प्राक्कूलेषु प्रागग्रेषु कुशेषु सर्वे प्राविशन् उपविविशुः।।१५।।

ततो धूपै रामोदितायां माल्यै र्दीपैश्च जुष्टायामलङ्कृतायां दीपितायाञ्च शालायां [3-]प्रागग्रेषु दर्भेषु[-3] [4-]पूर्वाभि मुखेषु[-4] सुरासुरेषु उपविष्टेषु सत्सु।।१६।।

**विज०** पुंश्चल्यां पुंश्चली[5]शीलगुणवत्याम्।।९।।

नूत्नम् नूतनम्।।१०।।

क्ष्वेलितैः छलमिश्रवचनैः।।११।।

अभ्युपेतमङ्गीकृतम्।।१२।।

प्रमाणमियत्ता।।१३-१६।।

**तस्यां नरेन्द्रकरभो[6]रुरुशद्दुकूल श्रोणीतटालसगतिर्मदविह्वलाक्षी।**<br>
**सा कूजती कनकनूपुरशिञ्जितेन कुम्भस्तनी कलशपाणिरथाऽऽविवेश।।१७।।**

**तां श्री[7]सखीं कनककुण्डल चारुकर्ण नासा कपोलवदनां परदेवताख्यात्।**<br>
**संवीक्ष्य सम्मुमुहु [8]रुत्स्मित [9]वीक्षितेन देवासुरा पविगलितस्तनपट्टिकान्ताम्।।१८।।**

**असुराणां सुधादानं सर्पाणामिव दुर्नयम्।**<br>
**मत्वा जातिनृशंसानां न [10]तां व्यभजदच्युतः।।१९।।**

1. A,B,T add निर्णयः 2. W. Omits वसित्वा 3- -3 A,B,T Omit 4- -4. A Omis 5. A. Omits शील 6. M,Ma रुरु" 7. M,Ma "मु" 8. H,V,"रुद्धय, W. रुत्समय 9 A,B,G,J,M,MaT वीक्षणेन 10. M,Ma तान्

**कल्पयित्वा पृथक्पङ्क्ती रुभयेषां जगत्पतिः।**
**तां श्चोपवेशयामास स्वासु[1] स्वासु च पङ्क्तिषु।।२०।।**

**दैत्यान्गृहीत कलशो वञ्चयन्नुपसञ्चरैः।**
**दूरस्थान्पाययामास जरा[2-]मृत्युहरां सुधाम्[-2]।।२१।।**

**ते पालयन्त स्समय मसुरा [3]स्तत्कृतं नृप।**
**तूष्णी मास न्कृतस्नेहाः स्त्रीविवादजुगुप्सया।।२२।।**

**तस्यां कृतातिप्रणयाः प्रणयापाय कातराः।**
**बहुमानेन चाऽऽबद्धाः नोचुः किञ्चिन विप्रियम्।।२३।।**

**देवलिङ्ग प्रतिच्छन्नः स्वर्भानु र्देव संसदि।**
**[4]प्रविष्टस्सोममपि बञ्चन्द्रार्काभ्याञ्च सूचितः।।२४।।**

**श्रीध०** [5-]अथ तस्यां शालायां[-5] हे नरेन्द्र! सा कलशपणि राविवेश। कथम्भूता? "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" (अम.को.2-341) इत्यमरः। करभ सदृशौ सुवृत्तावूरु यस्या स्सा उशत् कमनीयं दुकूलं यस्मिंस्तेन श्रोणीतटेन। विशालयाश्रोण्या अलसा मन्दा गतिर्यस्यास्सा। पाठान्तरे करभसदृशयोः ऊर्वोः लसत् दुकूलं यस्यास्सा चाऽसौ श्रोणीतटेनलसगतिश्च। मदेन विह्वले अक्षिणी यस्याः ।।१७।।

**तामिति**। तां श्रिय स्सखीं संवीक्ष्य [6-]देवाश्चाऽसुराश्च[-6] सम्मुमुहुः। कथम्भूताम्? कनकमये कुण्डले यस्या स्सा चाऽसौ चारवः कर्णादयो यस्या स्सा च ताम्। विगलितः [7]विस्रस्तः स्तनपट्टिकाया अन्तो यस्याः।।१८।।

एवं तान्मोहयित्वा यत्कृतवां स्तदाह - **असुराणामिति** त्रिभिः असुराणां सुधादानं सर्पाणां क्षीरदान मिव दुर्नय मन्याय्यं मत्वा तां सुधां तेभ्यो न व्यभजत्। अयं भावः - दैत्यै र्मदीयं साध्वसाधु वा सर्व मनुमतमेव । अतो मद्भक्तान्देवानेव सुधां पाययिष्यामि। किञ्च तै र्यथान्यायं विभजस्वेत्युक्तम् न चैतेभ्यो जात्यैव क्रूरेभ्यो दानं न्याय्यम्। अतस्तेभ्यः [8]सुधां न ददामीति।।१९।।

1. A,B,G,H,T,V स्वेषु स्वेषु 2- -2. M,Ma हरं सुरान् 3. A,B,G,J,M,Ma,T "स्स्वकृतं 4. M,Ma प्रविश्य सो"
5- -5. H,V Omit 6- -6. A,B,J देवासुरा. 7. A,B,J Omit वि 8. A,B,G दद्या"

**कल्पयित्वेति।** पङ्क्तीः पृथग्विविक्ताः कल्पयित्वा विधाय तासु पङ्क्तिषु स्वेषु स्वेषु तत्तत्सजातीयेषु[1] तांश्चाऽसुरानपि प्रतारणार्थमेव उपवेशयामास।।२०।।

**दैत्यानिति।** उपसञ्चरैः बहुमान प्रियवाक्यादिना तानतिक्रम्याऽतिक्रम्य गमनैः दूरस्थानपि देवानेव[2]।।२१।।

**त इति।** तथा कृतः स्नेहो येषु। स्त्रिया सह विवादस्य जुगुप्सया।।२२।।

**तस्यामिति।** कृतोऽतिप्रणयः स्नेहो यैः। प्रणयापायेन कातराभीताः। एते तावत्कृपणाः पूर्वं [3]किञ्चित्पिबन्तु, यूयन्तु धीराः क्षणं प्रतीक्षध्वमित्यादि बहुमानेन आबद्धा नियन्त्रिताः। समयपालनादिभिः षड्भिरेतैः कारणै अप्रियं किञ्चिदपि नोचुः, किन्तु तूष्णीमासन्।।२३।।

**देवेति।** देवपङ्क्ताचन्द्रार्कयो र्मध्ये प्रविष्टः सोम ममृत मपिबत्।।२४।।

**वीर०** अथ तस्यां शालायां हे नरेन्द्र! अमृतकलशः[4] पाणौ यस्याः सा मोहिनी आविवेश। कथम्भूता? "करस्य करभो बहिः" (अम.को.2-341) करभसदृशौ सुवृत्तौ ऊरू यस्या स्सा। उशत् कमनीयं दुकूलं यस्मिं स्तेन श्रोणीतटेन विशालया श्रोण्या अलसा मन्दा गति र्यस्या स्सा। पाठान्तरे करभ सदृशयो रूर्वोः लसद्दुकूलं यस्या स्साचाऽसौ श्रोणीतटेनाऽलसा गति र्यस्या स्सा च, मदेन विह्वले अक्षिणी यस्यास्सा, कनकनूपुराणां शिञ्जितेन कूजती ध्वनन्ती, कुम्भा विव स्तनौ यस्या स्सा।।१७।।

तां श्रीसखीं श्रियमिव स्थितां श्री सहायिनीं वा भगवद्रूपत्वात्। कनकमयो कुण्डले यस्या स्साचाऽसौ, चारवः कर्णादयो यस्या स्साचताम्, विगलितो विस्त्रस्तः स्तनपट्टिकाया अन्तो यस्या स्तां परदेवताख्यां परदेवतारूपां तां संवीक्ष्य देवासुरा स्तस्या उत्स्मय [5]वीक्षितेन सास्मित[-5] वीक्षणेन सम्मुमुहुः।।१८।।

एवं तान्मोहयित्वा यत्कृतवां स्तदाह - **असुराणामिति** त्रिभिः। जातिनृशंसानां स्वभावतः क्रूराणा मसुराणां सुधादानं[6] सर्पाणां क्षीरमिव दुर्नय मन्याय्यं मत्वा तां सुधामसुरेभ्यो न व्यभजत् अच्युतः, यतोऽसा वाश्रितान् न च्यावयती त्यच्युतः। अयं भावः - दैत्यै र्मदीयं साध्वसाधुवा सर्वमनुमत मेव। अतो मा माश्रितान्देवानेव सुधां पाययिष्यामि। किञ्च तैर्यथान्यायं विभजस्व इति चोक्तम्, न तेभ्यो जात्यैव क्रूरेभ्योऽमृत दानं न्याय्याम्। अत स्तेभ्य स्सुधां न दास्यामीति।।१९।।

**उभयेषां** पङ्क्तीः पृथग्विभक्ताः कल्पयित्वा तान्देवानसुरांश्च स्वासु स्वासु पङ्क्तिषूपवेशयामास।।२०।।

1. A,B,J तत्समजा 2. A,B,T Omit एव 3. H,V तावत् 4 W. "त्र" 5- -5. A,B,T Omit 6. A,B,T "ने

गृहीतकलशः श्रीभगवान् योषिद्रूपः उपसञ्चरैः समीप गमन बहुमान[1] प्रियवाक्यादिभिः दैत्यान्वञ्चयन् दूरस्थानपि देवानेव जरामृत्युहरां[2] सुधां पाययामास।।२१।।

ते अलब्ध सुधा अपि दैत्याः स्वकृतं समयं साध्वसाधु वा त्वत्कृतमनुमन्यामहे इति पूर्वकृतं सङ्केतं पालयन्तः हे नृप! कृतस्तस्यां स्नेहा यैस्ते तादृशाश्च, स्त्रीविवादस्य जुगुप्सिततया च तूष्णी मेवाऽऽसन्[3]।।२२।।

तस्यां कृतः अतिप्रणयः अतिस्नेहो यैस्ते प्रणयापायेन कातराः भीताः 'एते तावत्कृपणाः पूर्वं किञ्चि त्पिबन्तु, यूयन्तु धीराः क्षणं प्रतीक्षध्वम्' इत्यादि बहुमानेन च आबद्धाः नियन्त्रिताश्च किञ्चिदपि विप्रियं नोचुः समयपालनादिभिः षड्भिरेतैः कारणै रप्रियं किञ्चिदपि नोचुः। किन्तु तूष्णीमासु[4] रित्यर्थः।।२३।।

देवलिङ्गेन देवता वेषेण प्रतिच्छन्नः तिरोधापित[5]स्ववेषः स्वर्भानुः राहुः देवानां पङ्क्तौ प्रविष्टः सोम ममृत मपिबत्। चन्द्रार्काभ्यां सूचितः।।२४।।

**विज०** कलभो गजपोतः तत्करवच्छोभमानयो रूर्वोर्लसता दुकूलेन युतं श्रोणीतटं यस्यास्सा। कलभो वंशाङ्कुरः तद्वद्वर्तमानयोर्वा अलसगतिः अलसा मन्दा गति र्यस्यास्सा, तथा शिञ्जितेन शब्दितेन। 'शिजि अव्यक्ते शब्दे'[6] इति धातुः ।।१९।।

कनककुण्डल चारुकर्णाभ्यां नासाकपोलाभ्याञ्च युक्तं[7] वदनं यस्या स्सा तथा, ताम्।।१८।।

"सुधा पयसि देवान्ते गुण पक्वपयोर्मृदि" इति वचनात्। सर्पाणां पयोदान मिव तानुद्दिश्य।।१९।।

आली श्रेणी श्रिया पङ्क्ति सभयोस्तति[8] रुच्यते इति।।२०।।

उपसञ्चरैः समीपगमनादि नर्मव्यवहारैः।।२१।।

कृतस्नेहाः छिन्न स्नेहाः। कृञ् छेदने इति धातुः। पूर्वं सम्पन्नस्नेहा अधुना नष्टस्नेहा इत्यर्थः।।२२।।

प्रणयस्य अपाय उपशमनं सम्भवतीति कातरा भीताः।।२३,२४।।

**चक्रेण क्षुरधारेण जहार पिबत शिरः।**
**हरि स्तस्य कबन्धस्तु सुधयाऽप्लावितोऽपतत्।।२५।।**

---

1. A,B,T नेन्द्रियव्यापारादर 2- -2. A,B,T Omit 3. W. Omits एव 4. W "मासन् ।।२३।। 5. A,B,T "तात्मरोष.। 6. A,B शिञ्जि"
7. Ma. Omits युक्त 8. A समयो", M ०रुभयो"

**शिरस्त्वमरतां नीत मजो ग्रह मचीक्लृपत्[1]।**
**यस्तु पर्वणि चन्द्रार्कौ वभिधावति वैरधीः।।२६।।**

**पीतप्रायेऽमृतेदेवै र्भगवान् लोकभावनः[3]।**
**पश्यतामसुरेन्द्राणां स्वरूपं[2] जगृहे विभुः।।२७।।**

**एवं सुरासुरगणा स्समदेशकालहेत्वर्थकर्ममतयो[4-]ऽपि[-4] फले विकल्पाः।**
**तत्राऽमृतं सुरगणाः फल मञ्जसाऽऽपुर्यत्पादपङ्कजरजश्श्रयणान्न दैत्याः।।२८।।**

**[5-]यद्युज्यतेऽसुवसु[-5]कर्ममनोवचोभि देहात्मजादिषु[6]नृभि स्तवस त्पृथक्त्वात्[7]।**
**तैरेव[8] सद्भवति यत्क्रियतेऽपृथक्त्वा सर्वस्य तद्भवति मूलनिषेचनं तत्।।२९।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे अमृतमथने नवमोऽध्यायः।।९।।

**श्रीध० चक्रेणेति।** हरिः पिबत[9] स्तस्य शिरो जहार। अप्लावितोऽसंस्पृष्टः ।।२५।।

**शिर इति।** ग्रहं सूर्यादिवत् ग्रह त्वाधिकारिणम्।।२६,२७।।

हरिभक्ताना मेवोद्यमः फलति नाऽन्येषामित्येव माख्यान तात्पर्य माह - **एवमिति।** समादेशादयो येषाम्। हेतुर्मन्दराद्रिः। अर्थः समुद्रे क्षिप्तं वीरुधादि[10]। विविधः कल्पः फलं केषाञ्चिज्जातं, केषाञ्चिन्नेति वैचित्र्य मेषां ते फले वैषम्यवन्तो बभूवुरित्यर्थः। तदेवाऽऽह तत्र तेषु यस्य पादपङ्कजरजश्श्रयणाद्देवा अमृतं फल मापुः। स एव सेव्य इत्यर्थः। यत्तदोर्नित्य सम्बन्धात्।।२८।।

एतदेवोपपादयति - यदिति। असुः प्राणः। वसु धनम् प्राणादिभि र्देहात्मजादिषु नृभि र्यद्युज्यते प्रयुज्यते देहाद्यर्थं यत्क्रियते इत्यर्थः। तदसत् व्यर्थ भवति। कुतः? अपृथक्त्वात् भेदाश्रयत्वात्। शाखानिषेचनव तैरेव प्राणादिभिः ईश्वरोद्देशेन यत्क्रियते तत्तु तन्महाफलं भवति। कुतः[11] ? पृथक्त्वादीश्वरस्य सर्वत्रानुष-क्त्वात्[12]। तत्र दृष्टान्तः - यत्तरोर्मूल निषेचनं तद्यथा सर्वस्य स्कन्धशाखादेरपि भवतीति[13]। यद्वा ल्यब्लोपे पञ्चम्यौ। पृथक्त्वं पर्यालोच्य भेददृष्ट्या देहाद्युद्देशेच यत्क्रियते, तदसत्। अपृथक्त्वं पर्यालोच्य ईश्वर दृष्ट्या तैरेव तेष्वेव च यत्क्रियते तत्सद्भवतीति, शेषं समानम्।।२९।।

---

1. H,V,"करत् 2. A,B,G,J,T स्य रू" 3. A,B,G,J,T हरिः 4- -4. M,Ma योगगतयोपि 5- -5. M,Ma यद्युद्यतेषुच 6. M,Ma "वा" 7. M,Ma पुरस्तात् 8. M,Ma च तस्मिन् 9. A,B,J Omit पिबत 10. A "तृणादि 11. A,B,J Omit कुतः 12. A,B,J गतत्वात् 13. H,V Omit इति

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां नवमोऽध्यायः ।।९।।

**वीर०** हरिः सोमं पिबतः स्वर्भानोः शिरः क्षुरस्येव धारा यस्य तेन चक्रेण जहार चिच्छेद। तस्य स्वर्भानोः कबन्धः सुधया अप्लावितः असंस्पृष्टोऽपतत्। अमृतस्य कण्ठा दधो निस्सरणात्पूर्वमेव अस्य[1] शिरसः छिन्नत्वात् अमृतसंस्पर्शाभावात् कबन्धः पतितः ।।२५।।

शिरस्तु अमृतसंस्पर्शात् अमरत्वं प्राप्तम्। अजो ब्रह्मा ग्रह मचीक्लृपत् अकल्पयत् सूर्यादिवद्द्वारेण [2]प्रजानां शुभाशुभसूचकं ग्रहमचीकरदित्यर्थः। यस्तु ग्रहत्वं प्रापितो राहो मूर्धा वैरधीः पर्वसु चन्द्रार्कौ अभिधावति।।२६।।

देवै स्मृते पीतप्राये सति। प्रायग्रहणादमृतस्य अवशेषस्सूच्यते लोकभावनः लोकपालको भगवान् विभुः सुरेन्द्राणां पश्यतां सतां स्वरूपं[3] पौरुषं रूपं जगृहे [4]गृहीतवान्[-4]।।२७।।

श्रीभगवन्तम्[5] आश्रितानामेव उद्यमफलं नाऽन्येषामिति एव माख्यानतात्पर्यमाह - **एवमिति**। एव मित्थं समास्तुल्या देशादयो येषां तादृशा अपि। तत्र देशः क्षीरोदधितीरम्। कालः मथनसमयः[6], हेतुः मन्दराद्रिणा मथनम्। अर्थः अमृतरूपं प्रयोजनम् , कर्म मथनानुकूलं मतिः अन्योन्यमेकप्रयोजन विषया - एवं विधा अपि फले विकल्पाः फलवैषम्यवन्तो बभूवुः। केषाञ्चित्फलमन्येषां नेति वैषम्यमभवदित्यर्थः। तदेवाऽह-तत्र देवासुराणां मध्ये देवगणा एव अमृत रूपं फलम्, अञ्जसा सुखेनाऽऽपुः प्रापुः। कुतः? यस्य भगवतः पादपङ्कजयो रजसस्समाश्रयणात्[7]। तदनाश्रयणात् दैत्यास्तु न प्रापुः [8]वैषम्यं जीवनिष्ठमेव, न तु परमात्मनिष्ठमिति दिक्[-8]।।२८।।

[9]किञ्च **यदिति**। असुः प्राणः, वसु धनम्, देहात्मजादिषु निमित्तेषु देहाद्यर्थैर्नृभिः प्राणादिभि र्यद्युज्यते यत्क्रियते इत्यर्थः। तदेतत् असत् व्यर्थम्, शाखानिषेचनवत् व्यर्थं भवति। कुतः? पृथक्त्वात् तस्य कर्मणः अहम्ममतादि पृथगभिमानगर्भत्वात्। तै रेव प्राणादिभिर्यात्क्रियते सर्वान्तरात्मनो भगवतः सर्वकारणस्य प्रीतये क्रियते तत्तु सत् महाफलं भवति। कुतः? अपृथत्वात् सर्वान्तरात्मतया सर्वमूलतया च सर्वत्राऽनुस्यूतत्वात्। तत्र दृष्टान्तः - यत्तरो मूले सेचनं यथा सर्वस्य स्कन्ध शाखादे रपि भवति तद्वत्। यद्वा - [10]पृथक्त्वादपृथक्त्वादिति च

1. W. Omits अस्य1. 2 A,B,T प्राणिनां 3. A,B,T, add स्वकीयं 4- -4. W. Omits 5 A,B,T add एव 6. W. कालः 7. A,B,T add हेतोः 8- -8. W. Omits 9. W. Omits किञ्च 10. W. "लवदंवे"

ल्यब्लोपे पञ्चमी। देहात्मजादीनां पृथक्त्व मालोच्य अब्रह्मात्मकत्वं पश्यन् केवलदेहाद्यर्थं प्राणादिभि र्यत्क्रियते कर्म तद्विफलम्, ब्रह्मात्मकत्वमालोच्य तदाराधन बुद्ध्यातु कृतं लौकिकमपि कर्म सफलमेवेत्यर्थः।।२९।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां नवमोऽध्यायः।।९।।

**विज०** समा देशादयो येषान्ते तथाऽपि विफलै र्विशिष्ट फलैः विकल्प्याः विकल्प योग्या अभूवन्। कथम्? तत्राऽऽह तत्रेति। तत्राऽपि हेतुमाह - यत्पादेति। फलवैफल्ये विशेषण विशिष्ट कल्पनार्हा इति ।।२५-२८।।

नन्वसुरादीनामपि शिवादि देवार्चनासद्भावात् कथं तै र्विशिष्टफलं नाऽवाप्त मित्याशङ्क्य श्रीहरि चरणारविन्द प्रणामाभावात् नाऽप्तमित्याशयेनाह - यदीति। नृभिः पुरुषैः पुरस्तादुद्यतेषु फल दानाभिमुखेषु देहात्मजादिषु यदर्चनादिकं वित्तादिभिः क्रियते यदि तर्ह्यपि तदसत्कर्म विशिष्टफलं न भवति। कुत इति तत्राऽऽह- उद्यतेष्विति उत्कृष्ट फल मुद्दिश्य य त्तेषूपरतेषु विशिष्ट शक्त्यभावादिति द्विरावृत्त्या योजनीयम्। तर्हि कथङ्कारं तद्भवतीति तत्राऽऽह - तैरिति। यदीत्यनुवर्तते। यदि तैः पूर्वोक्तैः वित्तादिभिरेवचाऽस्मिन् हरौ यत्कर्म क्रियते तर्हि तत्पूर्णफलं भवति। हरिर्भक्तिमात्रेण देवाद्युद्दिष्टद्रव्यै स्तदर्चनाभावे कथं तत्पूर्णफलं स्यात्? इति तत्राऽऽह - सर्वस्येति। यन्मूलभूतस्य हरे रर्चनलक्षणं निषेचनं तत्सर्वस्य देवतादेः तन्निषेचनफलं भवति, हरिभक्तिमन्तरेण शिवाद्यर्चनेन असुराणां विशिष्टफलं नाऽभूत्। तस्मात् तद्भक्त्या भाव्यमिति इदं मुक्तितमसो र्निदर्शना योक्तमिति ज्ञातव्यम्। "देहात्मजादिष्वेव महाद्वारं तदभावादात्मा महनीयः" इति वचना दित्यतोवाऽऽह - यदीति। देहात्मजादिष्विति केचित्पठन्ति तत्रैवं योजनिका-पुरस्ता देहान्तरावाप्तेः पूर्वमेवाऽऽसन् वित्तादिव्यय [1-]एव नाऽन्य[-1] इत्यर्थः। इति शेषं समम्।।२९।।

इति श्रीमद्भागवते महापुराणे परमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे नवमोऽध्यायः।।९।।
(विजयध्वजरीत्या अष्टमोऽध्यायः)

---

1--1. A,B एवाऽनन्यः

oooOooo

# दशमोऽध्यायः

## (विजयध्वजरीत्या नवमोऽध्यायः)

### श्रीशुक उवाच

इति दानवदैतेया ना[1]ऽविन्दन्नमृतं नृप।
युक्ताः कर्मणि [2]यत्ताश्च वासुदेवपराङ्मुखाः।।१।।

साधयित्वाऽमृतं राजन् पाययि[3]त्वा स्वकान्सुरान्।
पश्यतां सर्वभूतानां ययौ गरुडवाहनः।।२।।

सपत्नानां [4]परां सिद्धिं दृष्ट्वा [5]ते दितिनन्दनाः।
अमृष्यमाणा उत्पेतु र्देवान्प्रत्युद्यतायुधाः।।३।।

तत स्सुरगणा स्सर्वे [6]सुधया पीतयैधिताः।
प्रति संयुयुधुः शस्त्रै [7]र्नारायणपदाश्रयाः।।४।।

तत्र [8]दैवासुरो नाम रणः परमदारुणः।
रोधस्युदन्वतो राजन् तुमुलो रोमहर्षणः।।५।।

तत्राऽन्योन्यं सपत्ना स्ते संरब्धमनसो रणे।
समासाद्याऽसिभिर्बाणै [9]र्निजघ्नुर्विविधायुधैः।।६।।

शङ्खतूर्यमृदङ्गानां भेरीडम[10]रुणां महान्।
हस्त्यश्वरथपत्तीनां [11]नदतां निस्स्वनोऽभवत्।।७।।

रथिनो रथिभिस्तत्र पत्तिभिस्सह पत्तयः।
हयाहयै रिभाश्चेभैः समसज्जन्त संयुगे।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे मत्सरा दैत्यै रारब्धेतु मृधे सुरैः। दैत्यमायाविषण्णेषु देवे ष्वाविर्बभौ हरिः।

तदेव ममृतावाप्ति र्नाऽभक्ताना मितीरितम्। भक्तमत्सरतः प्राणहानिः पुन रुदीर्यते।

**तत्र दैवेति** रणः सङ्ग्रामः उदन्वतः समुद्रस्य रोधसि तीरे बभूव।।१-५।।

1. B,W "विद" 2. A,B,G,J,M,Ma,T,W यत्ताश्च 3. M,Ma "त्वाऽमृतं सु" 4. A,B,G,J,M,Ma,T परामृद्धि 5. M,Ma च
6 H,V "र" 7 H,M,Ma,V परायणाः 8 B,M,Ma दे" 9 M,Ma वि" 10 A,B,G,J,M,Ma,T "रि" 11. M,Ma व"

**तत्रेति** । अन्योन्यं समासाद्य निजघ्नुः ।।६-८।।

## श्रीवीरराघवविदुषालिखिता भागवचन्द्रचन्द्रिका

समदेशकाल हेत्वर्थकर्ममतीना मपि श्रीभगवन्तमनाश्रितानां न केवलं फलाप्राप्तिरेव, प्रत्युत प्राणहानि श्चेति वक्तु ममृतालाभप्रयुक्तसंरम्भाणां दैत्यानां आदितेयै स्सह युद्धमाह अध्यायद्वयेन। हे नृप! इति इत्थं दानवा दैतेयाश्च[1] अमृतं नाऽविदन् (नाऽविन्दन्) न लब्धवन्तः। तत्र हेतुं वदन् विशिनष्टि कर्मणि मथनकर्मणि युक्तायत्ताश्चानुकूलकर्मवन्तोऽपि वासुदेवपराङ्मुखाः, अतो नाऽविदन् (नाऽविन्दन्) इत्यर्थः।।१।।

हे राजन्! इत्थं भगवानमृतं साधयित्वा स्वकान् स्वाश्रितान् सुरान् सुधां[2] पाययित्वा सर्वभूतानां पश्यतां सतां श्रीगरुडवाहनस्सन् जगाम।।२।।

तत स्सपत्नानां देवानां परां सिद्धिं फलप्राप्तिं दृष्ट्वा ते दैत्याः [3-]अमृष्यमाणाः[-3] [4-]असहमानाः[-4] सन्तः उद्यतानि उद्धृतानि आयुधानि यै स्ते देवान्प्रति उत्पेतुः अभिदुद्रुवुः।।३।।

ततस्सुरगणा अपि पीतया सुधया एधिता आहितबलाः नारायणपदाश्रयाश्च शस्त्रास्त्रैः प्रति संयुयुधुः।।४।।

तत्रोदन्वतः क्षीराब्धेः[5] रोधसितीरे दैवासुर इति प्रसिद्धः परमदारुणोऽतिभीषण स्तुमुल स्सङ्कुलः पश्यतां शृण्वताञ्च रोमहर्षणो रोमहर्षणजनको रण स्सङ्ग्रामो बभूव।।५।।

तमेवाऽनुवर्णयति - **तत्रेति**। तदा सपत्नाः ते देवासुराः संरब्धं क्रुद्धं मनः येषान्ते, रणे अन्योन्यं समासाद्य बाणैः विविधै रायुधैश्च निजघ्नुः।।६।।

भेर्यादीनां शङ्खादीनाञ्च नदतां हस्त्यश्वपदातीनाञ्च महान्निस्स्वनो बभूव।।७।।

[6]तत्र रथ्यादयो रथ्यादिभिरेव द्वन्द्वसंयुगे[7] समसज्जन्त युयुत्सया सङ्गता बभूवुः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवत्प्रसादजातेन ज्ञानेन पापप्रणाशो भवत्येव नान्येनेत्येतन्निदर्शनाय देवासुरयुद्धं वर्णयति अध्यायद्वयेन। तत्राऽऽदौ हरे रदर्शन प्रकारमाह - **इतीति**।।१।।

**यया वदृश्योऽभूदिति**।।२-३।।

1. A,B,T दैत्याश्च 2. W. Omits सुधां 3- -3. A,B,T Omit 4- -4. W. Omits 5. W. क्षीरोदधेः 6. W. Omits
7. A,B,T सङ्गरे।

एधिता: वर्धिता: ।।४।।

उदन्वत: समुद्रस्य रोधसि तीरे।।५-८।।

उष्ट्रै:[1] केचिद्विद्विपै: केचिदपरे[2]ऽभिययु: खरै:।
केचिद्गौरमुखै ऋक्षै र्द्वीपिभि र्हरिभि र्भटा:।।९।।

गृध्रै: कङ्कै र्बकै[3] रन्ये श्येन भासै स्तिमिङ्गिलै:।
शरभै र्महिषै: खड्गै र्गोवृषै र्गवयारुणै:।।१०।।

शिवाभि राखुभि: केचित् कृकलासै: शशै[4]र्नरै:।
बस्तै रेके कृष्णसारै: हंसै रन्ये च सूकरै:।।११।।

अन्ये जलस्थल खगै स्सत्त्वै र्विकृतविग्रहै:।
सेनयो रुभयो राजन् विविशुस्तेऽग्रतोऽग्रत:।।१२।।

चित्रध्वज पटै राजन् आतपत्रै स्सिताऽमलै:।
महाधनै र्वज्रदण्डै: व्यजनै[5] र्बार्है चामरै:।।१३।।

वातोद्धूतोत्तरोष्णीषै[6]: अर्चिभिर्वर्म[7]भूषणै:।
स्फुरद्भि र्विशदै[8] श्शस्त्रै स्सुतरां सूर्यरश्मिभि:।।१४।।

देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन।
रेजतु र्वीर[9]मालाभि र्यादसा मिव सागरौ[10]।।१५।।

वैरोचनि[11] र्बलि स्संख्ये सोऽसुराणां चमूपति:।
यानं वैहायसं नाम कामगं मयनिर्मितम्।।१६।।

**श्रीध०** **चित्रेति**। चित्रध्वजपटादिभिश्च सितै रमलै रातपत्रैश्च व्यजनै:[12] बार्है: चामरैश्च।।९-१३।।

**वातेति**।वातेनूद्धूतै: उत्तरीयै: उष्णीषैश्च सूर्यरश्मिभि: सुतरां स्फुरद्भि:।।१४।।

**देवेति**। देवदानववीराणां ध्वजिन्यौ वीराणां मालाभिश्च राजिभि:[13] यादसां मालाभि: सागराविव रेजतु रिति त्रयाणामन्वय:। यादोभिरिति वा।।१५।।

1. A,B,G,J,T "दिभै: ; M,Ma "द्विजै. 2. A,B,G,J,T रे युयुधु: 3. A,B,G,J,M,Ma,T "बंकै 4. A,B,G,J,M,Ma,T "शशै" 5. M,Ma विभ्राजन्बार्हे" 6. M,Ma "ततमोष्णीषै; 7. M,Ma सत्कृते र्वर्म; H.V सुदृग्भिर्ध्वज; W. वनद्भिर्वर्म 8. H,V विधै: 9. M, Ma "चि" 10. M,Ma "रै" 11. A,B,G,J,T "चनो ब" 12. H.V Omit "यजनै: 13 H,V Omit राजिभि:

**वैरोचनि** रिति। [1-]संख्ये युद्धे[-1] असुराणां या चमूः तस्याः पतिः स बलिर्यानमास्थितः।।१६।।

**वीर०** तत्र देवेषु असुरेषु च केचित् , केचिद्भटाः उष्ट्रादिभिर्वाहनैः अभिसंययुः अभिदुद्रुवुः। गौरमुखै रिति ऋक्षै रित्यस्य विशेषणम्। [2-]रक्तमुखै र्वानरै रित्यर्थः।[-2] [3-]हरिभि स्सिंहैः[-3], तिमिङ्गिलै र्मत्स्यविशेषैः गोभि र्धेनुभिः वृषै र्बलीवर्दैश्च अत्रैव गोबलीवर्दन्यायः प्रदर्शितः।।९,१०।।

शिवाः [4]सृगालविशेषाः ताभिः, बस्तै र्मेषैः।।११।।

जले स्थले, खे आकाशे च गच्छन्तीति तथा तैः विकृतविग्रहैः सत्त्वैर्जन्तुभिः वाहनभूतैः उभयो र्देवासुरसम्बन्धिन्योः सेनयोः अग्रतोऽग्रतः हे राजन्! विविशुः।।१२।।

हे राजन् ! [5]चित्रध्वजपटैः सितै श्शुभ्रैरमलै र्महाधनै रनर्घैः, वज्रदण्डै रातपत्रैः तथा वज्रदण्डैर्व्यजनैः अनर्घै श्चामरैः।।१३।।

वातेनोद्धूतै रुत्तरीयै रुष्णीषैः ध्वनद्भिः कवचै र्भूषणैश्च। विशदैः निघर्षणेन निर्मलीकृतैः सूर्यरश्मिभिः नितरां स्फुरद्भिः शस्त्रैश्च।।१४।।

वीराणां मालाभिश्च देवासुराणां ध्वजिन्यौ सेने रेजतुः [6-]यादसामिव सागरौ[-6] यथा यादसां मालाभिस्सागरौ समुद्रौ तद्वत्।।१५।।

असुराणां या चमूः सेना तस्याः पति र्वैरोचनो बलि र्वैहायसाख्यं यानं विमान मास्थितः अधिष्ठितः, उदये उदय गिरौ स्थितश्चन्द्र इव रेजे। यानं विशिनष्टि कामगं कामं यथेच्छं[7] गच्छतीति तथा, मयेन निर्मितम्।।१६।।

**विज०** तेषा मारोह साधनान्याह - उष्ट्रै रित्यादिना। द्विजैः पक्षिभिः।।९।।

खड्गै र्मृगविशेषैः। अरुणैर्वन सत्त्वविशेषैः।।१०-१२।।

बार्हचामरैः पिच्छविरचितचामरैः।।१३,१४।।

वीचिमालाभिः यादसां जलजन्तूनां वरूथिनी यथा।।१५,१६।।

**सर्वसाङ्ग्रामिकोपेतं सर्वाश्चर्यमयं विभो[8]।**
**अप्रतर्क्य मनिर्देश्यं दृश्यमान मदर्शनम्।।१७।।**

**आस्थित स्तद्विमानाग्र्यं सर्वानीकाधिपै र्वृतः।**
**वालव्यजन [9]छत्राद्यैः रेजे चन्द्र इवोदये।।१८।।**

1- -1. B,H,J,V Omit 2- -2. W. Omits 3- -3. W. हरयः सिंहाः 4. A,B,T शृ" 5. W. Omits चित्र 6- -6. A,B,T Omit 7.W. 'इ" 8. A,B,G,J,M,Ma,T प्रभो। 9. A,B,G,J,M,Ma,T छत्राग्रचे:

तस्याऽऽसन् सर्वतो यानैः [1]पृतना पतयोऽसुराः।
नमुचिः शम्बरो बाणो विप्रचित्ति रयोमुखः।।१९।।

द्विमूर्धा कालनाभोऽपि [2]प्रहेतिर्हेति रिल्वलः।
शकुनि र्भूत[3]सन्त्रासो वज्रदंष्ट्रो विरोचनः।।२०।।

हयग्रीव श्शङ्कुशिराः कपिलो मेघदुन्दुभिः।
तारक [4]श्चोग्रदृक् शुम्भो निशुम्भो जम्भ उत्कलः।।२१।।

अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः।
अन्ये पौलोमकालेया निवात कवचादयः।।२२।।

अलब्धभागा स्सोमस्य केवलं क्लेशभागिनः।
सर्व एते रणमुखे बहुशो निर्जितामराः।।२३।।

सिंहनादा[5] न्विमुञ्चन्तः शङ्खान्दध्मुर्महारवान्।
दृष्ट्वा सपत्ना नुत्सिक्तान् बलभित्कुपितो भृशम्।।२४।।

ऐरावतं दिक्करिण मारू[6]ढो वियति स्वराट्।
यथा स्रवत्प्रस्रवण मुदयाद्रि महर्पतिः।।२५।।

तस्याऽऽसन्सर्वतो देवा नानावाह ध्वजायुधाः।
लोकपाला स्सहगणै र्वाय्वग्नि वरुणादयः।।२६।।

तेऽन्योन्य मभिसंवृ[7]त्य क्षिपन्तो [8]नामभि र्मिथः।
आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः।।२७।।

**श्रीध०** **आस्थित** इति। [9]उदये उदयगिरिशिखरे स्थितश्चन्द्र इव रेजे, इति त्रयाणामन्वयः।।१८-२४।।

**ऐरावत** मिति। स्रवन्ति प्रस्रवणानि यस्मिन्निति मदधारा सादृश्यम्।।२५।।

**तस्येति**। नानावाहादीनि येषां ते देवाः असुराश्च मिथः [10-]अभिसङ्गम्य नामभिर्नामानि गृहीत्वा क्षिपन्त स्तिरस्कुर्वन्तो[-10] युयुधुः।।२६,२७।।

1. A,B,G,J,M,Ma,T यूथानां 2. A,B,G.J,M,Ma,T °थ 3. A,B,G,J,M,Ma,T सन्तापो 4. A,B,G,J,M,Ma,T °श्चक्र° 5. M,Ma °दं वि° 6. A,B,G,J,T ढश्शुभे 7. A,B,G,J,M,Ma,T °सृत्य 8 A,B,G,J,T मर्मभि° 9. A. Omits उदये 10- -10. B,H,J,V Omit

**वीर०** सर्वै स्सङ्ग्रामसाधनैः अस्त्रशस्त्रादिभि र्युक्तं सर्वेषामप्याश्चर्यकरं महद्विफल मप्रतर्क्यं विमानान्तरसजातीयत्वेन तर्कितुमप्यशक्यम्[1] अनिर्देश्य मनियतप्रदेशावस्थानत्वेन क्वचिद्देशे नियमेन स्थितमिति निर्देष्टु मशक्यं, क्वचिद्दृश्यमान मपि पुनरप्यदर्शन मदृश्यं द्रष्टुमशक्यं, तेजस्वित्वा द्विमानस्य[2] श्रेष्ठं यद्यानं तदास्थित इत्यन्वयः। कथम्भूतः? सर्वै स्सेनाधिपतिभिः व्यजनच्छत्रचामरादिभिश्च[3] वृतः।।१७,१८।।

तस्य बले स्समन्ता द्यूथानां पतयोऽसुराः स्वस्वयानै स्सहाऽऽसन् परिवृत्य तस्थुः। यूथपती नेव कांश्चिन्निर्दिशति - नमुचिरिति।।१९-२२।।

[4]एते सर्वे सोमस्याऽमृतस्य अलब्धो भागो यैः ते केवलं क्लेशमात्रं प्राप्तास्सन्तः पूर्वं रणमुखे बहुशो निर्जिता अमरा यै स्ते।।२३।।

सिंहनादान्[5] विमुञ्चन्तः कुर्वन्तः, महान् रवो येषां तान्, शङ्खान् दध्मुः ध्वनयामासुः। एव मुद्धतान् शत्रूनसुरान् दृष्ट्वा स्वराट् बलभित् इन्द्रः नितरां कुपितः।।२४।।

दिक्करिण मैरावत मधिरूढः वियत्याकाशे, अवस्थित इति शेषः। कः[6] कमिव? स्रवन्ति प्रस्रवणानि यस्मिन् मदधारासादृश्य मनेनाऽभिप्रेतं तमुदयाद्रि मारूढोऽहर्पतिस्सूर्यो यथा, तद्वत्।।२५।।

तस्येन्द्रस्य सर्वतः परितो देवा नाना विविधानि आयुधादीनि येषां ते आसन्, तं परिवेष्ट्य तस्थुः. स्वगणै स्सहिता वाय्वादयो लोकपालाः।।२६।।

[7-]ते दैत्याश्च[-7] अन्योन्यमभिमुखं समीप मागत्य परस्परं क्षिपन्तः तिरस्कुर्वन्तो नामभि राह्वयन्तो विशन्तश्चाऽग्रे द्वन्द्वयोधिनो युयुधुः।।२७।।

**विज०** साङ्ग्रामिकं युद्धसाधनम्।।१७-२२।।

सोमस्य अमृतस्य।।२३।।

उत्सिक्तान् बलगर्वितान्।।२४।।

स्रवत्प्रस्रवणं च्योतत्प्रस्रवणं च्योतन्मदजलम् अन्यत्र निरन्तरस्यन्दमान निर्झरम्, अहर्पति स्सूर्यः।।२५-२७।।

---

1. W. Omits अपि 2. W. "नश्रे" 3. A,B,T "रप्राहिभिश्च 4 A,B,T add ते 5. A,B,T नादं 6. A,B,T Omit कः/-7 A.B.J Omit

युयोध बलि रिन्द्रेण तारकेण गुहो[1]ऽस्यत।
वरुणो हेतिनाऽयुध्यत् मित्रो राजन्प्रहेतिना।।२८।।

यमस्तु कालनाभेन विश्वकर्मा मयेन वै।
शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः।।२९।।

[2]पराजितेन नमुचि रश्विनौ वृषपर्वणा।
सूर्यो बलिसुतै[3] र्देवो बाणज्येष्ठै श्शतेन च[4]।।३०।।

राहुणा च तथा सोमः पुलोम्ना युयुधे[5]ऽनिलः।
निशुम्भशुम्भयो र्देवी भद्रकाली [6]तरस्विनी।।३१।।

वृषाकपिस्तु जम्भेन महिषेण विभावसुः।
इल्वल स्सह वातापि[7]: ब्रह्मपुत्रैररिन्दम।।३२।।

कामदेवेन दुर्मर्ष उत्कलो मातृभि स्सह।
बृहस्पति [8]स्तूशनसा नरकेण शनैश्चरः।।३३।।

मरुतो निवातकवचैः कालेयै र्वसवोऽमराः।
विश्वे देवास्तु पौलोमैः रुद्राः क्रोधवशै स्सह।।३४।।

त एव माजा वसुरा स्सुरेन्द्रा द्वन्द्वेन [9]संहत्य [10]नियुध्यमानाः।
अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्ण[11]शरासितोमरैः।।३५।।

[12]भुशुण्डिभिश्चक्र[13]गदर्[14]ष्टिपट्टिशैः शक्त्युल्मुकैः प्रास परश्वधै रपि।
निस्त्रिंशभल्लैः परिघै स्समुद्गरै [15]स्सभिण्डिवालैश्च शिरांसि चिच्छिदुः।।३६।।

श्रीध० द्वन्द्वान्येवाऽऽह - युयोधे[16]त्यादि सप्तभिः। [17-]अस्यत अस्यत् अयुध्यतेत्यर्थः[-17]।।२८,२९।।

पराजितेनेति। सूर्यो देव [18]एक एव - शतेन बलिसुतैः, बाणोज्येष्ठो येषां तैः ।।३०।।

राहुणेति। निशुम्भशुम्भाभ्याम् देवी।।३१-३६।।

---

1. H,V गुहस्तथा, M,Ma दिवस्पति. 2. A,B,G,J,M,Ma,T अप" 3. M,Ma "ष्टश" 4, M,Ma सह 5. M,Ma "नलः 6. M,Ma नराशिनी 7 H,V "पीब" 8 A,B,G,J,T "श्चो" 9 M,Ma संहत्य 10 A,B,G,J,M,Ma,T च यु" 11. M,Ma शरांश्च चिक्षिपुः 12. A,B,G,J,T भु" M,Ma भृ" 13. H,V "र्देष्टि" M,Ma दार्ष्टि 14. H,V पट्टसैः 15. A,B,G,J,T सभिन्दिपालैश्च; M,Ma सभिण्डिपालैश्च 16 A,B,J "ति 17- -17. H,V,Omit 18. H,V Omit एक

वीर० द्वन्द्वान्येवाऽऽह - युयोधेत्यादिभि स्सप्तभिः। बलिर्वैरोचनि:[1] इन्द्रेण[2] सह[2], तारकेण असुरेण: गुहः कुमारः अस्यत अयुध्यत इत्यर्थः। हे राजन्! मित्रः प्रहेतिना अयुध्यत।।२८।।

विरोचनः बलेः पिता अन्यो वा असुरः[3] दैत्यः सूर्यो देवः एक एव बले स्सुतैः बाणज्येष्ठैः[4-4] बाणो ज्येष्ठो येषां तैः शतसंख्याकै रयुध्यतेत्यर्थः।।२९,३०।।

सोमश्चन्द्रः पुलोम्ना दैत्येन अनिलो वायुरयुध्यतानिशुम्भ शुम्भयो स्ताभ्यां तरस्विनी बलवती भद्रकाली देवी अयुध्यत।।३१।।

वातापि सहित इल्वलः ब्रह्मपुत्रैः मरीच्यादिभिः। हे अरिन्दम!।।३२।।

मातृभि र्ब्राह्मयादिभिः सह उत्कलोऽसुरः, उशनसा शुक्रेण बृहस्पतिः[5], नरकेण असुरेण शनैश्चरः।।३३।।

कालेयैः कालकेयैः।।३४।।

एवमित्थ माजौ युद्धे त एते सुरासुरश्रेष्ठाः द्वन्द्वेन सङ्गीभूय नियुध्यमानाः परस्परं समीप मेत्य जेतु मिच्छवः तीक्ष्णैः शरादिभिः बलेनाऽन्योन्यमाजघ्नुः शिरांसि चिच्छिदुश्च।।३५,३६।।

(२८ - ३६ श्लोकानां विजयध्वजीयव्याख्या नास्ति)

गजास्तुरङ्गा स्सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः।
निकृत्तबाहूरुशिरोधराङ्घ्रय[6] श्छिन्नध्वजे[7] ष्वासतनुत्रभूषणाः।।३७।।

तेषां पदाघात रथाङ्गचूर्णिता दायोधना दुल्बण उत्थित[8] स्तदा।
रेणुर्दिशः खं द्युमणिञ्च छादयन् न्यवर्तताऽसृक्स्नुतिभिः परिप्लुतात्[9]।।३८।।

शिरोभि रुद्धूत[10] किरीटकुण्डलैस्संरम्भदृग्भिः परिदष्टदच्छदैः।
महाभुजै स्साभरणै[11] स्सहायुधै स्सा[12] प्रास्तृता[13] भूः करभोरुभि र्बभौ।।३९।।

कबन्धा स्तत्र चोत्पेतुः पतित[14] स्वशिरोऽक्षिभिः।
उद्यतायुध दोर्दण्डै राधावन्तो भटान्मृधे[15]।।४०।। 12

बलि र्महेन्द्रं दशभिः त्रिभि रैरावतं शरैः।
चतुर्भि श्चतुरो वाहा नेकेनारोह मार्दयत्[16]।।४१।।

1. W. चन: 2- -2. W. Omits 3. A. Omits असुर: 4- -4. W. Omits 5. W. Omits बृहस्तपि: 6. M,Ma "धरांघ्रय" 7. H,V ध्वजज्यासित"; M,Ma ध्वजज्यासत" 8. M,Ma उच्छ्रित 9 H,M,Ma,V "त: 10. A,B,G,J,T,W "रुद्धृत 11. H,V "व" 12. A,B,G,J,T सा प्रा"; M,Ma सम्प्र" 13. H,V "ताज्याकर" 14. M,Ma तैश्च शि" 15. H,V भटा.मृधे ; W भटा:रणे 16.A,B,G,J,M,Ma,T "मार्च्छं"

**स ता नापतत श्शक्र स्तावद्भि श्शीघ्रविक्रमः[1]।**
**चिच्छेद निशितैर्भल्लै रसम्प्राप्तान् हसन्निव।।४२।।**

**तस्य कर्मोत्तमं वीक्ष्य दुर्धष[2] श्शक्ति माददे।**
**तां ज्वलन्तीं महोल्काभां हस्तस्था मच्छिनद्धरिः।।४३।।**

**तत श्शूलं ततः प्रासं तत स्तोमरमृष्टयः।**
**[3]यद्य द्गृषित आदद्यात् सर्वं [4]त द्यच्छिन द्विभुः।।४४।।**

**ससर्जाऽथाऽऽसुरीं माया मन्तर्धानं[5] गतोऽसुरः।**
**ततः प्रादुर भूच्छैलः सुरानीकोपरि प्रभो।।४५।।**

**ततो निपेतु स्तरवो दह्यमाना दवाग्निना।**
**शिला [6]स्सटङ्कशिखरा श्चूर्णयन्त्यो[7] द्विषद्बलम्।।४६।।**

**श्रीध० गजा** इति। आरोहन्ती त्यारोहा वाह्यास्तैः सहिता अन्ये च वाहाः, पूर्वन्तु केवला[8] गजादय उक्ताः। कथम्भूताः निकृत्ता बाह्वादयो येषां। छिन्नानि ध्वजादीनि येषान्ते।।३७।।

**तेषा** मिति। तेषां देवादीनां पदाघातै रथाङ्गैश्च चूर्णिता दायोधनात् रणभूमे रुत्थितो रेणुः दिशः खं घुर्माणञ्च सूर्यञ्च छादयं स्तदैव खादेर्न्यवर्तत। कथम्भूतात्? असृक्स्नुतिभिः रक्तक्षरणैः परिप्लुतात् सिक्तात्। यद्वा परिप्लवनाद्धेतोर्न्यवर्तत। भावे क्तः। रक्तधाराणां तत्पर्यन्तमुच्छ्[9]लना दित्यर्थः। प्रथमान्तपाठे रेणोर्विशेषणम्।।३८।।

**शिरोभि** रिति। शिरोभिर्महाभुजैश्च करभसदृशै रूरुभिश्च सा रणभूः प्रकर्षेणाऽऽस्तृता सती बभौ। कथम्भूतै श्शिरोभिः उद्वृत्ता[10] न्युत्पतितानि किरीटानि कुण्डलानि च येभ्य स्तैः संरम्भयुक्ता दृशो येषु तैः। परिदष्टा दच्छदा ओष्ठा येषु तैः।।३९।।

**कबन्धा** इति। पतितानि यानि [11]स्वशिरांसि तत्रत्यै रक्षिभिः, तैः पश्यन्त इत्यर्थः। उद्यतान्यायुधानि यै स्तै र्दोर्दण्डै र्युक्ताः।।४०।।

**बलि** रिति। वाहा नैरावतपादरक्षकान्। आरोहं गजयन्तारम् आर्दयत्[12] विव्याध।।४१,४२।।

**तस्येति**। दुर्मर्षोऽसहमानो[13] बलिः ।।४३ - ४५।।

---

1. H,V "मै: 2. A,B,G,J,M,Ma,T दुर्मर्ष" 3. A,B,G,J,M,Ma,T यद्यच्छस्त्रं समादद्यात् 4. A,B,G,J,M,Ma,T तद° 5. A,B,G,J,M,Ma,T "न" 6. M,Ma वि" 7. M,Ma "यन्तो" 8. A,B,G "लं 9. H,V "श्च" 10. A उद्धृता ; J. उद्भूता" 11. H.V. Omit स्व 12. A,B,J आर्च्छं" 13 A,B,J "हतो

**तत** इति। टङ्कव त्तीक्ष्णाग्रैः शिखरै स्सहिताः।।४६।।

**वीर०** गजादयः आरोहन्तीत्यारोहाः तै स्सहिताः अन्ये च वाहाः नानाविधाः खण्डिता निकृत्ताः नितरां छिन्ना बाह्वादयो येषां, छिन्नानि ध्वजादीनि येषान्ते बभूवुः तत्र इष्वासो निषङ्गः, तनुत्रं कवचम्।।३७।।

तेषां देवादीनां पदाघातै रथाङ्गैश्च चूर्णिता दायोधनात् युद्धभूमे रुत्थितो रेणु रुल्बणो निबिडः दिशः खं द्युमणिं सूर्यञ्च छादयन् पश्चात् न्यवर्तत। निवृत्तौ हेतुंवदन् आयोधनं विशिनष्टि - असृक्स्रुतिभिः रुधिरप्रस्रवणैः परितः प्लुता त्सिक्तात्।।३८।।

सा युद्धभूमिः शिरोभि र्महाभुजैः करभसदृशोरुभिश्च प्रावृता सती बभौ। शिरांसि विशिनष्टि उद्धूतानि उत्क्षिप्तानि किरीटानि[1] येभ्यः संरम्भयुक्ताः दृशो येषु परिदष्टा दच्छदा दन्तच्छदा अधरोष्टा येषु तैः। भुजान्विशिनष्टिसाभरणै स्सहायुधै रिति च।।३९।।

किञ्च, **कबन्धा** इति। तत्र मृधे युद्धे पतितानि यानि स्वशिरांसि, तत्रत्यै रक्षिभिः पश्यन्तः कबन्धाः [2-]शिरो रहितदेहा[-2]ः उत्पेतुः कथम्भूताः? [3]उद्यतानि आयुधानि यैस्तै र्दोर्दण्डै [4]र्भुजदण्डै स्सह धावन्तो भटा इव [5]अवस्थिताः। महामृधे इति पाठान्तरम्।।४०।।

[6-]बलेः पराक्रम माह - **बलि** रिति[-6]। बलि र्दशभि [7]श्शरैः इन्द्रम् त्रिभि श्शरैः ऐरावतञ्च, चतुर्भिश्चतुरो वाहान् ऐरावतपादरक्षकान्, एकेन शरेण आरोहं गजयन्तार मार्दयत् अपीडयत्।।४१।।

स शक्रः ता नापततः शरान् असम्प्राप्तानेव तावद्भिःर्निशितै र्भल्लैश्शरैः प्रहसन्निव शीघ्रविक्रमः धनुर्विद्या कुशल श्चिच्छेद।।४२।।

तस्येन्द्रस्य तदुत्तमं धनुः कौशलं कर्म वीक्ष्य दुर्मर्षोऽसहमानो बलि श्शक्ति मादद गृहीतवान्, प्रयोक्[8-]तु मि[-8]ति शेषः महोल्[9-]काया इव भा[-9] यस्या स्तां ज्वलन्तीं शक्तिं करस्थामेव हरिरिन्द्रश्चिच्छेद।।४३।।

ततो बलि र्यद्यच्छूलादिकं शस्त्रमाददे तत्सर्वं समर्थः इन्द्र श्चिच्छेद।।४४।।

अथाऽसुरो बलिः स्वयं तिरोहितः आसुरीं मायां ससर्ज। कीदृशीं [10]माया मित्यत्र तामेव दर्शयति तत इति [11-]सार्धे ष्षड्भि[-11]ः। हे प्रभो! सुरसैन्यस्य उपरिष्टात् शैलोऽद्रिः मायिकः प्रादुर्बभूव।।४५।।

तस्माच्छैला तरवो वृक्षाः निपेतुः। कथम्भूताः? दवाग्निना दह्यमानाः तथा टङ्कवत् तीक्ष्णाग्रै शिखरैः

---

1. A,B,T "टादीनि 2- -2. W. Omits 3. उद्द" 4. W. Omits भुजदण्डैः 5. W. Omits अव 6- -6. W. Omits 7. A,B,T Omit शरैः 8- -8. A,B,T "गं कर्तुमि" 9- -9. W. "कस्येवाऽऽभा" 10. A,B,T मायाम् 11- -11. W. Omits

सहिताः शैलाः द्विषतां देवानां बलं चूर्णयन्तो निपेतुः।।४६।।

**विज०** ज्यया मौर्व्या आसम् आसनम् यत्तद्धनुः तनुत्रं कवचम्।।३७,३८।।

उद्वृत्तं विपर्यस्तं रहितं वा दच्छदै रोष्टैः सम्प्रास्तृता सञ्छादिता।।३९।।

कबन्धाः शिरोरहित देहाः।।४०-४२।।

हरि रिन्द्रः।।४३।।

ऋष्टयः ऋष्टीः ।।४४,४५।।

विटङ्कशिखराः उन्नतशृङ्गाः विस्तृतप्राग्रा वा।।४६।।

महोरगा स्समुत्पेतु र्दन्दशूका स्सवृश्चिकाः।
सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजाः[1]।।४७।।

यातुधान्यश्च शतशः शःशूल हस्ता विवाससः।
छिन्धि भिन्धीति वादिन्य स्तथा[2] रक्षोगणाः प्रभो[3]।।४८।

ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः।
अङ्गारा न्मुमुचुर्वातै राहताः स्तनयित्नवः।।४९।।

सृष्टो दैत्येन सुमहान् वह्निः पवनसारथिः[4]।
सांवर्तक[5] इवात्युग्रो विबुधध्वजिनी मधाक्[6]।।५०।।

तत स्समुद्र उद्वेल स्सर्वतः प्रत्यदृश्यत।
प्रचण्डवातै रुद्धूत[7] तरङ्गावर्तभीषणः।।५१।।

एवं दैत्यैर्महाघोरै[8] रलक्ष्यगतिभीषणैः।
सृज्यमानासु मायासु विषेदु स्सुरसैनिकाः।।५२।।

न तत्प्रतिविधिं यत्र विदु रिन्द्रादयो नृप।
ध्यातः प्रादु रभूत्तत्र[9] भगवान्भूतभावनः।।५३।।

---

1. A,B,G,J,T महागजान् ; M,Ma महासुरान् 2. H,V °दा 3. M,Ma विभो 4. A,B,G,J,M,Ma,T श्वसन° 5. H,V सं° 6. H,V °त् 7. M, Ma °रुद्धूत 8. A,B,G,J,M,Ma,T मायै° 9. A,B,G,J,M,Ma,T °वान्विभ्व°

**तत स्सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः।**

**अदृश्यताष्टायुध बाहु रुल्लसच्छ्री कौस्तुभानर्घ्य[1]किरीटकुण्डलः।।५४।।**

**श्रीध० तत** इति। स्तनयित्नवः [2-]सनिर्घाता महामेघाः[-2] अङ्गारान्, मुमुचुः इत्यनुषङ्गः।।४९।।

**सृष्टइति**। [3-]अधाक्, आर्षः[-3], अधाक्षी दित्यर्थः।।५०।।

**तत** इति। उद्धूतै स्तरङ्गैः, आवर्तैश्च भीषणः।।५१।।

**एवमिति**। एव मन्यैश्च दैत्यैः सृज्यमानासु।।५२।।

**नेति**। यत्र यदातत्र तदा, तै र्ध्यात स्सन्।।५३।।

**तत** इति। अष्टौ आयुधयुक्ता बाहवो यस्य श्रीश्च कौस्तुभश्च [4]अनर्घ्यं किरीटश्च कुण्डले च उल्लसन्ति श्री कौस्तुभादीनि यस्मिन्।।५४।।

**वीर०** दंशनस्वभावाः वृश्चिकै स्सहिता महोरगाश्च समुत्पेतुः। सिंहादयो महागजाश्च नर्दयन्तः शब्दयन्तः, समुत्पेतु रित्यनुषङ्गः।।४७।।

विवाससः नग्नाः शूलहस्ता श्शतशस्सहस्रशश्च यातुधान्यः भिन्धि छिन्धीतिवादिन्यः समुत्पेतुः ततो रक्षोगणाश्च हे प्रभो!।।४८।।

ततो व्योम्नि गम्भीरः परुषः कठोरश्च स्वनो येषान्ते [5]महाघनाः महामेघा वातै राहताः स्तनयित्नवः गर्जन्तः अङ्गारान् मुमुचुः।।४९।।

दैत्येन बलिना सृष्टो महान् विपुलः श्वसनसारथिः वायु सनाथो वह्निः सांवर्तकः प्रलयानल इव अत्युग्रो विबुधध्वजिनीं देवानां चमूं अधाक् अदहत्।।५०।।

ततः सर्वत श्चतुर्दिक्षु समुद्रः प्रत्यदृश्यत, देवै रिति शेषः। कथम्भूतः? उद्वेलः मर्यादातिगः [6]प्रचण्डै र्मारुतै रुद्धूतै स्तरङ्गैरावर्तैश्च भीषणः।।५१।।

यथा बलिना एव मन्यैश्च महामायै रलक्ष्यगतिभि युद्धे मायासु सृज्यमानासु सतीषु सुरसैनिकाः विषेदुः दुःखिता बभूवुः।।५२।।

हे नृप! यत्र यदा इन्द्रादय स्तत्प्रतिविधिं मायाप्रतिक्रियां न विदुः तदा, तैर्ध्यातो भगवान् विश्वभावनः प्रादुरभूत्।।५३।।

---

1. M,Ma,W °नर्घ 2--2. B,H,J,V Omit 3--3 H,V अधात् वर्णलोप आर्षः 4. B. अनर्घं 5 A,B,T Omit महाघनाः 6. झञ्झामा°

कथम्भूतः प्रादुर्बभूवेत्यत्राऽऽह - तत इति। ततः इन्द्रादेर्ध्यानानन्तरं गरुडस्यांसे स्कन्धे कृतौ निहितौ अङ्घ्रिपल्लवौ येन, पिशङ्गं वासो वस्त्रं यस्य, नवकञ्जे इव लोचने यस्य, अष्टौ आयुधयुक्ताः बाहवः यस्य, श्रीश्च कौस्तुभश्च अनर्घं किरीटश्च कुण्डले च उल्लसन्ति श्रीकौस्तुभादीनि यस्मिन् एवम्भूतोऽदृश्यत [1-] इति पूर्वेणाऽन्वयः [-1]।।५४।।

**विज०** महोरगा अजगराः दन्दशूकाः दंशनशीला स्सर्पाः।।४७,४८।।

स्तनयित्नवः सनिर्घाता मेघाः।।४९।।

सांवर्तकः प्रलयाग्निः अधाक् अदहत्।।५०।।

उद्वेलः तीरमतिक्रान्तः।।५१,५२।।

यत्र यदा, तत्र तदा ध्यातः।।५३,५४।।

**तस्मिन्प्रविष्टेऽसुरकूट कर्मजा माया विनेशु र्महिना[2] महीयसा[3]।**
**स्वप्नो[4] यथाहि प्रतिबोध आगते हरि स्मृति स्सर्व विपद्विमोक्षणम्[5]।।५५।।**

**दृष्ट्वा मृधे गरुडवाह मिभारिवाह[6] आविध्य शूल महिनोदथ कालनेमिः।**
**तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाऽहनन्नृप! सवाह मरिं त्र्यधीशः।।५६।।**

**मालीसुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तु[7]।**
**आहत्य तिग्मगदयाऽहन दण्डजेन्द्रं तावच्छिरोऽच्छिन दरेर्नदतोऽरिणाऽऽद्यः।।५७।।**

इति श्रीमद्भागवते महापुराणे
श्री वैयासिक्यां अष्टादशसाहस्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे देवासुरसङ्ग्रामे दशमोऽध्यायः।।१०।।

**श्रीध०** **तस्मिन्निति**। असुराणां कूटकर्ममन्त्रादिप्रयोगः तस्माज्जाताः महिना महिम्नाहरेः स्मृति रेव सर्वासां विपदां विमोक्षणरूपा[8], किमुत हरेः प्रवेश इत्यर्थः।।५६।।

दृष्ट्वेति। इभारिवाहः सिंहवाहः। अहिनोत् चिक्षेपलीलयैव[9] तद्गृहीत्वा अहनत् अहन्[10]। हे नृप!।।५६।।

**मालीति**। यस्य चक्रेण कृत्तशिरसौ पेततुः, तं तथाभूत मप्याहत्य संहत्य[11] अण्डजेन्द्रं गरुड महनत्। तं हन्तुं गदा मुन्निन्ये इत्यर्थः। आद्यो हरिः।।५७।।

---

1- -1. Omits इति पूर्वेणान्वयः 2. M,Ma 'महतां 3. A,B,G,J,T 'सः , 4. M,Ma 'सि M,Ma स्वाप्नो यथाऽहि: 5. M,Ma 'णी 6. M,Ma 'हा" 7. A,B,G,J,M,Ma,T 'स्तम् 8. A,B,T Omit वि 9. H,V 'तद्व 10. H,V Omit अहन् 11. A,B,J सङ्गत्य

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां दशमोऽध्यायः।।१०।।

**वीर०** [1-]ततः किम् अत आह[-1] - तस्मिन् भगवति प्रविष्टे आविर्भूते सति असुराणां कूटकर्ममन्त्रादि प्रयोगः तस्माज्जाता स्सर्वा मायाः [2-]महीयसोऽनेकमायाविनाशकस्य हरे[-2] र्भगवतो महिना महिम्नै[3]व विनेशुः विनष्टा बभूवुः, यथा प्रतिबोधे आगते जागरे प्राप्ते सति स्वप्नो नश्यति, तद्वदित्यर्थः[4]। हि यतः हरेः स्मृतिरेव सर्वासां विपदां विमोक्षणमपहन्तृ[5], किमुत श्रीभगवतः प्रादुर्भावः आपदाम्[6] अपहर्तेति वक्तव्यमिति भावः।।५५।।

मृधे युद्धे गरुडवाहं श्रीभगवन्तं दृष्ट्वा इभारिवाहः सिंहवाहनः[7] कालनेमिरसुरः शूल माविध्य भ्रामयित्वाऽहिनोत् चिक्षेप, तस्य गरुडस्य मूर्धनि[8]आपतत्[9] च्छूलं गृहीत्वा, हे नृप! तेनैव शूलेन त्र्यधीशः त्रिलोकेश्वरो[10] भगवान् सवाहम् इभारिवाहनसहितम् अरिम् शत्रुम्[11] कालनेमिमहनत् हतवा नित्यर्थः[12]।।५६।।

ततोऽतिबलौ मालिसुमाल्याख्यौ असुरौ यस्य भगवतश्चक्रेण कृत्तशिरसौ छिन्नशिरसौ युधि पेततुः। तत्र मालिनो विक्रमं कथयन् तस्य शिरश्छेदनं श्रीभगवच्चक्रकृतमाह-अथेति। अथ कालिनेमिवधानन्तरं माल्यवान् माली तं भगवदधिष्ठितं अण्डजेन्द्रं गरुडं तीक्ष्णया गदयाऽऽहत्य सङ्घट्य अहनत्ताडितवान्। तावन्नदतोऽरे माल्यवतः[13] शिरोऽरिणा चक्रेण आद्यो भगवांश्चिच्छेद। अत्र माल्यवच्छब्दो न श्रीरामायण प्रसिद्धमाल्यवद्विषयः, अपितु असुरान्तरविषयः[14]।।५७।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां दशमोऽध्यायः।।१०।।

**विज०** असुरकूटकर्मजाः असुरकपटकर्मजाताः। अत्र कैमुत्यन्यायमाह - हरिस्मृतिरिति। सर्व विपद्विनाशिनी, किमुत हरि रितीति।।५५।।

अहिनोत् अहितान् अमुञ्चत्। अरीनसुरान् वहतीत्यरिवाहः कुम्भकारशब्दवत् अण् प्रत्ययान्तः। अरिः सिंहो वाहो यस्य स तथा। इभारिवाह इति पाठे स्पष्टोऽर्थः।।५६।।

आहत्य भ्रामयित्वाऽण्डजेन्द्रो गरुडः आद्यो हरिः अरिणा चक्रेण नदतोऽरेः कालनेमेः शिरोऽच्छिन्न

1- -1. W. Omits 2- -2. W Omits 3 W. Omits एव 4.W. Omits इत्यर्थं 5. A,B,T हन्तृ 6. W. "पदपह" 7. W. "वाह: 8. W. मूर्ध्नि 9. A,B,T Omit पतत् 10. A,B,T केशो 11. W Omits शत्रुं 12. W. Omits इत्यर्थ 13. W. मालिनः 14. A,B,T परः।

दित्यन्वयः। अच्छिनदिति क्रियापदशक्ते र्द्विवारं कालनेम्यादीन् हतवान्हरिः इत्येषोऽर्थोऽभिविज्ञायते। 'छिदि(र) द्वैधीभावे' इति द्वैधीभावश्रवणात् "उशना जीवयामास" (भाग.8-11-47) इत्युत्तरवाक्याच्च द्विवारं हति रस्ति "कालनेम्यादय स्सर्वे हरिणा निहता अपि। शुक्रेणोज्जीविता स्सन्तः पुनस्ते वै निपातिताः"(ब्राह्मे) इति वचनाच्च निश्चितोऽयमर्थ इति।।५७।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमोऽध्यायः

(विजयध्वजरीत्या नवमोऽध्यायः)

oooOooo

# एकादशोऽध्याय:

## (विजयध्वजरीत्या दशमोऽध्याय:)

### श्रीशुक उवाच

अथो [1-]सुरा स्ते प्रतिलब्धचेतसः परस्य पुंसः पर[2]मानुकम्पया।
जघ्नुर्भृशं शक्रसमीरणादय स्तांस्तान् रणे यै रभिस[3]ङ्गताः पुरा।।१।।

वैरोचनाय संरब्धो भगवान्पाकशासनः।
उदयच्छद्यदा वज्रं प्रजा हाहेति चुक्रुशुः।।२।।

वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरःस्थितम्।
मनस्विनं [4]सुसंरब्धं विचरन्तं महामृधे।।३।।

नटवन्मूढमायाभि र्मायेशान्नो जिगीषसि।
जित्वा बालान् निबद्धाक्षान् [5]नटो हरति तद्धनम्।।४।।

आरुरुक्षन्ति मायाभि [6]रुत्सिसृप्सन्ति [7]ये दिवम्।
तान्दस्यून्विधुनोम्य[8]ज्ञ! पूर्वस्मा[9]च्च पदा दधः।।५।।

सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा।
शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिस्सह।।६।।

### बलिरुवाच

सङ्ग्रामे वर्तमानानां का[10]लचोदितकर्मणाम्।
कीर्तिं जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात्।।७।।

[11]तमिमं कालरशनं [12]जनं पश्यन्ति सूरयः।
न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डि[13]ताः।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

* एकादशे तु भगवत्कृपयाऽति बलोद्धतैः। अमरैस्समरे दैत्या बलिप्रभृतयो जिताः।।

---

1--1. A,B,G,J,M,Ma,T "राः प्रत्युपल" 2. A,G,J,M,Ma,T "या" 3. A,B,G,J,M,Ma,T सह" 4. A,B,G,J,M,Ma,T सु सम्पन्नं
5. M,Ma नमो 6. H,V "रुत्सर्पंति च, M,Ma "रुत्सि सृक्ष्यन्ति 7. W add "च 8. A,B,G,J,M,Ma,T ज्ञान् 9. H,V च्चापरादधः
10. M,Ma "लनो" 11. A,B,G,J,T तदिदं 12. A,B,G,J,M,Ma,T जना. 13. M,Ma "न·" *According to H,V Editions,

*एकादशेतु देवेषु दैत्यघातिषु नारदः। देवा नवारय च्छुक्रो मृतान्दैत्या नजीवयत्।।
वैरोचनायेति उदयच्छत् उग्निन्ये।।१-३।।

**नटवदिति**। निबद्धानि अक्षीणि येषां तान्बालान् जित्वा नटः कपटवृत्तिः यथा तेषां धनं हरति, तथा हे मूढ! मायेशा नस्मान् जेतु मिच्छसि।।४।।

मत्प्रभावं शृण्वित्याह - **आरुरुक्षन्ति** इति। आरुरुक्षन्ति आरोढुमिच्छन्ति ये च [1]उत्सिसृप्सन्ति [2]उल्लङ्घितुमिच्छन्ति, मोक्षमिच्छन्तीत्यर्थः। अधो विधुनोमि पातयामि।।५-७।।

**तमिति**। कालरशनं कालयन्त्रितम्। अतो न हृष्यन्ति। तत्र एवं विवेके यूय मपण्डिता अनिपुणाः।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

अथो अथ परमपुरुषस्य [3]परया उत्कृष्टया कृपया प्रत्युपलब्धम् आसुरीभि र्मायाभि रभिभूतं चेतो येषां ते शक्रवाय्वादयो देवा युद्धे पुरा पूर्वं यै दैत्यै र्विरोचनादिभिः अभिसंहिताः द्वन्द्वशः सङ्गताः, योद्धुमिति शेषः, तान् भृशंजघ्नुः।।१।।

तदेव प्रपञ्चयति-**वैरोचनायेति**। भगवान्पाकशासनः इन्द्रः सुसंरब्धः नितरां क्रुद्धः वैरोचनाय बलये यदा वज्र मुदयच्छत् बलिं हन्तु मुद्धृतवान् तदा प्रजाः [4]हाहेति हाहाकारं कुर्वत्य श्चुक्रुशुः रुरुदुः।।२।।

वज्रं पाणौ यस्य स इन्द्रः महायुद्धे विचरन्नं सुसंरब्धं मनस्विनं युयुत्सुं पुरतः स्थितं वैरोचनिं तिरस्कृत्य इदं वक्ष्यमाणमाह।।३।।

तावत्तिरस्कार प्रकारमाह - **नटवदिति** द्वाभ्याम् - तत एकेन वच आह - सोहमिति। हे मूढ! मायेशान् नः अस्मान् नटवत् मायाभिर्जेतु मिच्छसि। दृष्टान्तमेवोपपादयति - जित्वेति। निबद्धानि अक्षीणि येषां तान् बालान् अज्ञान् जित्वा नटः कपट वृत्तिः यथा तेषां धनम[5]पहरति, तथा।।४।।

मत्प्रभावं शृण्विति वदंस्तिरस्करोति - हे अज्ञ! [6]मूढ! पूर्वस्मात्पूर्वलब्धात् अधोऽधस्तनात् पदात् स्थानात् ये आरुरुक्षन्ति ओरोढुमिच्छन्ति उत्तरोत्तरं लोकं मारोढुमिच्छन्ति असुराः, ये च मायाभिर्दिवं [7]स्वर्गं उत्सिसृप्सन्ति उत्सर्पितु मिच्छन्ति तान् दस्युप्रायान् दुष्टजन्तु तुल्यान् अधुना विधुनोमि हन्मि।।५।।

---

^ According to A,B,J Editions 1. H,V उत्सर्पन्ति 2. A,B,J उल्लङ्घयितु ० 3. A,B,T परमया 4. A,B,T Omit हाहेति 5. W. Omits अप 6 W. Omits मूढ 7. W Omits स्वर्गं

दुर्मायिन स्तव शिरः सोऽहं शतं पर्वाणि यस्य तेन वज्रेण आयुधेन हरिष्ये। हे मन्दात्मन्! ज्ञातिभिस्सह घटस्व यथाबलं विक्रमस्व।।६।।

इत्थं तिरस्कृत उक्तश्चाऽऽह बलिः - **सङ्ग्राम** इति त्रिभिः। कालेन चोदितानि सुखदुःखजयापजयादि फलदानाय प्रवर्तितानि कर्माणि येषां तेषां सङ्ग्रामे युद्धे वर्तमानानां कीर्त्यादयः सर्वेषामनुक्रमात् कीर्त्यादि निमित्त कर्मपरिपाकानुक्रमात् स्युरेव। भवतामपि न सर्वदा कीर्त्यादतो बभूवुः। किन्तु तत्तन्निमित्त कर्मपरिपाकदशाया मेवेति, अस्माक मपि तथैवेति भावः।।७।।

तमिममनुक्रमेण[1] कीर्त्यादिमन्तं जनं कालरशनं काल यान्त्रितं कालोन्मिषित कर्मफलभोक्तारं सूरयः पण्डिताः पश्यन्ति। अत स्ते कीर्तिजयमृत्युषु न हृष्यन्ति, तद्विपरीते तु न शोचन्ति च। तत्रैवंविधे विवेके यूय मपण्डिताः अनिपुणाः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

देवासुरयुद्धमुपक्रम्य हरिणा चक्रेण कालनेमेः शिरोऽच्छिन्नदिति उपसंहृतम्। तत्राऽमरा मृता उत पलायिताः? विनष्टमरणधर्माणां तेषां विनाशायोगात्पलायनमेव ग्राह्यम्। भगवताऽनुगृहीत बलानां तद प्ययुक्तम्। अतस्तैः किमकारीति तत्राऽऽह - **अथो** इति। अनेन हरे रनुग्रहेणैव जयोऽन्यथा पराजय इत्यय मर्थः स्पष्टित इति ध्वनयति।।१।।

तत्र बलिवासवयोः प्रसक्तं युद्धं किमभूत्। अत्राऽऽह - **वैरोचनायेति**।।२।।

तत्र शत्रुं प्रहरिष्यता योधेन स्वपौरुषं प्रकाश्य प्रहर्तव्यमिति न्याय मनुसन्दधानो वज्रमुद्धृत्य वज्रपाणि स्तं वक्ति **वज्रपाणिरिति**।।३।।

स्वपौरुष प्रकटनमपि प्रतिभटनिन्दापूर्वक मित्यतस्तं निन्दति, जित्वेति। कश्चित्खलु इन्द्रजालादिना निबद्धाक्षान् बालान् जित्वा नभ आकाशश्चाऽऽच्छाद्य तेषां धनं यथा हरति, तथा ये मायाभिः कपटमिश्रव्रतैः दिवं परलोकमारुरुक्षन्ति, ततोऽपि उत्सिसृक्ष्यन्ति[2] ऊर्ध्वं गन्तु मिच्छन्ति अहं तान् दस्यून् पूर्वस्मा च्चक्रवर्तिपदात् अधो विधुनोमि। च शब्दात् तत स्ततो विधूयाऽधो निक्षिपामि। कदापि ऊर्ध्वदर्शन रहितान्करोमीत्यर्थः। यत्र नार्य पच्यवमुपच्यवश्च शिक्षित इत्यत्र यथोपमा लुप्ता तथाऽत्राऽपि। "मायाभि स्तूत्सिसृप्सन्त मिन्द्राद्या मारुरुक्षतः अवदस्यून् रधूनुथाः" इत्यृचं प्रमाणयन्ति।।४-७।।

---

1. W. 'मक्री' 2. A,B सृजन्ति

[1-]रशनं रज्जुः[-1] ।।८।।

न वयं मन्यमानानामात्मानं तत्र साधनम्।
गिरो व स्साधु शोच्यानां गृह्णीमो मर्मताडनाः।।९।।

[2-]श्रीशुक उवाच[-2]

इत्याक्षिप्य विभुं वीरो नाराचै वीरमानदः[3]।
आकर्णपूर्णै रहन दाक्षेपै[4] राहतं पुनः।।१०।।

एवं निराकृतो देवो वैरिणा तथ्यवादिना।
नाऽमृष्य त्तदधिक्षेपं तोत्राऽऽहत इव द्विपः।।११।।

प्राहिणो[5] त्कुलिशं तस्मा[6] अमोघ[7]मरिमर्दनम्[8]।
सयानो न्य[9]पतद्भूमौ[10] छिन्नपक्ष इवाऽचलः।।१२।।

सखायं पतितं दृष्ट्वा जम्भो बलिसखः स्सुहृत्।
अभ्यया[11] त्सौहृदं[12] सख्युर्हतस्याऽपि विचिन्तयन्।।१३।।

स सिंहवाह आसाद्य गदामुद्यम्य रंहसा।
जत्रावताडय च्छक्रं गजञ्च सुमहाबलः।।१४।।

गदा प्रहारव्यथितो भृशं विह्वलितो गजः।
जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ।।१५।।

ततो रथो मातलिना हरिभि[13] र्दशशतै[14] र्युतः।
आनीतो द्विपमुत्सृज्य रथ मारुरुहे विभुः।।१६।।

तस्य तत्पूजयन् कर्म य[15]न्तु र्दानवसत्तमः।
शूलेन ज्वलता तन्तु स्मयमानोऽहनन्मृधे।।१७।।

सेहे रुजं सुदु[16]र्मर्षां सत्त्वमालम्ब्य मातलिः।
इन्द्रो जम्भस्य सङ्क्रुद्धो वज्रेणाऽपाहरच्छिरः।।१८।।

---

1- -1. A. Omits 2- -2. H,V,W Omit 3. A,B,G,J,M,Ma,T मर्दनः 4. M,Ma ०दाशुगैः 5. A,B,G,J,M,Ma,T प्राहरत् 6. H,V स्मैह्यमो° 7. A,B,G,J,M,Ma, °घम्मर° 8. A,B,G,J °नः 9. W. °टपात° 10. H,V भिन्न 11. W. °त्सु° 12. A,B,G,J,T समाचरन्; M,Ma स्वमाचरन् 13. H,V हयैर्द°, M,Ma हरिर्द 14. A,B,G,J,M,Ma,T °र्वृतः 15. M,Ma शत्रोर्दा° 16. M,Ma °र्ण

**श्रीध नेति।** तत्र कीर्ति जयादावात्मानं देहं[1] साधनं मन्यमानां वो गिरो न गृह्णीमः, [2]मर्मसु ताडनं याभिस्ताः[2] ।।९।।

**इतीति।** विभु मिन्द्रम्। [3]वीरो बलिः ।।१०।।

**एवमिति।** तोत्र मङ्कुशः[4], तेनाऽऽहत इव।।११।।

**प्राहिणोदिति।** सयानो विमानसहितः। [5]बलिः भूमौ पपात[5]।।१२-१६।।

[6]**तस्येति।** यन्तुः मातलेः, तस्य इन्द्रस्य, आनयनं कर्म,पूजयन् जम्भः तं शूलेन अभ्यहनत्[6]।।१७-१८।।

**वीर०** तत्र कीर्त्यादावात्मानं देहं साधनं साधकं मन्यमानानां, अत एव साधुभिः शोच्यानाम्, अहो! अज्ञा एते इत्येवं शोच्यानां वो युष्माकं मर्मताडनाः मर्मसु ताडनं याभिस्ताः गिरो वयं न गृह्णीमो न साधु मन्यामहे।।९।।

इत्थं विभुमिन्द्र माक्षिप्य अधिक्षिप्य वीराणामानदो वीरो वैरोचनिः आक्षेपै रधिक्षेपवाक्यैः आहतं पुनः आकर्णान्तमाकृष्टैः नाराचै राहनत्।।१०।।

यथार्थवादिना वैरिणा बलिना एवं निराकृतः [7]तिरस्कृतो देव इन्द्रः तेन बलिना कृतमधिक्षेपं नाऽमृष्यत् नाऽसहत। तोत्रमङ्कुशः[8], तेन आहतो द्विपो गज इव।।११।।

किन्तु, तस्मै बलये अमोघमप्रतिहत मरीणां मर्दनं घातुकं[9] वज्रं कुलिशं प्राहरत् प्रायुङ्क्त। हे नृप! तस्मात्कुलिशप्रहारात् छिन्नपक्षः पर्वत इव सविमानो भूमौ, न्यपतदिति शेषः। "शयानो न्यपतद्भूमौ" इति पाठान्तरे तु न शेषः। "शयानो नृप!" इति पाठे तु शयानो [10]बभूवेत्यर्थः। बलेः सखा सुहृच्च जम्भोऽसुरःसखायं बलिं भूमौ पतितं दृष्ट्वा हतस्याऽपि सख्युर्बलेः सुहृदम्, भावप्रधानो निर्देशः, सौहार्दमाचरन् अभ्ययात् इन्द्रस्याऽभिमुखम्, अगादित्यर्थः।।१२,१३।।

सिंहो [11]वाहो वाहनं यस्य सः महाबलोजम्भः समीपमागत्य रंहसा बलेन वेगेन वा गदा मुद्यम्य शत्रुमिन्द्रं जत्रौ कण्टस्य मूलदेशे अताडयत्, तथा गजञ्च अताडयत्।।१४।।

भृशं गदा प्रहारेण व्यथितः अत एव विह्वलितो गज ऐरावतो जानुभ्यामवनीं स्पृष्ट्वा परं दुःखं लेभे।।१५।।

---

1. A,B,J Omit देहं 2--2. H,V Omit 3. H,V Omit वीरो बलिः 4. H,V °शम् 5- -5. A,B,J Omit 6- -6. A,B,J Omit 7. W. Omits तिरस्कृतः 8. A,B,T °श 9. A,B,T °त° 10 A,B,T अभूदित्यर्थः 11. A,B,T Omit वाहो

ततो गजस्य [1]कश्मलं [2]दुःखं दृष्टवता मातलिना हरिद्भिर्दशशतैः सहस्रसंख्याकैरश्वैर्युक्तो रथ आनीतः। त मानीतं रथं विभुरिन्द्रो गज मैरावत मुत्सृज्य आरुरुहे आरूढवान्।।१६।।

तस्य यन्तुर्मातलेः तत्कर्म रथानयनम्यं कर्म पूजयन् अहो! एवं विधेन सारथिना भवितव्यमित्येवं बहु मानयन् ज्वलता प्रकाशमानेन शूलेन तं मातलिं स्मयमानो युद्धे अहनत्।।१७।।

सत्त्वं धैर्यमवलम्ब्य मातलि र्दुस्सहा मपि रुजं शूलघातजां व्यथां सेहे असहत। ततः संक्रुद्ध इन्द्रो वज्रेण जम्भस्य शिरः अपाहरत् चिच्छेद।।१८।।

**विज०** तत्र जयादौ आत्मानं स्वं कारणं मन्यमानानां वो गिरः साध्विति न गृह्णीमः, मर्मण्येव ताडनं यासां ता स्तथोक्ताः।।९-१८।।

जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः।
नमुचिश्च बलः पाक [3]स्तत्रोपेयु स्त्वरान्विताः।।१९।।

वचोभिः [4]परुषै [5]रिन्द्रं घट्टयन्तोऽस्य मर्मसु।
शरैरवाकिरन्मेघा धाराभिरिव पर्वतम्।।२०।।

[6]हरीन्दशशता[7]न्याजौ हर्यश्वस्य बलश्शरैः।
तावद्भि रर्दयामास युगपल्लघुहस्तवान्।।२१।।

शताभ्यां मातलिं पाको [8-]रथञ्च तिलशः[-8] पृथक्।
सकृत्सन्धान मोक्षेण तदद्भुत मभूद्रणे।।२२।।

नमुचिः पञ्चदशभिः स्वर्णपुङ्खै र्महेषुभिः।
आहत्य व्यनदत्संख्ये सतोय इव तोयदः।।२३।।

सर्वतश्शरकूटेन [9]शत्रुं सरथसारथिम्।
छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः।।२४।।

अलक्षयन्तस्तमतीव विह्वला विचुक्रुशु र्देवगणा स्सहानुगाः।
अनायका श्शत्रु [10-]बलेन निर्जिताः[-10] वणिक्पथा भिन्ननवो यथाऽर्णवे।।२५।।

---

1. A,B,T Omit कश्मलं 2. W. Omit दुःखं 3. A,G,J,T "स्तत्राऽऽपेतु" 4. H,V पौ 5. A,B,G,J,M,Ma,T "न्द्र मर्द" 6. W. हरिं "द" 7. M,Ma "नाजौ 8--8. A,B,G,J,M,Ma,T रथं सावयवं 9. A,B,G,J,M.Ma,T शक्रं 10- -10. H,V बलैर्विमर्दिता; W बलैर्विसर्जिता

**नत स्तुराषाडिषुबद्धपञ्जरा[1] द्विनिर्गत स्साश्वरथध्वजाग्रणीः।**
**बभौ[2] दिशः खं पृथिवीञ्च रोचयन् स्वतेजसा सूर्य इव क्षपात्यये।।२६।।**

**निरीक्ष्य पृतनां देवः परै[3]रभ्यर्दितां मृधे[4]।**
**उदयच्छ द्रिपुं हन्तुं वज्रं वज्रधरो रुषा।।२७।।**

**[5-]स तेनैवाष्ट[-5]धारेण शिरसी बलपाकयोः।**
**ज्ञातीनां पश्यतां राजन् जहार जनयन्भयम्।।२८।।**

**श्रीध० जम्भमिति**। नमुचि, र्बलः, पाकश्चेति त्रयः आजग्मुः।।१९,२०।।

त्रयाणां पृथग्विक्रमानाह **हरीनिति** त्रिभिः हर्यश्वस्येन्द्रस्य तावद्भि र्दशभिश्शतैः।।२१,२२।।

**नमुचिरिति**। आहत्य इन्द्रं विद्ध्वा।।२३।।

**सर्वत इति**। प्रावृट् कालीनं सूर्यम्।।२४।।

**अलक्ष्यन्तेति**। वणिक्पथा वणिजः। भिन्ना नौ येषां ते (भिन्ननवः) [6-]अत्र दीर्घा भावः आर्ष[-6]ः।।२५।।

**तत इति**। तुराषाडिन्द्रः। अश्वादि सहितो विनिर्गतः। अग्रणीस्सारथिः।।२६-२८।।

**वीर०** तस्य जम्भस्य ज्ञातयो नमुचिबलपाकाख्या त्रयो नारदादृषेः जम्भं हतं श्रुत्वा त्वरयाऽन्विताः तत्र युद्धदेशे उपेयु राजग्मुः।।१९।।

ते परुषैर्वचोभिरिन्द्रं घट्टयन्तः[7] ताडयन्तः तिरस्कुर्वन्तः अस्य इन्द्रस्य मर्मसु स्थानेषु मेघा जलधाराभिः पर्वतमिव शरैरवाकिरन्।।२०।।

बलपाकनमुचीनां त्रयाणां विक्रमान् क्रमेणैकैकेनाऽऽह **हरिमिति**। बलोऽसुरः आजौ युद्धे[8] हर्यश्व स्येन्द्रस्य दशशतानि, अश्वानामिति शेषः। हरिमिन्द्रञ्च तावद्भिः एकाधिकदशशतैश्शरैः युगपत् अर्दयामास [9-]ताडयामास[-9]। असौ बलो लघुहस्तवान् शरसन्धानोपयुक्त कौशलाख्य लाघव युक्त हस्तवानित्यर्थः।।२१।।

पाकोऽसुरः शताभ्यां, शराणामिति शेषः। मातलिं रथञ्च पृथक् पृथक् अवयवशश्च युगपदेव शरसन्धान तन्मोक्षणयोगेन, रणे अर्दयामासेत्यनुषङ्गः। तत् सकृत्सन्धानमोक्षणं पृथगवयवशोऽर्दनात्मकञ्च कर्म अद्भुतमभवत्।।२२।।

---

1. H,V पुञ्ज°; W पुञ्ज 2. M,Ma °वौ° वि° 3. W. शरैः 4. A,B,G,J,M,Ma,T °रणे 5- -5. H,V तेनै शित° 6- -6. A,B,J Omit 7. A,B,T अर्दयन्तः 8. A,B,T सङ्ग्रामे 9- -9. A,B,T Omit

नमुचिस्तु स्वर्णमयाः पुङ्खाः मूलप्रान्तदेशाः येषां तैः पञ्च दशभिर्महद्भिरिषुभिः इन्द्रमाहत्य प्रताड्य सजलो मेघ इव स्वयं संख्ये व्यनद द्ध्वान।।२३।।

ततस्सर्वेऽसुराः प्रावृट्कालिकं सूर्यं मेघा इव रथसारथियुक्तमिन्द्रं सर्वतः शरवर्षेण छादयामासुः।।२४।।

तदा तमिन्द्र मलक्षयन्तोऽपश्यन्तः सहानुगाः सर्वे देवगणाः अतीव विह्वलचित्ता[1] अनायका विचुक्रुशुः। यथा महार्णवे भिन्ना नौर्येषां ते। (भिन्ननावः) दीर्घाभाव आर्षः। अत एव विसर्जिता वणिक्पथाः वाणिज्यवृत्तयः क्रोशन्ति, तद्वत्।।२५।।

तत स्तुराषाडिन्द्रः बाणपुङ्खानां पञ्जरात् साश्वरथध्वजसारथिर्विनिर्गतः क्षपात्यये निशावसाने सूर्य इव स्वतेजसा दिशः खमाकाशं पृथिवीञ्च प्रकाशयन् बभौ।।२६।।

असुराणां शरैरभ्यर्दितां पीडितां स्वसेनां निरीक्ष्य देवो वज्रधरः शक्रो रणे रिपूनसुरान् हन्तुं रुषा वज्र मुदयच्छत् उद्धृतवान्।।२७।।

स[2] इन्द्रोऽष्टौ धारा यस्य तेनैव वज्रेणैव बलपाकयो रसुरयोः शिरसी मूर्धानौ जहार चिच्छेद। किं कुर्वन्? हे राजन्! पश्यतां बलपाकयोः ज्ञातीनां, महत् भयं जनयन्।।२८।।

**विज०** शताभ्यां शतद्वयेन सन्धानयुक्तमोक्षेण मौर्व्यां सन्धानं ततो मोक्षणञ्च सकृद्युगपदिति तत्कर्म करण, अपश्यतामिति शेषः।।१९-२४।।

भिन्ननवः भिन्ननावः।।२५।।

तुराषाडिन्द्रः "आखण्डलस्तुराषाट्" ( हला.को.1-53) इति हलायुधः ।।२३-२८।।

**नमुचि स्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः।**
**जिघांसुरिन्द्रं नृपते! चकार परमोद्यमम्।।२९।।**

**अश्मसारमयं शूलं घण्टावद्धेमभूषणम्[3]।**
***प्रगृह्याऽभ्यद्रवत् क्रुद्धो[4] हतोऽसीति विभर्त्सयन्।**
**प्राहिणोद्देवराजाय निनदन्मृगराडिव।।३०।।**

1. A,B,T लितचि" 2. A,B,T Omit सः *विजयध्वजरीत्या श्लोकानुपूर्वी इत्थ मस्ति -प्रगृह्याऽभ्यद्रवत्क्रुद्धो नमुचि दनि वोत्तमः। तदा विध्य महावीर्यो हतोऽसीति विसर्जयन्। 3. A,B,G,J,T विनर्जयन् 4. H,V,M विनदन्

तदाऽऽपतद्गगनतले [1]महाजवं [2]विचिच्छिदे हरिरिषुभिस्सहस्रधा।
[3]तमाहनन्नृप[3]! कुलिशेन कन्धरे रुषाऽन्वित स्त्रिदशपति श्शिरोऽहरत्[4]।।३१।।

[5]न तस्य हि त्वच[5] मपिवज्र ऊर्जितो बिभेद यः सुरपति नौजसेरितः।
तदद्भुतं परमतिवीर्य वृत्रभित् तिरस्कृतो नमुचिशिरोधरत्वचा।।३२।।

तस्मादिन्द्रोऽबिभेच्छत्रो र्वज्रः प्रतिहतो यतः।
किमिदं दैवयोगेन [6]भूतं लोकविमोहनम्[6]।।३३।।

[7]येन पूर्वं [9]महाद्रीणां[7] पक्षच्छेदः प्रजा[8]क्षये।
कृतो निविशतां भारैः पतत्त्रैः पततां भुवि।।३४।।

तपस्सारमयं त्वाष्ट्रं वृत्रो येन विपाटितः।
अन्ये चा[10]ऽतिबलोपेताः सर्वास्त्रै रक्षतत्वचः।।३५।।

सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके।
नाऽहं तदाददे दण्डं ब्रह्मतेजोऽप्यकारणम्।।३६।।

**श्रीध०** **नमुचिरिति**। शोकामर्षाभ्यां युक्तया रुषा क्रोधेन अन्वितस्[11]सन् इन्द्रं हन्तुं परमो[12]द्यमं चकार।।९।।

**अश्मेति**। घण्टावत् घण्टाभिर्युक्तम्।।३०,३१।।

**नेति**। अतिवीर्यम् वृत्तं भिनत्तीति तथा।।३२-३३।।

**येनेति**। [13]तथा पतत्त्रैः पक्षैः।।३४।।

**तप** इति। सारमयं वीर्याधिकं त्वाष्ट्रं तप एव वृत्त्रः सयेन वज्रेण मया विपाटितः।।३५।।

**स इति**। दण्डं लगुडतुल्यं [14]कुलिशम्। ब्रह्मतेजो दधीचेः सामर्थ्यम्।।३६।।

**वीर०** ततो नमुचिः तयो र्बलपाकयोर्वधं दृष्ट्वा शोकामर्षाभ्यां युक्तया रुषा युक्तः, हे नृप! तं शक्रं हन्तु मिच्छुः परममुद्यमं यत्नं चकार।।२९।।

उद्यममेवाऽऽह - **अश्मेति**। अश्मसारमयं लोहमयं घण्टावत् घण्टाभिर्युक्तं हेममूषणं शूलं प्रगृह्य

---

1. H,V महाबलात्, W. महोल्कवत् 2. M,Ma नि" 3- -3. H,V तथाऽऽगतंनृप 4. A,B,G,J,M,Ma,T हरन् 5- -5. M,Ma ततोऽस्य न 6- -6. H,V भूतलोकं मुमोहयत्, W. भूतलोक विमोहयत् 7- -7 A,B,G,J,M,Ma,T येन म पूर्वं मद्रीणां 8. A,B,G,J,M,Ma,T "त्य" 9. H,V "बस" 10. A,B,G,J,M,Ma,T "ऽणि 11. A,B,T Omit सन् 12. A,B,J "द्योगं 13. H,V Omit तथा 14. H,V Omit कुलिशम्

क्रुद्धोऽभ्यद्रवत्। ततो हतोऽसीति विभर्त्सयन्[1] भ्रामयन् सिंहइव विनदन्[2] विनर्दन्[3] देवराजायेन्द्राय प्राहिणोत् प्रायुङ्क्त ।।३०।।

गगनतले महोल्कावत् आपतच्छूल मिन्द्रः शरै स्सहस्रधा विचिच्छिदे चिच्छेद। हे नृप! तत:[4] रुषायुक्तः त्रिदशपतिरिन्द्रः तं नमुचिं कन्धरे कण्ठे[5] कुलिशेन वज्रेण आसमन्तात् हनन् भिन्दन् तस्य शिरोऽहरत् हर्तु मारब्धवान्।।३१।।

यः सुरपतिनेन्द्रेण ओजसा बलेन ईरितः प्रयुक्तः ऊर्जितः बलवान् वज्ररसः तस्य नमुचे स्त्वचं चर्माऽपि न बिभेद भेत्तुं नाऽशक्नोदित्यर्थः। अतिवीर्यं वृत्रमभिनदिति तथाभूतो वज्रः नमुचेश्शिरोधरत्वचा तिरस्कृतः इत्येतत्परमद्भुतम्, आसीदिति शेषः।।३२।।

तस्माच्छत्रोः नमुचेः इन्द्रोऽबिभेत् भीतः बभूव[6]। कुतः? यतो वज्रः प्रतिहतो बभूव। तस्य भयनिमित्तां चिन्तां दर्शयति। इदं वज्र[7] विहतिः इत्येतत् किं दैवयोगेन भूतं जातम्। किं वा लोकं विमोहयज्ञातम्? लोकमोहनार्थं जातमित्यर्थः।।३३।।

अन्यथा काऽपि अप्रतिहतेन वज्रेण नैवं भवितव्यम् इत्याह **येनेति**। मे मया कर्त्रा येन वज्रेण। यच्छब्दस्य सोऽयमित्युपरिष्टात् तच्छब्देनाऽन्वयः। पूर्वं मद्रीणां पक्षच्छेदः कृतः, कथम्भूतानाम्? भारैः पतत्रैः पक्षैः भुवि पततां प्रजात्यये प्रजानाशने निमित्ते विशताञ्च।।३४।।

किञ्च! त्वाष्ट्रं त्वष्टु स्सम्बन्धि सारमयं वीर्याधिकं यत्तपः स एव वृत्रः त्वाष्ट्रं तप एव वृत्रः स येन वज्रेण विपाटितः। किञ्च अन्ये चाऽधुना बलिजम्भपाकबलादयोऽति बलाः अत एव सर्वै र्वज्रेतरै रस्त्रै रक्षताः त्वक् येषां ते निपातिताः।।३५।।

सोऽयमेवंविधो वज्रो मया तेनैव मया प्रयुक्तोऽल्पके तुच्छोऽसुरे नमुचौ प्रतिहतो बभूव। ब्रह्मतेजः दधीच[8] ऋषेः सामर्थ्यरूपमपि अधुना अकारणं निष्कारणं दण्डं लगुडतुल्यं जातम्। तं[9] वज्रं नाऽऽददे न परिगृह्णामि।।३६।।

**विज०** हरिरिन्द्रः आकाशतले आपतन्महावेगं शूलमिषुभि स्सहस्रधा विचिच्छिदे नितरामच्छिनत्। कन्धरे कण्ठे शिरो हरन् छिन्दन् तमहनदित्यन्वयः।।३१।।

---

1. A,B,T वितर्जयन् 2. W. Omits विनदन् 3. A,B,T Omit विनर्दन् 4. W. Omits ततः 5. A,B,T add शितेन 6. A,B,T अभवत् 7. A,B,T प्रतिहतिः 8. A,B,T "चेः सा" 9. A,B,T Omit त

ततः किमभूत्? तत्राऽऽह- तत इति। तिरस्कृतो धिक्कृतः।।३२।।

भूतं ग्रहलक्षणम्।।३३।।

पतत्रैः पततां भारैः भुवि निविशतामद्रीणाम्।।३४।।

तपस्स्मरम् अयम् इति पदच्छेदः।।३५,३६।।

**इति शक्रं विषीदन्त माह वागशरीरिणी।**
**नाऽयं शुष्कै रथोनार्द्रैर्वध मर्हति दानवः।।३७।।**

**मयाऽस्मै यद्वरो दत्तो मृत्यु[1] र्नैनाऽऽर्द्रशुष्कयोः।**
**अतोऽन्य श्चिन्तनीय स्ते ह्युपायो[2]मघवन् रिपोः।।३८।।**

**तां दैवीं गिर माकर्ण्य मघवा[3] सुसमाहितः।**
**ध्यायन् फेनमथाऽपश्यदुपाय मुभयात्मकम्।।३९।।**

**न शुष्केण नचाऽऽर्द्रेण जहार नमुचे श्शिरः।**
**तं तुष्टुवु र्मुनिगणा माल्यै[4]श्चाऽवाकिरन्विभुम्।।४०।।**

**गन्धर्वमुख्यौ जगतुः विश्वावसुपरावसू।**
**देवदुन्दुभयो[5] नेदु र्नर्तक्यो ननृतु र्मुदा।।४१।।**

**अन्येऽप्येवं प्रति द्वन्द्वान् वाय्वग्निवरुणादयः।**
**सूदयामासु रस्त्रौघै र्मृगान्केसरिणो यथा।।४२।।**

**ब्रह्मणा प्रेषितो [6-]देवान्देवर्षि[-6]र्नारदो नृप।**
**वारयामास विबुधान् दृष्ट्वा दानवसंक्षयम्।।४३।।**

**नारद उवाच**

**भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः।**
**श्रिया समेधिता स्सर्वे उपारमत विग्रहात्।।४४।।**

**श्रीध०** **मयेति।** आर्द्रशुष्काभ्यां मृत्युर्नैवेति।।३७-३९।।

---

1. A,B,G,J,M,Ma,T "त्युनैवा" 2 A,B,G,J,M,Ma,T उ" 3 A,B,G,J,M,Ma,T "वान्सु" 4. W माल्यानिचाऽकि"
5. H,V "काः" 6--6. H,V देवो देवर्षिर्ना " , W देवो भगवाञ्ञा"

उभयात्मकत्व मेवाऽऽह - नेति। न शुष्केण नचाऽऽर्द्रेण फेनेन! तथा च श्रुतिः - "अपां फेनेन नमुचे शिर इन्द्रोदवर्तयत्" इति ।।४०-४४।।

**वीर०** इति विषीदन्त मित्थं क्लिश्यन्त मिन्द्रमशरीरिणी परा देवता वाक् उवाच। तदेवाऽऽह नेति सार्धेन। अयं दानवो नमुचिः शुष्कै रथो आर्द्रैरपि वधं नाऽर्हति।।३७।।

कुतःयतो मयाऽस्मै नमुचये यो[1] वरो दत्तः। कोऽसौ? आर्द्र शुष्काभ्यां मृत्युरस्य नैव भूया दित्येषः। अतो वज्रस्य शुष्कत्वात् न तेनाऽयं हन्यते। किन्तु हे मघवन्! अस्य रिपोर्वधार्थं त्वया अन्य एवोपायः चिन्तनीयः।।३८।।

[2]एवम्भूतां दैवी गिरं श्रुत्वा मघवा इन्द्रः सुसमाहितो भूत्वा ध्यायन् नाऽऽर्द्र शुष्कात्मकं वस्तु चिन्तयन् तदुभयात्मकं वस्तु फेनमपश्यत्, फेनमुभयात्मकं निश्चितवान्।।३९।।

तदेवाऽऽह - न शुष्केण न चार्द्रेण, किन्तूभयात्मकेन फेनेन तदुपलिप्तेन वज्रेण नमुचे शिरो जहारेत्यर्थः। तं नमुचे र्हन्तारमिन्द्रं मुनिगणा स्तुष्टुवुः। माल्यानि पुष्पाणि च [3]अकिरन् ववर्षुः।।४०।।

गन्धर्व श्रेष्ठौ [4]विश्वावसु परावसू[4] जगतुः गानं चक्रतुः। देव दुन्दुभयो नेदु र्दध्वनुः, नर्तक्यः स्त्रियः मुदा ननृतुः।।४१।।

यथेन्द्र स्तथाऽन्येऽपि वाय्वादयः प्रतिद्वन्द्वा न स्त्रौघैः सिंहाः क्षुद्रमृगानिव सूदयामासुर्जघ्नुः।।४२।।

एवं देवै र्दानवेषु हन्यमानेषु दानवसंक्षयं दृष्ट्वा यावद्दानव संक्षयो भविष्यतीत्यालोचितवता ब्रह्मणा चतुर्मुखेन प्रेषितो भगवान्नारदः हे नृप! विबु[5]धानिन्द्रादीन् [6]वारयामास।।४३।।

नारदकृत निवारण प्रकारमेवा[7]ऽऽह - भवद्भिरिति। नारायणस्य भुज एवाऽऽश्रयो येषां तैः ; हेतुगर्भ मिदम्। भवद्भिरमृतं लब्धम् पीतमिति यावत्। तथा श्रिया त्रैलोक्यलक्ष्म्या च सर्वे समेधिताः। अतोऽधुना विग्रहात्कलहात् उपारमत।।४४।।

**विज०** कुतो नाऽर्हति वधम्? अत्राऽह - मयेति। कोऽयं वरः? इति तत्राऽऽह - मृत्युरिति।३७-४४।।

1 W यद्वरो॰ 2 A,B,T add इति 3 A,B,T अवा किं॰ 4 -- 4 A,B,T विश्वा वसुः परावसुश्च 5 A,B,T ॰धर्वमानी॰
6 A,B,T निवा॰ 7 A,B,T ॰माऽऽह

श्रीशुक उवाच

संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः।
[1] उपगीयमानानुचरै र्ययुस्सर्वे त्रिविष्टपम्।।४५।।

येऽवशिष्टा रणे तस्मिन् नारदानुमतेन ते।
बलिं विपन्नमादाय [2] ह्यस्तङ्गिरि मुपागमन्।।४६।।

[3] तदाऽविनष्टावयवान् विद्यमानशिरोधरान्।
उशना जीवयामास सञ्जीविन्या स्वविद्यया।।४७।।

बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः।
पराजितोऽपि नाऽखिद्य ल्लोकतत्त्वविचक्षणः।।४८।।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां अष्टमस्कन्धे
देवासुरसङ्ग्रामे एकादशोऽध्यायः।।११।।

**श्रीध० संयम्येति**। अनुचरै रनुगीयमाना इत्यर्थः। उपगीयमानै रनुचरैस्सहेति वा।।४५,४६।।

**तदेति**[4]। विनष्टा अवयवा येषाम्। विद्यमाना शिरोधरा येषां तान्।।४७।।

**बलिरिति**। प्रत्यापन्नानि पुनः प्राप्तानीन्द्रियाणि स्मृतिश्च येन सः।।४८।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां एकादशोऽध्यायः।।११।।

**वीर०** एवम्भूतं मुनेर्नारदस्य वचो मानयन्तो देवाः मन्युं तत्प्रयुक्तं युद्धोद्यमञ्च [5] संयम्य उपसंहृत्य सर्वे इन्द्रादयो देवाः अनुचरै रुपगीयमानाः सन्धिरार्थः। त्रिविष्टपं स्वर्गलोकं ययुः।।४५।।

तत स्तस्मिन् रणे ये हतावशिष्टा दानवाः दैत्याश्च ते सर्वे नारदस्याऽनुज्ञया विपन्नं वज्रप्रहारेण भूमौ शयानं बलिमादाय अस्ताद्रिम् [6] उपजग्मुः।।४६।।

तत्राऽस्ताद्रौ उशना भार्गवः [7] अविनष्टा अवयवाः येषां, विद्यमाना शिरोधरा येषां तानसुरान् आत्मनः

1. B,M,Ma गीयमाना अनु॰ 2. A,B,G,J,M,Ma,T अ॰ 3. A,B,G,J,M,Ma,T तत्राऽ॰; H,V तदा वि॰ 4. A,B,T अवि॰
5. A,B,T Omit संयम्य 6. A,B,T ययु. 7. A,T Omit अविनष्टाः

[1] स्वस्य सम्बन्धिन्या। अनेन अनितरसाधारणत्वं सूचितम्। मृतसञ्जीविन्याख्यया विद्यया मन्त्रविद्यया जीवयामास[2]।।४७।।

बलिश्च उशनसा संस्पृष्टः प्रत्यापन्नानि पुनः प्राप्तानि इन्द्रियाणि स्मृतिश्च येन सः। पराजितोऽपि नाऽखिद्यत् [3]नाऽखिद्यत। [4]तत्कृतः? यतो[5]ऽसौ लोकतत्त्वविचक्षणः लोकानां प्रकृति संसृष्टजीवानां यत्तत्त्वं कर्मायत्त जयापजय सुखदुःखादि फलभोक्तृत्वरूपं, तत्र विचक्षणः तत्परिशीलन निपुणः।।४८।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकादशोऽध्यायः।।११।।

**विज०** ते च अनुचरैः सङ्गीयमाना इत्यर्थः। संरम्भं द्वेषोद्रेकम्।।४५ - ४८।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे एकादशोऽध्यायः।।११।।

(विजयध्वजतीर्थरीत्या दशमोऽध्यायः)

1 A,B,T स्वस" 2. A,B,T add इत्यर्थः 3. A,B,T Omit नाऽखिद्यत 4. W. Omits तत् 5. A,B,T Omit असौ

०००0०००

# द्वादशोऽध्यायः

## [1-]श्रीशुक उवाच[-1]

वृषध्वजो निशम्येदं योषिद्रूपेण दानवान्।
मोहयित्वा सुरगणान् हरि स्सोम मपाययत्।।१।।

वृष मारुह्य गिरिश स्सर्वभूतगणैर्वृतः।
[2-]सह देव्या[-2] ययौ द्रष्टुं यत्रास्ते मधुसूदनः।।२।।

सभाजितो भगवता सादरं सोमया भवः।
सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन्हरिम्।।३।।

## [3-]श्रीमहादेव उवाच[-3]

देव देव जगद्व्यापिन्! जगदीश जगन्मय।
सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः।।४।।

*आद्यन्तौ[4] चास्य यन्मध्यमिदमन्यदहं बहिः।
[5]यस्याव्ययस्य नैतानि तत्सत्यं ब्रह्म चिद्भवान्।।५।।

तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः।
विसृज्योभयतस्सङ्गं मुनयस्समुपासते।।६।।

त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्द मात्र मविकार मनन्य दन्यत्।
विश्वस्य हेतु रुदयस्थिति संयमाना मात्मेश्वरश्च त[6]दपेक्षतयाऽनपेक्षः।।७।।

एकस्त्वमेव सदसद्द्वयमद्वयञ्च स्वर्णं कृताकृत मिवेह न वस्तुभेदः।
अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गु[7]णव्यतिकरो निरुपाधिकस्[8]य।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम्। भवं सम्मोहयामास हरिः पुन रसान्त्वयत्।।
अमुह्यन्नसुरा विष्णुमायया न तदद्भुतम्। इति वक्तुं महादेवमोहोऽयमुपवर्ण्यते।।

---

1--1. A,B,G,J,T श्री बादरायणिरुवाच 2--2. W. सहोमया 3--3. H,M,Ma,V,W Omit 4 M,Ma मेव * This verse is not found in M,Ma Edns , 4. A,B,G,J,T, "न्ता वस्य 5. A,B,G,J,T यतोऽव्य" 6. M,Ma "द्" 7. A,B,G,J,T "द्गुणेर्व्य " 8. M,Ma "क्ष"

**वृषध्वज** इति । श्रीहरिस्सोममपायदितीदं निशम्य स यत्रास्ते तत्र तद्रूपं द्रष्टुम् , ययावित्युत्तरेणान्वयः।।१,२।।

**सभाजित** इति। सोमया उमया सह।।३।।

*त्वयि किञ्चिन्न चाश्चर्यं वयन्त्वाश्चर्यमानसाः। इति वक्ष्यन्महादेवस्तुष्टाव हरिमष्टभिः। त्वयि महामायाविनि परमेश्वेर नहि [1]किल किञ्चिदघटितमिव। वयन्तु परमकौतूहलेन द्रष्टु मागता इति बहुधा सम्बोधयन् स्तौति - **देवदेवेति** । हे देवदेव! कुतोऽहं देवानां देव इत्यत आह - हे जगद्व्यापिन्! तत्कुतः? हे जगन्मय! तर्हि किं प्रधानम् न? हे जगदीश! तच्च कुतः? तत्राह - सर्वेषामपि त्वं हेतुः, अत ईश्वरः। [2]आत्मा च आत्मत्वाच्च न जडं प्रधानं त्वमित्यर्थः।।४।।

ननु जगन्मयत्वोक्त्या जगत उत्पत्त्यादिनाऽसत्यत्वे [3]न च जाड्ये न च ममापि किं तथात्वं ब्रूषे? नहि नहीत्याह - **आद्यन्ताविति**। अद्यन्तौ मध्यश्चास्य जगतो यतो ब्रह्मणो भवन्ति, यस्य चाऽव्ययस्य एतान्याद्यन्त मध्यानि न सन्ति। यच्च ब्रह्म [4-]इदं कार्यास्पदं[-4] दृश्यमहङ्क[5]रणास्पदं द्रष्ट च बहिर्भोग्यमन्यद्भोक्तृ च। [6-]अयञ्च धर्मो जगत एव नत्वव्ययस्य[-6]। [7]तत्तस्मात् सत्यञ्च चिद्रूपञ्च ब्रह्मैव भवान्। अतो न तव विकारादि शङ्केत्यर्थः।।५।।

तवैवम्भूतत्वे मुमुक्षूणामाचारः प्रमाणमित्याह - **तवै** वेति । उभयत इहाऽमुत्र च सङ्गं त्यक्त्वा।।६।।

ननु ब्रह्मैवचेदहंतर्ह्यसङ्गोदासीनस्य मम [8]चरणाम्भोजोपासनया किं तेषाम्? तत्राह - **त्व** मिति। ब्रह्मत्वेऽपि त्वं नात्यन्त मुदासीनः, किन्तु विश्वस्य प्रपञ्चस्य उदयादीनां हेतुः, तदुपाधीना मात्मनां जीवाना मीश्वरश्च [9]तत्तत्फलदाता। तर्हि किं राजादिवत्कयाऽप्यपेक्षया सेवकेभ्यः [10]सेवाफलं ददामि [11]नहि नहि अनपेक्ष एव त्वम् । तर्हि किमीश्वरत्वेन? तत्राह - तै रात्मभि स्तत्फलदानार्थ मपेक्ष्यत इति तदपेक्षः तस्य भाव स्तदपेक्षता, तथा। अनपेक्षत्व मेव दर्शयितुं तदीयं ब्रह्मत्वं विशिनष्टि । पूर्णममृतञ्च सुखरूपम्। विषयसुख वैलक्षण्यार्थमाह - अविकारं नित्य मानन्द मात्रञ्च। कुतः ? विशोकम् तत्कुतः? विगुणम्। किञ्च, अनन्यत् न विद्यतेऽन्यद्यस्मात् [12]तस्मात्। [13]ब्रह्मव्यतिरिक्ताभावादपि निरपेक्ष स्त्वमित्यर्थः। तर्हि सर्वात्मकत्वे तत्तद्विकार

* श्रीधरीयोऽयं श्लोकः 1 A,B,J Omit 2. B,H,J,V Omit आत्माच 3. H,V omit नहि 4 - - 4. A,B, इदंकारास्पदं 5. A,B,J "रास्पदं" 6 - - 6. B,H,J,V Omit 7. B,H,J,V Omit तस्मात् 8. A. "म्बु" 9. H,V Omit तत् 10 A,B,J Omit सेवा 11. H,V, Omit नहि 12. A,B,J Omit तस्मात् 13 H,V तद्ध"

प्रसङ्गो दुर्वारः। तत्राह - अन्यत् सर्वतोव्यतिरिक्तञ्च कारणत्वात्। न ह्येवम्भूतसुखात्मकब्रह्मस्वरूपस्य तवान्यापेक्षाऽस्ति। अतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यम् न स्वार्थ मित्यर्थः।।७।।

अन्यत्व मनन्यत्वञ्च एकस्य कुत इत्याशङ्क्य दृष्टान्तेनोपपादयति - एक इति। सदसत्कार्यकारणरूपं, द्वयमद्वयञ्च परमकारणं त्वमेवैकः। कृतं कुण्डलादिरूपं द्वयमकृतञ्च केवलमद्वयं स्वर्णं यथैकमेव तद्वदेवेह त्वयि, वस्तुतो भेदो नास्ति। कथं तर्हि भेदप्रतीतिः? तत्राह - अज्ञानत इति। कुतः यस्मान्निरुपाधिकस्यैव, तवायं गुणैर्व्यतिकरो भेदेन स्वतः।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

भगवन्मायया दैत्या मुमुहु रिति न विचित्रम्, यतो रुद्र एव मुमोह इति वक्तु मध्यायः प्रवर्तते - वृषध्वज इति। हरिः योषिद्रूपेण दानवान्मोहयित्वा सुरगणान् सोम मपायय दितीदं निशाम्य[1] श्रुत्वा वृषध्वजो रुद्रो भवान्या सह वृष मारुह्य सर्वै र्भूतगणैः प्रमथादिभिः परिवृतो यत्र मधुसूदनो वर्तते तत्र योषिद्रूपं द्रष्टुं जगाम।।१,२।।

सोमया उमया सह सादरं यथा तथा भगवता सभाजितः सत्कृते। भवो रुद्रः सम्यगुपविष्टो हरिंप्रतिपूज्य स्मय न्निदं वक्ष्यमाण मुवाच। प्रतिपूजाऽत्र स्तुतिः।।३।।

तामेवाह - देवदेवेत्यादिभि रष्टाभिः[2]। तत्र असुरसम्मोहनाय धृतं योषिद्रूपं मह्यं[3] दर्शयेति प्रार्थयितुकामो नटेनेव बला नसुरान् वञ्चयितुं मया धृतं कपटपुंश्चलीरूपं द्रष्टुं किमिच्छसीति माप्रत्याचष्टेति अभिप्रयन् कृत्स्न जगदुदय विभव लयबन्धमोक्षलीलस्य अचिन्त्यविविध विचित्रशक्तेस्तव तद्योषिद्रूपं धर्म प्रतिपक्षजगदुपद्रव कृद सुरमोहनेन तद्विनाशार्थत्वात् रामकृष्णादिरूपवत् लीलया आत्मीयसङ्कल्पेन धृतं दर्शनीय मेव। अन्यथा प्रकृतिपुरुषविलक्षणस्य अवाप्तसमस्तकामस्य निरतिशयानन्दमहोदधेः तवेदं प्राकृतस्येव न घटते इति वक्तुमनितरसाधारणैर्धर्मैः सम्बोधयति देवदेवेति। हे देवदेव! देवाना मस्मदादीनामपि देव! हे जगद्व्यापिन्। जगद्व्यापित्वं न वाय्वाकाशादिवत् तूष्णीम्, अपितु प्रशासनेत्यभिप्रायेण सम्बोधयति जगदीशेति।[4] हे जगदीश! हे जगत्प्रशासितः! जगच्छब्दः कार्यावस्थचिदचिदात्मकजगत्परः। न केवलं जगदीशः, अपितु तद्रूपश्चेत्यभिप्रायेण सम्बोधयति जगन्मयेति। हे जगत्प्रचुर! तत्प्रचुरत्वञ्च तच्छरीरकत्वेनेत्यभिप्रेत्य

---

1. A,B,T Omit निशाम्य 2. A,B,T "ष्ट" 3. W. मे 4. W. Omits हे जगदीश!

तत्प्रतिसम्बन्ध्यात्मात्वमेवेत्याह- सर्वेषा मपि चेतनाचेतनात्मकानां भावानां पदार्थानामात्मा त्वमेव। आत्मत्व मन्तः प्रविश्य धारकत्वम्। न केवलमात्मैव अपि तु हेतुः कारणभूत ईश्वरः कारणावस्थ चिदचिन्नियन्ता च त्वमेवेत्यर्थः[1]।।४।।

एवं कार्य कारणोभयावस्थचिदचिदात्मकत्वं [2]कृत्स्नजगत्कारणत्वञ्चोक्तम्[2]। तत्र कारणत्वम्उपादानत्वरूपं निमित्तत्वरूपञ्चेति द्विविध मभिप्रेतम्। तत्र ताव दुपादानत्व मुपपादयन् तत्प्रयुक्तं विकारं परिहरति - **आद्यन्ता** विति। यत इति 'सार्वविभक्तिक स्तसिः'। ततश्च यतो यस्मिन् येन यदिति लभ्यते। अस्य जगत आद्यन्तौ - आदिः सृष्टिः उत्पत्तिः, यतः सूक्ष्म चिदचिद्विशिष्टात् अस्यान्तो लयो यस्मिन्, अस्य मध्यं स्थितिर्येन, यच्चेदं विश्वं, यच्चाऽन्यत् जगतो विलक्षण महं प्रत्यगर्थशरीरकं बहिः परागर्थशरीरकञ्च, यस्याव्ययस्य प्रकृतिपुरुषगतविकार रहितस्य च एतान्याद्यन्त मध्यानि न सन्ति एतेषां शरीरभूत चिदचिद्गतत्वादिति भावः। तदेवम्भूतं सत्यं स्वरूपतः स्वभावतश्च विकाररहितं चित् नित्या सङ्कुचिता परिच्छिन्न ज्ञानाश्रयं, तदात्मकत्वञ्च ब्रह्मस्वरूपेण गुणैश्च निरतिशयबृहत् भवानेव। आद्यन्ता वित्यादिना जगत्कारणत्वे नोक्तस्य स्वरूपं विशोध्यते - तत्सत्यं ब्रह्मचिदिति। यथा "सत्यं ज्ञानमनन्तं ब्रह्म"(तैत्ति.उ 2.1.1) इत्यनेन जगत्कारणत्ववादिवाक्योक्तं स्वरूपं विशोध्यते। तद्वत् सत्यादिवाक्यार्थोऽत्रानुसन्धेयः।।५।।

सत्यशब्देन सत्यशब्दस्य चिद्ब्रह्मशब्दाभ्यां ज्ञानानन्तपदयोश्चात्र प्रत्यभिज्ञानात्। कश्च ध्येयः, "कारणन्तु ध्येयः" (अथ.शिखा.उ.2 17) इति जगत्कारणत्वं समनियतत्वमुपास्यत्वमनितरसाधारण[3]त्वाञ्चाऽऽह **तवै** वेति। यतो जगत्कारणभूतस्त्वमतस्तवैव चरणाम्भोजं निःश्रेयसकामा मुमुक्षवः उभयत इहामुत्र च सङ्गं त्यक्त्वा निराशिषः अनन्यप्रयोजना मुनयो [4]मननशीला भक्ताः[4] त्वत्स्वरूपरूपगुणविभूति मननशीला [5]इत्यर्थः। समुपासते सम्यक् विघ्नैरनभिभूयमानास्सन्तः उपासते समीपमासते इत्यर्थः[5]।।६।।

अथ लीलार्थ मेव योषिद्रूप मुपात्तम्, अन्यथा प्रकृति पुरुष विलक्षणस्य प्राकृतवन्न घटते इत्यभिप्रयन् प्रकृति पुरुषयो रसम्भावितैर्धर्मै र्विशिष्टं वेदान्तवेद्यं जगन्निमित्तकारणं स्तौति - **त्वमिति**। त्वं ब्रह्मस्वरूपेणगुणैश्च निरतिशय बृहत् ब्रह्म शब्दवाच्यं परमात्वतत्त्वं त्वमेव। किं तद्ब्रह्म, यत्पूर्णं सर्वव्याप्यमृतं स्वरूपतः स्वभावतश्च विकार रहितं ब्रह्मामृतशब्दाभ्यां सत्यादिवाक्योदितं प्रत्यभिज्ञापितम्। पूर्ण पदेन

1. W. Omits इत्यर्थः 2- -2. A,B,T Omit 3. W. णमाऽऽह 4- -4. W. Omits 5- -5. W. उपासते

"तेनेदं पूर्णं पुरुषेण सर्वम्" ( श्वेता.उ. 3-9 ) इति वाक्योदितम्। अत्र पूर्णशब्दः कर्तरि क्तान्तः। विगुणं स्थौल्यादि गुणरहितम्। अनेन "अस्थूल मनण्वह्रस्वम्" (बृह.उ. 3-8-8) इत्याद्यस्थूलादि वाक्योदितं प्रत्यभिज्ञापितम्। विशोक मित्यनेन "य एष आत्माऽपहतपाप्मा" ( मैत्रा.7-7 )इत्यादि दहरवाक्योदितम्, आनन्दमात्र मित्यनेन "विज्ञान मानन्दम्" ( बृह.उ. 3-9-28 ) इत्यादिवाक्योदितम्। मात्रचा दुःख सम्भेदव्युदासः। अविकार मित्यनेन "निष्क्रियं निष्कलम्" (श्वेता.उ.6-19) इत्यादिवाक्योदितं निरवद्यत्व प्रत्यभिज्ञानात् अन्यत् सर्व शरीरकत्वात् सर्वकारणत्वाच्च सर्वस्मात् प्रकृति पुरुषात्मका ज्जगतोऽनन्यत्। अनेन "एतदात्म्य मिदं सर्वम्" ( छान्दो.उ. 6-8-7 ) "तत्सत्यम्" (छान्दो.उ. 6-8-7 ) "स आत्मा" (छान्दो.उ.6-8-7 ) "अयमात्मा ब्रह्म" ( बृह.उ. 6-4-5 ) "तत्वमसि" ( छान्दो.उ. 6-8-7 ) "सर्वं खल्विदं ब्रह्म" (छान्दो.उ.3-14-1) इत्यादि वाक्यार्थः प्रत्यभिज्ञापितः। अन्यत् शरीराच्छरीरिणो भिन्नत्वात् अन्यत्। अनेन "य आत्मनि तिष्ठन्" ( ब्रह्म.उ.3-7-22 ) "यः पृथिव्यां तिष्ठन्" (बृह.उ.3-7-3 ) इत्यादि श्रुत्यर्थः प्रत्यभिज्ञापितः। विश्वस्योदय स्थिति संयमानां सृष्टिस्थितिलयानां हेतुरित्यनेन "सदेव सौम्येद मग्र आसीत्" (छान्दो.उ. 6-2-1 ) "अनेन जीवे नाऽऽत्मनाऽनुप्रविश्य सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतना स्सत्प्रतिष्ठाः" (छान्दो.उ. 6-3-2 ) इत्यादि कारणवाक्यार्थः आत्मेश्वर अनन्येश्वरः [1]अनेन "पतिं विश्वस्यात्मेश्वरम्" (म.ना.उ. 9-3 ) "न तत्समश्चाऽभ्यधिकश्च दृश्यते" ( श्वेता.उ. 6-8 ) "स्वे महिम्नि प्रतिष्ठितः" (छान्दो.उ. 7-24-1 ) इत्यादि श्रुत्यर्थोऽनुसंहितः। यद्वा, विश्वस्य चिदाचिदात्मकस्य आत्मा तदुदय स्थितिसंयमानां व्यापाराणां तदपेक्षतया कर्मभूतोक्तविधपरमात्मस्वरूपापेक्षतया तदुदयादीना मीश्वरः कर्तृभूतश्चेत्यर्थः। अनेन पूर्वमभिप्रेतं निमित्तकारणत्व मुपपादितं भवति। एवम्भूतोऽपि त्व मनपेक्षः अपेक्षा रहितः अनादरः सर्वमिदं कल्याणगुणजात मभ्याददानोऽप्यनादरः। अनेन " सर्व मिदमभ्यातोऽवाक्यनादरः" (छान्दो.उ. 3-14-2 ) इति श्रुत्यर्थोऽनुसंहितः। अवाप्त समस्त कामत्वेन अपेक्षणीयत्वाभावा दनादरः। अत एव अवाक् अजल्पाकः, परिपूर्णैश्वर्यत्वात् " ब्रह्मादिस्तम्ब पर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीनः" इति श्रुत्यर्थः [2-]प्रत्यभिज्ञापित इत्यर्थः[-2]।।७।।

अनन्यदन्य दित्युक्ते अनन्यत्वान्यत्वे उपपादयति - एक इति। सदसत् चिदचिदुभयात्मकं जगत्त्वमेक

1. A Omits अनेन 2- - 2. W. Omits

एव। कार्यभूता ह्विदचिदुभयात्मकत्वात् जगतः तत्कारण भूतस्त्वमभिन्न एवेत्यर्थः। कार्यकारणयो रभेदादिति भावः। ननु कार्यकारणाभ्यां सजातीयाभ्यामेव भवितव्यम्। कार्यञ्च जगत् चिदचिदात्मकम्। अहन्तु तदुभय विलक्षणत्वेन त्वयैवाभिहित इत्याशङ्कां निर्ग्चिकीर्षुर्विशिनष्टि - एक इति। एकः नामरूपविभागानर्हसूक्ष्म चिदचिच्छरीरकत्वेन एकः सदसदात्मकजगद्गतभेदस्य नानारूपविभागप्रयुक्तत्वेन तत्प्रतिसम्बन्ध्येकत्वं तदभावप्रयुक्तमत्रैकशब्दार्थः एवञ्च सालक्षण्यात् कार्य कारणभावस्तयो रभेदश्चोपपन्न इति भावः। कार्यकारणयो रभेदे दृष्टान्तमाह - अद्वयमिति। कृताकृतं कार्यकारणावस्थं स्वर्णमद्वय मेकमेव, तद्वत्। इह कार्यकारणयोर्जग द्ब्रह्मणो र्न वस्तुभेदः। न वस्तुभेद इत्यनेन कार्यत्वकारणत्वावस्थयोरवस्थातद्वतोश्च भेदेऽपि अवस्थावतो र्वस्तुनोः कार्यकारणयोः न[1] भेदः। कारणद्रव्यमेव अवस्थान्तरापन्नं कार्यमित्युक्तम्। अनेनासत्कार्यवादव्युदासः सूचितः तमेवोपपादयति - त्वयि कार्यकारणरूपे त्वयि, विकल्पो वि[2]भेदः जनै वैशेषिकादिभिः अज्ञानकल्पितः बुद्धिशब्दान्तरादीनामवस्थाभेदेनाप्युपपत्ते र्वस्तुभेदोऽज्ञानकल्पित इति भावः। यतोऽयं गुणव्यतिकरः गुणपरिणामात्मकः प्रपञ्चः निरुपाधिकस्य प्रकृतिपुरुषाभ्यां निष्कृष्टस्वरूपस्य तव सम्बन्धी त्वच्छरीरभूतः ततस्त्वत्स्वरूपं शरीरभूतात् गुणव्यतिकरात् द्वयं भिन्नञ्चेत्यर्थः।।८।।

**विज०** भगवज्ज्ञानसाधनभक्तिविधानार्थ देवोत्तमरुद्रादिसम्भाव्यमहिमा वर्ण्यतेऽस्मिन्नध्याये। तत्र विष्णुशिवयोः संवाद प्रकारं वक्तुमाह - **वृषध्वज** इति। हरिः सुरगणान् सोम मपाययदिति यदिदं निशम्य।।१,२।।

सह उमया। "सोषामविन्दत्सस्वासो अग्निं सो अर्केण विबबाधे तमांसि से[3]न्द्रभवोयमवथ यूय मिन्द्रश्च मर्त्यः" इत्यादिवत्।।३।।

हेतुर्निमित्तकारणम्, अदृष्टादिवन्नेत्याह - आत्मेति। न जीव इत्याह - ईश्वर इति।।४।।

ईश्वरश्चेच्छिवः किं न तस्य स्वातन्त्र्येणोपास्यमानत्वासम्भवात् अस्य मोक्षार्थिभिः तथात्वा दित्याह - **तवेति**।।५,६।।

उपास्यमानमपि शबलं किं न स्यादिति तत्राह - **त्वं ब्रह्मेति**। ब्रह्मपदार्थ माह पूर्णमिति। अविनाशिनः पूर्णत्वं युक्तमित्याह अमृतमिति। अमृतत्वं कुत इति तत्राह - विगुण मिति । अत एव विशोकम् आनन्दमात्रम्। अतोऽपि शोको नास्त्यस्य षड्विकार रहितम्। एतादृश मन्यन्नास्तीत्याह - अनन्य

1. A,B,T अ" 2. A,B,T Omit वि 3. B,M,Ma सेह"

दितिः स्वगत भेदविवर्जितं वा, अन्यत् जगत इति शेषः सर्वस्माद्भिन्नमित्यर्थः। जगत्कारणस्य तदुदासीनस्य च एकत्वप्रकटनाय पुनरुक्तमाह विश्वस्येति। एवंविधं ब्रह्म प्रकृत्यादिकमपेक्ष्य, अनपेक्ष्यापि कर्तुं समर्थ मित्याह - तदुपेक्षतयेति।।७।।

एतत्कथमिति तत्राह - एक इति। यथा कुण्डलाद्यात्मना कृतं प्रकृत्यात्मनात्वकृतं स्वर्णमेकमेव। इह स्वर्णे वस्तुतो भेदो नास्ति तथा सदादिवस्तुषु स्थितत्वात् तत्स्वभावप्रवर्तकत्वेन सदादि शब्दवाच्यस्त्व मप्येक एव। इदमपि सामर्थ्या भावे न युक्तम्। अतो निरतिशय सामर्थ्य मस्य अवगम्यत इति भावः। स्थानभेदादेकस्य परमात्मनो भेदकल्पनमज्ञानमूलमित्याह - अज्ञानत इति। जनैरज्ञानतस्त्वयि विकल्पो भेदो विहितो यस्मा त्तस्मादवस्तुभूत इति शेषः। विहत इति पाठे अज्ञानतस्त्वयि विकल्प इति यस्मात्तस्मात् विहतो नष्ट इत्यर्थः। भेदकल्पनायां का प्राप्तिरिति तत्राह - गुणेति। गुणानां व्यतिकरो मिथः कार्यार्थ समवायविशेषो यस्मात्सः तत्तत्कार्येषु तत्तत्प्रवर्तकत्वेन तत्स्थत्वात्तदाशङ्केति भावः। ननु स्वतो भेदाभावेऽपि उपाधिभेदात्स स्यादिति तत्राह - निरुपाधिक इति। उपाधिसद्भावे तद्भेदात्सोऽस्तीति शङ्कितुं शक्यते, स एव नास्ति, आनन्दमात्रमिति निर्धारितत्वात्। पुनर्वचनं मन्दाशङ्कानिवारणार्थमिति।।८।।

त्वां ब्रह्म केचिदवयन्त्युत धर्ममेके [1]एके परं सदसतोः पुरुषं परेशम्।
[2-]अन्ये वदन्ति[-2] नवशक्तियुतं परं त्वां केचिन्महापुरुषमव्ययमात्म[3]तत्त्वम्।।९।।

नाऽहं परायुरृषयो न मरीचिमुख्याः जानन्ति यद्विरचितं खलु सत्त्वसर्गाः।
तन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः।।१०।।

स त्वं [4-]समीहितमदः[-4]स्थितिजन्म[5]नाशं भूतेहितञ्च जगतो भवबन्धमोक्षौ।
वायुर्यथा विशति खञ्च चराचराख्यं सर्वं[6] तदात्मकतया[7] ऽवगमोऽवरुन्त्से।।११।।

अवतारा मया दृष्टा रममाणस्य ते [8]गुणैः।
[9]सोऽहं तद्द्रष्टु मिच्छामि यत्ते योषिद्वपुर्धृतम्।।१२।।

येन सम्मोहिता दैत्याः पायिताश्चाऽमृतं सुराः।
[10]तं दिदृक्षव आयाताः परं कौतूहलं हि नः।।१३।।

---

1. H,V अन्ये 2- -2. A,B,G,J,T,W अन्येऽवयन्ति 3 A,B,G,J,M,Ma,T तन्मम् 4- -4. M,Ma समीहसि तत. 5 M,Ma नाशान् 6. M,Ma त्वं 7. M,Ma "मोनुतिस्ते ; W. "मोऽनुभुङ्क्षे 8. B. गुणा 9. M,Ma "च 10 A,B,G,J,M,Ma,T तर्हि"

**श्रीशुक उवाच**

**एव मभ्यर्थितो विष्णु र्भगवान् शूलपाणिना।**
**प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत।।१४।।**

**[1]श्रीहरिः उवाच[-1]**

**कोतूहलाय दैत्यानां योषिद्वेषो मया धृतः[2]।**
**पश्यता सुरकार्याणि [3]गते पीयूषभाजने।।१५।।**

**तत्तेऽहं दर्शयिष्यामि दिदृक्षो स्सुरसत्तम।**
**[4]कामिनां बहु[-4] मन्तव्यं सङ्कल्पप्रभवोदयम्।।१६।।**

**श्रीध०** अत [5]एवं त्वां बहुधा वर्णयन्ति। तत्त्वतस्तु केऽपि न जानन्तीत्याह - **त्वामिति** द्वाभ्याम् त्वां ब्रह्म वेदान्तिनोऽवयन्ति मन्यन्ते। त्वामेव धर्मं मीमांसका मन्यन्ते। प्रकृतिपुरुषयोः परं पुमांसं सांख्याः। "[6]विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च प्रज्ञा सत्या तथेशानाऽनुग्रहा नवशक्तयः[-6]" इत्येवं नवशक्तियुतं परं पाञ्चरात्राः, महापुरुषं पातञ्जलाः।।९।।

**नेति**। परायुर्ब्रह्मा सत्त्वासर्गाः सत्त्वगुणेन सृष्टाः अपि येन त्वया विरचितं विश्वमपि खलु तत्त्वतो न जानन्ति। किं पुनस्त्वाम्। हे ईश! अभद्रं राजसं तामसञ्च वृत्तमुत्पत्तिः [7]वृत्तिश्च येषां ते न जानन्तीति किमु वक्तव्यम्।।१०।।

किन्तु त्वं तत्सर्वं जानासीत्याह - **सत्वमिति**। स त्वं सर्वमवरुन्त्से व्याप्नोषि जानासि। किं तत्सर्वम्? समीहितं [8]स्वकृतं अदःस्थितिजन्मनाशममुष्य जगतो जन्मादि, भूतानामीहितञ्च, जगतो भवबन्ध [9]मोक्षौ च। व्याप्तौ दृष्टान्तः - चराचराख्यं देहजातं खञ्च यथा वायुराविशति तथा। कथमवरुन्त्से? तदात्मकतया तस्य सर्वस्य आत्मतयेत्यर्थः। आत्मत्वे हेतुः, अवगमो ज्ञानरूप इति।।११।।

एवं स्तुत्वा प्रस्तुतं विज्ञापयति - **अवतारा** इति - द्वाभ्याम्।।१२ - १४।।

**कौतूहलायेति** । सुरकार्याणि योषिद्वेषेण भविष्यन्तीति पश्यता। अयं भावः - अवश्यं

1- -1. A,B,G,J,M,Ma,T श्री भगवानुवाच 2. A,B,G,J,M,Ma,T कृतः 3. M,Ma हते
4- -4. M,Ma तत्कामिनाञ्च 5. A,B,J एव 6- -6. A,B,J विमला उत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्या ईशाना अनुग्रहा च
7. A,B,J Omit वृत्तिश्च 8. B,J Omit स्व 9. H,V "क्षं

तावदुन्मत्तान्दैत्यान्वञ्चयित्वा देवेभ्योऽमृतं देयम्। न चैवं वैषम्यं रूपान्तरेण कर्तुमुचितम्। अतो वञ्चन मोहनादिसारं कामिनीरूपं मया धृतमिति।।१५।।

**तदिति**। तद्रूपं दर्शयिष्यामि सङ्कल्पप्रभवः कामः तस्योदयो यस्मात्।।१६।।

**वीर०** एवं अनन्यत्वान्यत्वे उपपादिते। तदेवं प्रकृतिपुरुषविलक्षणत्वेन वेदान्तवेद्य स्त्वमेवेति स्तुतम्। किं बहुना? "सर्वे वेदा यत्पद मामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः वेदान्त कृद्वेदविदेवचाऽहम्" ( भ.गी. 15 - 15) इत्याद्युक्तरीत्या निगमागमादिषु सर्वत्र धर्मब्रह्मादिशब्दैः व्यवह्रियमाण स्त्वमेवेत्याह - त्वां ब्रह्मेति। केचिद्वेदोत्तरभागाः त्वां ब्रह्म अवयन्ति; मन्यन्ते ब्रह्मेति बोधयन्ति। केचिद्वेदान्तिनो ब्रह्मेति व्यवहरन्तीत्यर्थः। एके मीमांसकाः धर्ममवयन्ति। यद्यप्यपूर्वाख्यं क्रियाजन्यं ते धर्मं मन्यन्ते, तथाऽपि "फलमत उपपत्तेः" (ब्र.सू. 3.7.37) इति शारीरकन्यायेन अपूर्वस्याऽपि भगवत्प्रसाद रूपत्व मकामेनाऽपि तै रवश्यं वाच्य मिति यागादि क्रियाया भगवदाराधनरूपत्वेन तत्प्रतिपादकस्य वेदपूर्व भागस्य आराध्ये अलौकिक श्रेयस्साधने सिद्धधर्मरूपे तस्मिन्नेव पर्यवसानात्, तत्राऽपि तात्पर्यवृत्त्या भगवानेव प्रतिपाद्यते इत्यभिप्रायेण धर्म मेकेऽवयन्तीत्युक्तम्। तथा चोक्तम् - "ये च वेदविदो विप्राः येचाऽध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" ( भारत.उ 48 - 26 ) इति। एके सेश्वरसांख्याः यौगिकाश्च तत्र वेदान्तविरुद्ध तत्त्वापोहेन इतरद्ग्राह्यम्। निरीश्वर सांख्यस्मृतिस्तु निर्मूलैवेति भावः। सदसतोः प्रकृति पुरुषयोः परं विलक्षणं परेशशब्दवाच्य मवयन्ति। अन्ये केचित् पाञ्चरात्रास्तु नवशक्तियुतम्- "विमलो-त्कर्षिणी ज्ञाना क्रिया योगा ततः परम्। प्रह्वा सत्या तथेशानाऽनुग्रहा नव शक्तयः" इत्युक्त नवशक्तियुतं परं निस्समाभ्यधिकं अव्ययं निर्विकारं स्वतन्त्रं महापुरुषमवयन्ति।।९।।

न कार्त्स्न्येन त्वद्गुणान् स्तोतुं वयं प्रभवामः, यतस्त्वया सृष्टं विश्वमेव तत्त्वतो न जानीमः इत्यत[1] आह - **नेति**। अहं रुद्रः, परायु र्ब्रह्मा मरीच्यादयो ऋषयः त एते वयं सत्त्वव[2]र्गाः जन्तुसमूहाः यस्य तव मायया सङ्कुचितज्ञानाः यत्त्वया विरचितं विश्वमेव तत्त्वतो न जानीमः, किं पुनरनन्तत्वत्स्वरूप गुणादिकमस्मदादय एव न जानन्ति। किं पुनः शश्वत् सदा अभद्रवृत्ताः ज्ञानसङ्कोचकात्मकाऽमङ्गल कर्मपरायणाः दैत्यमर्त्यादयो न जानन्तीति।।१०।।

1. W. इत्याह 2. A स°

त्वमेक एव अपरिच्छिन्नस्वरूपस्वभावः सर्वज्ञ इत्याह - **स इति।** स त्वमुक्तविधस्त्वं सर्वं तदात्मकतया सर्वान्तरात्मकतया, व्याप्येति शेषः, अवरुन्त्से जानासि। कथम्भूतः? अवगमः ज्ञानस्वरूपः, सर्वात्मकतया शास्त्रेणाऽवगम्यो वा। किं तत्सर्वं समीहितं स्वकृतम् अदोऽमुष्यजगतः स्थितिसृष्टिनाशानां समाहारः। तत् भूतानां ईहितञ्च जगतो भवरूपं बन्धं मोक्षञ्च - इत्येतत्सर्वम्। अवभुङ्क्ते इति पाठान्तरम्। तदा अन्तरात्मतया अवगमः। अवगच्छतीत्यवगमः, कर्तरि पचाद्यजन्तः। जानन्नवभुङ्क्ते, लीलारसमनुभवसीत्यर्थः। व्याप्तौ दृष्टान्तः - चराचरात्मकं वस्तु वायुः खमाकाशश्च यथा आविशति तद्वदिति।।११।।

एवं प्रतिपूज्य प्रस्तुतं विज्ञापयति - अवतारा इति द्वाभ्याम्। गुणैः सर्वज्ञत्वसर्वान्तरात्मत्वादिभिः कल्याणगुणैः रममाणस्य लीलारसमनुभवतः तवाऽवतारा वराहादयो बहवो मया दृष्टाः। योषिद्रूपन्तु न दृष्टम्। सोऽहं दृष्टबहुभवदवतारोऽहमधुना यत् ते त्वया धृतं योषि द्वपुः तत् द्रष्टुमिच्छामि।।१२।।

येन योषिद्वपुषा दैत्यास्सम्मोहिता सुरास्त्वमृतं पायिताः तद्योषिद्वपुः दष्टुमिच्छवो वयमागताः। तद्दर्शनेऽस्माकमधिकं कौतूहलं वर्तते।१३।।

[1]एवं मुक्तो भगवान् रुद्रं प्रत्यभाषतेत्याह शुकः - एवमिति।[-1] [2]एव मित्थं शूलपाणिना रुद्रेणाभ्यर्थितः [3]प्रार्थितो भगवान् भावगम्भीरं केनिचि दभिप्रायेण गम्भीरं यथा तथा प्रहस्य रुद्रं प्रत्यभाषत।।१४।।

तदेवाह **कौतूहलायेति** द्वाभ्याम्। पीयूषभाजने अमृतकलशे गते दैत्यैरपहृते सति सुरकार्याणि योषिद्वेषेण भविष्यन्तीति पश्यता आलोचयता मया दैत्यानां कौतूहलाय योषिद्वेषः [4]धृतः उपात्तः।।१५।।

तत्ते दिदृक्षोरहं दर्शयिष्यामीत्यन्वयः। पश्यतेत्यस्यायं भावः - अवश्यं तावदुन्मत्तान् दैत्यान्वञ्चयित्वा देवेभ्योऽमृतं देयम्। न चेदं वैषम्यम्। रूपान्तरेण [5]तथा कर्तु मुचितम्। अतो वञ्चनमोहनादिसारं कामिनीरुपं मया धृत मिति। कथम्भूतं [6]योषिद्वपुः? कामिनां बहुमन्तव्यम् कामुकै र्बहुमाननीयम्। सङ्कल्पप्रभवः कामः, तस्यो दयो यस्मात्तादृशम्।।१६।।

**विज०** एकस्य नानामतविषयत्वं न भिन्नस्येत्याह - **त्वामिति**। केचिद्वेदान्तिनः त्वां ब्रह्मेत्यवयन्ति अवगच्छन्ति, एके स्मार्ताः धारकत्वा द्धर्मम् , एके पौराणिकाः परेशं त्वां सदसतोः परं पुरुषम् अन्ये पाञ्चरात्रिकाः त्वां विमलोत्कर्षिणी ज्ञानेत्यादि नवशक्तियुतं परं वदन्ति। केचि देकान्तिनः त्वामव्यय मात्मतन्त्रं महापुरुषमभिवदन्तीत्यन्वयः।।९।।

---

1--1. W. Omits 2. A,B,T इति 3. Omits प्रार्थित 4. W. Omits धृतः 5. W. Omits तथा 6. A,B,T °द्रूपम्

तद्विषयज्ञानसामग्र्यभावात् नानात्वकल्पना इत्याशयेनाह - **नाऽह** मिति। सत्त्वसर्गाः सात्त्विकाः, अत्रापि निमित्तमाह - यन्माययेति।।१०।।

जन्मस्थित्यादीनां भिन्नकर्तृत्वेन नानात्वं किं न स्यादिति तत्राह - **स त्व** मिति। यो ब्रह्माद्यविज्ञात-स्वरूपः स जगतः स्थितिजन्मनाशान् भूतै रीहितञ्च बन्धमोक्षावपि समीहसि करोषि हि, यस्मा त्तस्मान्नानात्मकत्वं भ्रान्तिरिति भावः। अथ आसु कल्पनासु एकविषया ततोऽन्या किं तव स्तुतिरिति तत्राऽह - **वायु** रिति। यथा वायुः स्वं चराचराख्यं सर्वं प्रविशति तथा भिन्नश्च तथा सर्वस्य त्वदात्मकतया त्वद्व्याप्तत्वेनाऽवगमो ज्ञानं ते तव नुतिः स्तुतिः स्या दित्यन्वयः। अनेन धर्मादि प्रवर्तकत्वेन तत्तच्छब्द वाच्यत्वा वगमः स्तुति रित्युक्तं भवति।।११।।

तव स्तुत्या कोऽभिप्राय इति तत्राह - **अवतारा** इति। अस्तु दृष्टिः ततः किमिदानीमपेक्षितमिति तत्राह - सोऽहमिति।।१२ - १५।।

सङ्कल्पप्रभवस्य कामस्योदयो यस्माद्वपुषः तत्तथा, तद्वपुः कामिनीनां च मन्तव्यमिति प्रयोगः "गन्तव्या ते वसतिरलका नाम" (मेघदूतम् ) इतिवत्कृद्योगे षष्ठी। चशब्दादकामिनीना मिति ग्राह्यम्।।१६।।

### [1-] श्रीशुक उवाच [-1]

**इति ब्रुवाणो भगवां स्तत्रैवाऽन्तरधीयत।**
**सर्वतश्चारणं श्चक्षुर्भव आस्ते सहोमया।।१७।।**

**ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे।**
**विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम्।।१८।।**

**आवर्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः पदे पदे।**
**[2]प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः।।१९।।**

**[3]दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम्।**
**स्वकर्णविभ्राजित[4-]कुण्डलोल्लसत्कपोलनीलालक[-4]मण्डिताननाम्।।२०।।**

1--1. H,V,W श्री नारद उवाच 2. M,Ma वि" 3 W "भ्रूद्भ्र" 4--4. M,Ma लालकुण्डलोल्लसत्कपोलालक

श्लथद्दुकूलं[1] कबरीञ्च विच्युतां सन्नह्यतीं वामकरेण वल्गुना।
विनिघ्नती [2]मन्यकरेण[2] कन्दुकं विमोहयन्तीं जगदात्ममायया।।२१।।

तां वीक्ष्य देव इति कन्दुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः[3]।
स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा[4] नात्मानमन्तिक उमां स्वगणांश्च वेद।।२२।।

तस्याः कराग्रान्नुत् कसको यदा गतो विदूरं तमनुव्रजन्त्याः[5]।
वासस्ससूत्रं[6] लघु मारुतोऽहरद्भवस्य देवस्य किलानुपश्यतः।।२३।।

एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम्।
दृष्ट्वा तस्यां मनश्चक्रे विलज्जन्त्यां[7] भवः किल।।२४।।

**श्रीध० तत** इति। विचित्राणि पुष्पाणि अरुणाः पल्लवाश्च येषां ते द्रुमाः यस्मिन्। लस दुकूलेन पर्यस्ते परिवृते नितम्बे मेखला यस्या स्ताम्।।१५-१८।।

**आवर्तनेति**। उत्पतत्पतत्कन्दुकलीलावशेन ये आवर्तनोद्वर्तने नमनोन्नमने ताभ्यां कम्पितयोः स्तनयोः प्रकृष्ट हाराणाञ्च उरुभारैः प्रतिपदं मध्ये प्रभज्यमानामिव चलत्पदमिव प्रवालवत्कोमलं ततस्ततो नयन्तीम्।।१९।।

**दिक्ष्विति**। दिक्षु भ्रमतः कन्दुकस्य चापलैश्चाञ्चल्यैः भृशं प्रोद्विग्नतारे आयते लोले चञ्चले[8] लोचने यस्याः। स्वकर्णाभ्यां विभ्राजिते ये कुण्डले ताभ्यामुल्लसन्तौ कपालौ ताभ्यां नीलालकैश्च मण्डित-माननं यस्याः।।२०।।

**श्लथदिति**। सन्नह्यंतीं बध्नन्तीम् जगद्विमोहयन्तीम्।।२१।।

**तामिति**। तां वीक्ष्य देवः श्रीरुद्रः आत्मान मन्तिके स्थितां उमां, स्वगणांश्च न वेद। कथम्भूतः, इति एवम्भूतया कन्दुकलीलया या ईषद्व्रीडा तया अस्फुटं स्मितं तेन सह विस्पष्टो यः कटाक्षः तेन मुष्टो वञ्चितः अत एव स्वयं यत् स्त्रियाः प्रेक्षणं तथा च यत्[9] प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य।।२२।।

**तस्या** इति। तं[10] कन्दुकमनुव्रजन्त्याः स्त्रियाः लघु सूक्ष्मं वासः ससूत्रं काञ्चीसहितम्।।२३।।

**एव** मिति। विषज्जन्त्यां लज्जाकुञ्चितकटाक्षैरात्मानं[11] निरीक्षमाणायाम्।।२४।।

1. M,Ma 'त्लं 2- -2. H,V,W 'ञ्चान्यतमेन 3. M,Ma मुष्टः ; W. मुष्ण॰ 4. M,Ma निर्वृतात्मा 5. A,B,G,J,T व्रजस्त्रियः 6. M,Ma 'स्सु सूक्ष्मं 7. A,B,G,H,J,T,V 'ष' 8. H,V Omit चञ्चले 9. B,H,J,V Omits यत् 10. H,V Omit तं 11. A,B,J Omit लज्जा

**वीर०** इत्थमुक्त्वाऽन्तर्हितो भगवान् योषितं स्वनिर्मितां काञ्चिदु[1]पवने दर्शयामासेत्याह मुनिः - **इतीति** इत्थं [2]ब्रुवाणोऽभिदधानो भगवान् तत्रैवान्तर्हितो बभूवरुद्रस्तु उमया भवान्या सह सर्वतः [3]परितः चक्षुः प्रसारयन् परितः पश्यन्नास्ते [4]तत्रै वासाञ्चक्रे।।१७।।

तत स्तत्र विचित्राणि पुष्पाणि अरुणाः पल्लवाश्च येषां ते द्रुमा यस्मिन् तस्मिन्नुपवने वरस्त्रियं श्रेष्ठां स्त्रियं ददर्श भव इति [5]अनुषङ्गः। भगवन्निर्मिता काचिदियं स्त्री न तु स्वयं पुरुषोत्तम एव स्त्रीरूपं, [6]परिजग्राहेति विज्ञायते। "प्राद्रवत्सा पृथुश्रोणी माया देवविनिर्मिता" ( भाग. 8-12-30 ) "आत्मानं देवमायया जडीकृतं" (भाग. 8-12-35 ) "यन्मे दुस्तरया स्वैरं मोहितोऽस्यङ्ग मायया" (भाग.8-12-38 ) इत्यनन्तरोक्तिभिः तथाऽवगमात्। [7]कथम्भूताम् वरस्त्रियं [8-]कन्दुकलीलया[-8] कन्दुकस्य क्रीडया विक्रीडतीम्, पाकं पचतीतिवत् निर्देशः। कन्दुकक्रीडां कुर्वतीमित्यर्थः। यद्वा कन्दुकलीलयेति हेत्वर्थे तृतीया कन्दुकक्रीडाजन्यरसानुभवार्थं कन्दुकक्रीडां कुर्वतीमित्यर्थः। लसद्दुकूलेन पर्यस्ते परिवीते नितम्बे मेखला यस्या स्ताम्।।१८।।

उत्पतत्कन्दुकलीलावशेन ये आवर्तनोद्वर्तने नमनोन्नमने, ताभ्यां कम्पितयोः स्तनयोः प्रकृष्टहाराणाञ्च उरुभरैः पदे पदे [9-]प्रतिपदं[-9] मध्ये प्रभज्यमानामिव स्थितां [10-]चलत्पदं प्रवालमिव पदप्रवालं[-10], तदितस्ततः नयन्तीम् ।।१९।।

[11]दिक्षूद्भ्रमतः कन्दुकस्य चापलै श्चाञ्चल्यैः भृशं प्रोद्विग्ने तारे कनीनिके ययो स्ते आयते लोचने यस्यास्तां स्वकर्णाभ्यां विभ्राजिते कुण्डले ताभ्याम् ताम् उल्लसन्तौ कपोलौ ताभ्याञ्च नीलालकैश्च मण्डितमाननं यस्या स्ताम्।।२०।।

श्लथद्विच्युतं दुकूलं विच्युतां कबरीं धम्मिल्लञ्च वल्गुना सुन्दरेण वामहस्तेन सन्नह्यतीं बध्नतीम्। अन्यतरेण [12]दक्षिणकरेण कन्दुकं निघ्नतीम् आत्मनः स्वसम्बन्धिन्यामायया कपटवृत्त्या जगत् विमोहयन्तीम्।।२१।।

तां वीक्ष्य देवो रुद्रः आत्मानम्, अन्तिकस्थितामुमां स्वगणांश्च न वेद कथम्भूतः [13]देवः इति? या कन्दुकलीला तया ईषद्व्रीडा तया अस्फुटं [14]अप्रकटं स्मितं तेन सह विसृष्टो यः कटाक्षः तेन मुष्टो वञ्चितः

1. W Omits उपवने 2. W Omits ब्रुवाणः 3. A,B,T सर्वतः 4. W Omits तत्रैव 5. A,B,T शेष. 6. A,B,T Omit परि 7- -7. A,T Omit 8- -8. A,B,T Omit 9- -9. W Omits 10- -10. A,B,T चलत्पदमेव प्रवालवत्कोमलं 11. A,B,T °क्षु भ्र° 12. A,B,T Omit दक्षिण 13. W Omits देवः 14. W Omits अप्रकटं

अत एव स्वयं यत् स्त्रियाः प्रेक्षणं तया च प्रतिसमीक्षणं ताभ्यां विह्वलः[1] परवश आत्मा मनो यस्य तथाभूतः।।२२।।

सः क्रीड्यमानः कन्दुकः यदा तस्याः कराग्रात् विदूरं गतः तदा तं कन्दुकमनुव्रजन्त्याः स्त्रियाः लघु सूक्ष्मं वासः ससूत्रं काञ्चीसहितं मारुतो देवस्य रुद्रस्य पश्यतस्सतः [2]अहरत् [3]जहार किल।।२३।।

एवमेवम्भूतां मारुतेनापहृतवाससम्, नग्ना मिति यावत्, रुचिरस्सुन्दरोऽपाङ्गो यस्याः दर्शनीयाम्, अति सुन्दरीत्वादिति भावः। मनोरमां [4]मनोज्ञां तां दृष्ट्वा रुद्रः तस्यां विलज्जत्यां लज्जया कुञ्चितकटाक्षैरात्मानं निरीक्षमाणायां मनश्चक्रे किल।।२४।।

**विज०** लसन्ती नितम्बे पर्यस्ता परिवृता दुकूलो परिमेखला यस्यास्सा, तथा ताम्।।१७,१८।।

आवर्तनमर्वाङ्नमनमुद्वर्तनमुन्नमनं, ताभ्यां कम्पितयोः आरब्ध चञ्चलयोः स्तनयो र्गुणतः प्रकृष्टहारस्य च उरुभरैः पदे पदे मध्यप्रदेशे भज्यमानामिव स्थितां ततस्ततः तत्र तत्र चलत्पदपल्लवं नयन्तीं प्रचालयन्तीम्।।१९।।

भ्रमतः कन्दुकस्य चापलैश्चलभावैः प्रोद्विग्ने चञ्चले तारे कनीनिके ययोस्ते प्रोद्विग्नतारे ते च आयते च लोले च लोचने यस्यास्सा तथा। तां स्वकर्णयोर्विभाजिते च लोलकुण्डले च स्वकर्णविभ्राजितलोलकुण्डले ताभ्यां उल्लसद्भ्यां कपोलाभ्यामलकैश्च मण्डितमाननं यस्यास्सा तथा ताम्।।२०।।

सन्नह्यतीं बध्नतीम् आत्ममायया स्वरूपशोभावैचित्र्येण।।२१।।

व्रीडासहितेन स्मितेन स्फुटेन प्रफुल्लेन विसृष्टेन दिक्षु मुक्तेन च कटाक्षेण मूढः स्त्रीप्रेक्षण[5]प्रति समीक्षणाभ्यां निर्वृत आह्लादितः आत्मा यस्य सः तथा, सः।।२२।।

स्त्री रुद्रं पश्यति, रुद्रः स्त्रियं पश्यतीति भावेन तं कन्दुकमनुव्रजन्त्याः स्त्रियाः[6]।।२३।।

विलज्जन्त्यां लज्जाभावं कुर्वन्त्याम्।।२४।।

**ततोऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः।**
**भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ।।२५।।**

**सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम्।**
**निलीयमाना वृक्षेषु हसन्ती नाऽन्वतिष्ठत।।२६।।**

1. W Omits परवशः 2. A,B,T Omit अहरत् 3. W Omits जहार 4. A,B,T Omit मनोज्ञां 5. A °णास°; B,M,Ma °णास°; Omit प्रति 6. M,Ma °यः

तामन्वगच्छद्भगवान् भवः प्रमथितेन्द्रियः[1]।
कामस्य च वशं नीतः करेणुमिव यूथपः।।२७।।

सोऽनुव्रज्यातिवेगेन गृहीत्वानिच्छतीं स्त्रियम्।
केशबन्ध उपानीय बाहुभ्यां परिषस्वजे।।२८।।

सोपगूढा भगवता करिणा करिणी यथा।
इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा।।२९।।

आत्मानं मोचयित्वा[2]ऽङ्ग सुरर्षभ[3]भुजान्तरात्।
प्राद्रवत्सा पृथुश्रोणी माया देव विनिर्मिता।।३०।।

तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः।
प्रत्यपद्यत कामेन वैरिणेव[4] विनिर्जितः।।३१।।

तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः।
शुष्मिणो यूथपस्येव वाशितामनुधावतः।।३२।।

**श्रीध० तयेति**। तत्पदं तस्यास्समीपं ययौ।।२५-२९।।

**आत्मान** मिति। आङ्ग! हे राजन्! [5-]सुरर्षभ भुजान्तरात् महेशबाहुमध्यप्रदेशात्[-5]।।३१,३१।।

[6-]**तस्येति**। शुष्मिणः मत्तस्य वाशितां पुष्पवतीं गजीम्[-6]।।३२।।

**वीर०** तयाऽपहृतविवेकः अत एव तया कृत उत्पादितः स्मरः कामः तेन विह्वलः, अत एव गता ह्रीर्यस्य - "कामातुराणां न भयं न लज्जा" इति न्यायात्। एवम्भूतो रुद्रो भवान्याः पश्यन्त्यास्सत्या अपि तत्पदं तस्याः समीपं ययौ गतः।।२५।।

तमायान्तं रुद्रं विलोक्य सा स्त्री विगतवस्त्रा, अत एव भृशं व्रीडिता [7]अत एव वृक्षेषु निलीयमाना [8]तिरोभवन्ती हसन्ती नाऽन्वतिष्ठत क्वचित् स्थिरं न तस्थौ।।२६।।

तामननुतिष्ठन्तीं भगवान् भवोऽन्वगच्छत्। कथम्भूतः? प्रमथितानि क्षोभितानीन्द्रियाणि यस्य कामवश्यतां प्राप्तः यथा यूथपो गजः करेणुमिभीमनुगच्छति तद्वत्।।२७।।

1. A,B,G,J,T मुषिते", M,Ma व्यथिते" 2. W "त्वा सा 3. H,V विष्णु" 4. M,Ma "णा च 5- -5. A,B,J, Omit 6- -6. A,B,J Omit 7. A,B,T Omit अत एव 8. A,B,T "दधाना

सोऽनुगतो रुद्रोऽतिवेगेन समीपमेत्य अनिच्छन्तीमपि स्त्रियं केशबन्धे गृहीत्वा [1] आत्मसमीपं प्रापय्य बाहुभ्यामालिङ्गितवान्।।२८।।

यथा करिणा गजेन करिणी तथा भगवता रुद्रेण उपगूढा परिष्वक्ता विप्रकीर्णाः शिरोरुहाः केशाः यस्यास्सा। इतस्ततः प्रसर्पन्ती सुरर्षभस्य रुद्रस्य भुजयोरन्तरान्मध्यात् आत्मानं बलान्मोचयित्वा, अङ्ग हेराजन्! देवेन भगवता विनिर्मिता सा पृथुश्रोणी मायामोहिनी, भगवन्मायानिर्मिता वा सा योषित् प्राद्रवत् प्राधावत्।।२९,३०।।

वैरिणा कामेन विनिर्जित इवासौ रुद्रस्तस्याऽद्भुतकर्मणः विष्णो र्विष्णुविनिर्मितायाः योषितः पदवी मन्वगच्छत्।।३१।।

शुष्मिणः मत्तस्य यूथपस्य [2] गजस्य वाशितां पुष्पवती गजां अनुधावता इव तस्य तामनुधावतोऽमोघरेतसो रुद्रस्य रेत श्चस्कन्द अक्षरत्।।३२।।

**विज०** नान्वतिष्ठत नानुकूलाऽभूत्।।२५-३०।।

वैरिणा पुरुषार्थविरोधिना, विरुद्धप्रेरणावता वा।।३१।।

शुष्मिणो वीर्यवतो वाशितां मैथुनेच्छावतीं करिणीम्।।३२।।

**यत्र यत्रापतन्मार्गे [3] रेतस्तस्य महात्मनः।**
**तानि [4] रौप्यस्य हेम्नश्च क्षेत्राण्यासन्महीपते।।३३।।**

**सरित्सरस्सु शैलेषु वनेषूपवनेषु च।**
**यत्र क्व चासनृषयस्तत्र सन्निहितो हरः।।३४।।**

**स्कन्ने रेतसि योऽपश्य [5] दात्मानं देवमायया।**
**जडीकृतं नृपश्रेष्ठ सन्न्यवर्तत कश्मलात्।।३५।।**

**अथावगतमाहात्म्य आत्मनो जगदात्मनः।**
**अपरिज्ञेयवीर्यस्य न मेने [6-] तदुहाद्भुतम् [-6]।।३६।।**

1. A,B,T स्व° 2. A,B,T Omit गजस्य 3 A,B,G,J,M,Ma,T °न्महा° 4. A,B,G,J,T, सूप्यस्य , M,Ma रुद्रस्य
5. H,V विष्णु° 6- -6. H,V दिहाद्भुतम् , M,Ma तदुदाहृतम् (ताम् )

**तमविक्लव मव्रीडमालक्ष्य मधुसूदनः।**
**उवाच परमप्रीतो बिभ्रत्स्वां पौरुषीं तनुम्।।३७।।**

**श्रीभगवानुवाच**

**दिष्ट्या त्वं विबुधश्रेष्ठ! स्वां निष्ठामात्मना स्थितः।**
**[1-]यन्मे स्त्रीरूपया[-1] स्वैरं मोहितोऽस्य[2]ङ्ग मायया।।३८।।**

**को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान्।**
**तांस्तान्विसृजतीं भावान्दुस्तरामकृतात्मभिः।।३९।।**

**सेयं गुणमयी माया न त्वामभिभविष्यति।**
**मया समेता कालेन कालरूपेण भागशः।।४०।।**

**श्रीध० सरिदिति।** एवं तामनुधावन् हरः सरित्सरस्सु शैलादिषु च सन्निहितो बभूव।।३३,३४।।

**[3-]स्कन्न** इति। कश्मलम् मोहातिरेकात् जडीकृतं कर्तव्याकर्तव्यशून्यतया कृतम्[-3]।।३५।।

**अथेति।** [4-]जगदात्मनोऽवगतं माहात्म्यं येन सः आत्मनः तदुह देवमायया जडीकरणं अद्भुतं[-4] न मेने।।३६।।

**[5-]तमिति।** अविक्लवं स्वस्थम्[-5]।।३७।।

**दिष्ट्येति।** [6-]आत्मना स्वयम्[-6]। स्वां निष्ठां प्रकृतिम्।।३८।।

**कोन्विति।** [7-]विषक्तो मोहपाशयन्त्रितः त्वदृते त्वां विना भावान् चेष्टाविशेषान्[-7]।।३९।।

**सेति।** कालेन सृष्ट्यादिनिमित्तेन मया कालरूपेण भागशो रजआद्यंशेन। समेता मदधीना सती।।४०।।

**वीर०** अमोघरेतस्त्वमेवाह - **यत्रेति।** मह्यां यत्र यत्र स्थले महात्मनस्तस्य रुद्रस्य रेतोऽपतत्, तानि स्थलानि हे महीपते! रौप्यस्य रजतस्य [8]हेम्नस्सुवर्णस्य च क्षेत्राण्यासन् बभूवुः।।३३।।

किञ्च। यत्र क्वच यत्र सरिदादिषु रेतोऽपतत्तत्र रुद्रस्सन्निहितो बभूव। तत्र तदुपासका ऋषयश्च आसन् [9]अवात्सुः।।३४।।

1- -1. M,Ma यतो दुस्तरया 2. A,B,G,J,T 'प्य' 3- -3. A,B,J Omit 4- -4. H,V Omit , B,J तदुहदेवमायया जडीकरणम्
5- -5. B,H,J,V Omit 6- -6. B,H,J,V Omit 7- -7. B,H,J,V Omit 8. W Omits हेम्नः 9. A,B,T बभूवुः

एवं रेतसि स्कन्ने सति देवमायया योषिता जडीकृतमात्मानं स रुद्रोऽ पश्यत्। ततः हे नरश्रेष्ठ! कश्मलात्कामात् सम्यवर्तत।।३५।।

अथानन्तरम्, अपरिज्ञेयं परितो ज्ञातुमशक्यं वीर्यं चेष्टितं यस्य तस्य जगदात्मनः परमात्मनो यन्माहात्म्यं तदवगतं ज्ञातं[1] येन स तथाभूतो रुद्रः तदुह तद्धि योषिद्रूपं तच्चेष्टितञ्च महदद्भुतं अदृष्टाश्रुतपूर्वं मेनेऽमन्यत।।३६।।

ततो[2] भगवान्मधुसूदनः स्वां तिरोधापितां पौरुषीं तनुं बिभ्रदाविर्भावयन्, स्वयमाविर्भूत[3] इत्यर्थः। अविक्लबं दृष्टमव्रीडं निर्लज्जञ्च तं रुद्र मालक्ष्य नितरां प्रीत स्सन्[4] जगाद।।३७।।

तदेवाह - दिष्ट्येत्यादिभिः[5] त्रिभिः। हे विबुधश्रेष्ठ! त्वं स्वां निष्ठां प्रकृतिं कामविकारराहित्यं दैवा दात्मना स्वेनैवावस्थितः स्थितः लब्धवान् मन्मायाया दुरत्ययत्वादितिभावः। [6-]तद्दुरत्ययत्वमेवाह - यदिति[-6]। अङ्ग हे रुद्र! यद्यस्मात्त्वं मे मम मायया दुस्तरया स्वैरं यथे च्छं, नितरामित्यर्थः। मोहितोऽसि, [7-]मोहं प्रापितोऽसि इत्यर्थः[-7]। एवं मोहितस्य स्वनिष्ठालाभो दैवात्सम्पन्न इति भावः।।३८।।

दुस्तरत्व मेवाह - कोन्विति। त्वां विना को नु पुमान् मम मायां विषक्तः आसक्तः[8], विषयासक्तोऽ तितरेत्? विषक्तः इत्यनेन जितेन्द्रियस्तु मत्प्रपन्नोऽतितरेदेवेति सूचितम्। कथम्भूताम्? अकृतात्मभिः अजितेन्द्रियैः दुस्तरांस्तांस्तान् भावान् कामक्रोधादीन् विसृजन्तीम्[9]।।३९।।

एवं स्वमायया दुस्तरत्वमभिधाय तां विशिंषन् तया तस्य अनभिभवमनुगृह्णाति - सेयमिति। सेय मुक्तविधा त्रिगुणात्मिका कालेन कालशरीरकेण मया सृष्ट्याद्युचितकालेन भागशः रज आद्यंशेन समेता व्याप्ता माया त्वां नाभिभविष्यति मोहितं न करिष्यतीत्यर्थः।।४०।।

**विज०** रुद्रस्य क्षेत्राणि हेम्नश्च क्षेत्राणि स्वर्णाकाराण्यासन्।।३३।।

क्व च यत्र क्व च सरिदादिषु रेतः क्षेत्रेषु ऋषय आसन् तत्र भवश्च सन्निहितोऽभवत्।।३४।।

बुद्धिभ्रंशकरं कश्मलं निवृत्तमिति यद्यस्मात् अथ तस्मात्तदुदाहृतां तां ग्राम्योक्तिम्।।३५,३६।।

अविक्लबं स्वस्थम्। अव्रीडं कामजनकलज्जारहितम्।।३७।।

स्वां निष्ठाम् भक्तिलक्षणाम् आत्मना मनसा। कुत इति तत्राह - यत इति।।३८।।

1. W Omits ज्ञातं 2. W Omits ततः 3. A,B,T °रभूदेव 4. W Omits सन् 5. A,B,T °तित्रिभिः 6- -6. W तदेवाह 7- -7. W Omits 8. A,B,T Omit आसक्तः 9. A °जतीम्

दुरन्ते जीवराशौ कश्चिन्मायां तरेत् वैचित्र्यादिति तत्राह - ऋते त्वदिति। विषये विषक्तः' ये ये विषयपाशबन्धकाः तांस्तान् भावान् "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" (कठ.उ.4-1) इति श्रुतेः मायातरणपटूनां सद्भावात्कथं कोन्वित्याक्षिप्यते? इति तत्राह - दुस्तरामिति।।३९।।

मदनुग्रहवतः सुतरेत्याह- सेय मिति। भागशः एकदेशेनापि।।४०।।

## श्रीशुक उवाच

एवं भगवता राजन्! श्रीवत्साङ्केन सत्कृतः।
आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ।।४१।।

आत्मांशभूतां[1] तां मायां भवानीं भगवान्भवः।
शृण्वतां[2] ऋषिमुख्यानां प्रीत्याऽऽचष्टाथ[3-] भारत[-3]!।।४२।।

## [4-]श्रीरुद्र उवाच[-4]

अयि[5] व्यपश्य[6] स्त्वमजस्य मायां परस्य पुंसः परदेवतायाः।
अहं कलानामृषभो विमुह्ये ययावशोऽन्ये किमुतास्वतन्त्राः।।४३।।

यं मामपृच्छस्त्वमुपेत्य योगात् समासहस्रान्त[7] उपारतं वै।
स एष[8] साक्षात्पुरुषः पुराणो न यत्र कालो विशते न[9] वेदः।।४४।।

## श्रीशुक उवाच

इति तेऽभिहितस्तात! विक्रमश्शार्ङ्गधन्वनः।
सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः।।४५।।

एतन्मुहुः कीर्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित्।
यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम्[10]।।४६।।

असदविषयमङ्घ्रिंभावगम्यं प्रपन्नान् अमृतममरवर्यानाशय त्सिन्धुमथ्यम्।
कपटयुवतिवेषो मोहयन्यस्सुरारीन् तमहमुपसृतानां कामपूरं नतोऽस्मि।।४७।।

इति श्रीमद्भागवते महापुराणे
श्रीवैयासिक्यां अष्टादशसाहस्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे शङ्करमोहनं नाम द्वादशोऽध्यायः।।१२।।

1. H,V स्वात्मान्; W स्वात्माश 2. A,B,G,J,M,Ma,T शसता 3. M,Ma प्रीत्यानुष्टा मुवाचह , W प्रत्याचष्टाऽथ भारत 4- -4. A,B,G,J,M,Ma,T Omit 5. A,B,G,J,T अपि 6. A,B,G,J,M,Ma,T व्यप° 7. H,M,Ma,V समास्य°
8. H,V एव 9. W यक्षवेद ; H,V न वेद 10. B भ्र°

**श्रीध० आत्मांशेति।** [1-] विष्णोरंशभूतां तां स्तुवतां सतां हे भारत[-1]! ।।४१,४२।।

* **अयीति।** अयि हे [2] पार्वति! कलानां [3-] अणिमादि सिद्धीनां[-3] [4] ऋषभोऽपि अवशः [5] अस्वाधीनोऽपि [6] [7] विमुह्ये [8] अपश्यः दृष्टवत्यसि।।४३।।

**यमिति।** [9-] वर्षसहस्रान्ते योगात्समाधेः उपारतं मां किं ध्यायसीति त्वं यमपृच्छः स एष यत्र कालो न विशते अपरिच्छिन्नत्वात्। न च वेदः अगोचरत्वात्[-9]।।४४।।

अष्टाध्यायार्थनिगमनम् - **इतीति**।।४५।।

एतत्कीर्तनादे[10]ः फलमाह - **एत दिति**।।४६।।

भगवता कृतं भक्तपक्षपातं स्मरन्नमस्करोति - **असदिति**। असतामविषयम्। भावो भजनं तेन गम्यमङ्घ्रिं प्रपन्नान् [11] शरणागतान् सिन्धुमथ्यं सिन्धोर्मथनेन जातममृतं य आशय दभोजयत्।।४७।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
द्वादशोऽध्यायः।।१२।।

**वीर०** एव मित्थं हे राजन्! भगवता श्रीवत्साङ्केन यत्कृतोऽनुगृहीतो रुद्रस्तं श्रीवत्साङ्कमामन्त्र्य अनुज्ञाप्य ते नानुज्ञातस्तं परिक्रम्य प्रणम्य च सगणः सप्रमथादिगणः स्वालयं कैलासाद्रिं जगाम।।४१।।

अथानन्तरं हे भारत! ऋषिमुख्यानां [12] शृण्वतां भगवान् भवः आत्मनोंऽशभूतां शरीरार्धभूतां तां भवानीं प्रत्यचष्ट उवाच।।४२।।

तत्रैवाह - **अयीति** द्वाभ्याम्। परदेवताया अजस्य कर्मायत्तोत्पत्तिरहितस्य परमपुरुषस्य मायां त्व मप्यपश्यः मायामाहात्म्यं अपश्यः किमित्यर्थः। तदेव दर्शयति - कलानां विद्याना मृषभोऽधिपतिः अवशः पारवश्यरहितोऽप्यहं [13] यथा मायया मुह्ये मोहितवानस्मि। किम्पुनः अस्वतन्त्राः मर्त्यदैत्यादयो मुह्यन्तीति।।४३।।

---

1- -1. B,H,J,V Omit * This commentary is not found in B,J edns. 2. A प्रिये 3- -3. A विभूतीनां 4. H,V Omit ऋषभोऽपि 5. A अपरवशः 6. H,V Omit अपि 7. H,V Omit विमुह्ये 8. A व्यपश्य 9- -9. B,H,J,V Omit 10. A,B,J नादी 11. H,V Omit शरणागतान् 12 A,B,T पश्यतां 13. A,B,T तवानप्यहं

समासहस्रान्ते अनेकसंवत्सरसहस्रपर्यन्तं तपस्तप्त्वा तदन्ते योगात्तपोयोगादुपारतं निवृत्तं मां त्वं यदपृच्छः त्वदुपास्यं वस्तु किमिति पृष्टवत्यसि। स मया उपासितः साक्षादेष एव पुराणः पुरुषः यत्र यस्मिन् पुराणे पुरुषे कालो न विशति यं कालेन कलयति, कालाऽपरिच्छिन्न इत्यर्थः। यश्च कालादिकं सर्वं वस्तुजातं युगपत् साक्षाद्वेद सर्वज्ञ[1] इत्यर्थः।।४४।।

अष्टाध्याय्यर्थं निगमयति मुनिः[2] - **इतीति**। हे तात! इति [3]वात्सल्यात्सम्बोधनम्[3]। हे राजन्! [4]इति इत्थं शार्ङ्गधन्वनोऽजितस्य विक्रमः ते तुभ्यं मया अभिहितः कथितः[5]। कोऽसौ? येनाजितेन कूर्मरूपिणा सिन्धोः क्षीरोदधेः निर्मथने [6]कर्मणि महाचलो मन्दराचलः पृष्ठे धृतः।।४५।।

[7]तदाष्टाध्याय्याः कीर्तनादि फलमाह - एतदिति। एतत्सिन्धोः निर्मथनादिकं पुनः पुनः कीर्तयतः कथयतः; शृण्वतश्च समुद्यमः [8]प्रयत्नः क्वचिदपि देशे जातु कदाचिदपि काले न रिष्यति, रीङ् क्षये, न नङ्क्ष्यति[9] न विफलो भविष्यतीत्यर्थः। कुतः? यद्यस्मात् उत्तम श्लोकस्य भगवतो गुणानामनुवर्णनं समस्तानां संसारश्रमाणां त्रयाणामाध्यात्मि[10]कादीनां तापानामपहन्तृ।।४६।।

भक्तपक्षपातं स्मरन् नमस्करोति - **असदिति**। मथो मथनं, तत्र जातं मथ्यं सिन्धोर्मथने जातममृतं यः कपटयुवतिवेषः सुरारीन् दैत्यान् मोहयन् प्रपन्नानमरश्रेष्ठानाशयदपाययत्, तमसतामजितेन्द्रियाणामविषयोऽङ्घ्रिः यस्य तं भावेन भक्त्या गम्यमुपसृतानामात्मानमनुवर्तमानानां कामानिष्टार्थान् पूरयतीति तथा, तं नतोऽस्मि। कर्तरि क्तः। नमस्कृतवानस्मीत्यर्थः[11]।।४७।।

इति श्रीमद्भागवते अष्टमस्कन्धे

श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां व्याख्यायां

द्वादशोऽध्यायः।।१२।।

**विज०** भागश एकदेशेनाऽपि उत्तमश्लोकस्य हरेः गुणानुवर्णनं समस्तसंसारपरिभ्रमविनाशन मिति यद्यस्मात्तस्मात् निरन्तरमेतदनुशृण्वतः कीर्तयतः पुरुषस्य समुद्यमः समीचीनः प्रयत्नो जातु न रिष्यते न नश्यति । 'रीङ्क्षये'।।४१-४६।।

---

1. A,B,T add अपिवेद 2. W Omits मुनिः 3- -3. W Omits 4. A,B,T Omits इति 5. W Omits कथितः 6 A,B,T काले
7. A,B,T Omit तत् 8. Omits प्र 9. A,B,T add न नश्यति 10. A,B,T "कादिता" 11. W Omits इत्यर्थः

निरन्तर मनुस्मरणार्थं पूर्वोक्तगुणविशिष्टत्वेन तं श्रीनारायणं नमति - **असदविषय** मिति। यो भावेन भक्त्या गम्यं प्राप्यश्च असतामभक्तानामविषयमङ्घ्रिप्रपन्नानमरवर्यान् सिन्धोर्मथनोद्भूतममृत माशयदपाययन्। कीदृशः कपटयुवतिवेषः सुरारीनसुरान् मोहयन् उपसृतानां शरणङ्गतानां पुंसां कामपूर मष्टदं तमिमं श्रीनारायणं नतोऽस्मीत्यन्वय.। अनेन एवंविधे भगवति भक्तिः कर्तव्येति सिद्धमित्युक्तं भवति।।४७।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे द्वादशोऽध्यायः।।१२।।

०००0०००

# त्रयोदशोऽध्यायः

## श्रीशुक उवाच

मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः।
सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु।।१।।

इक्ष्वाकुर्[1-]न भगश्चैव[-1] धृष्ट श्शर्यातिरेव च।
नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते।।२।।

करूषकः[2] पृषध्रश्च दशमो वसुमान् स्मृतः।
मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप!।।३।।

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः।
अश्विनावृभवो[3] राजन्निन्द्रस्तेषां पुरन्दरः।।४।।

कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः।
जमदग्निर्भरद्वाज इति सप्तर्षयः[4] स्मृताः।।५।।

अत्राऽपि[5] भगवज्जन्म कश्यपाददितेरभूत्।
आदित्यानामवरजो विष्णुर्वामनरूपधृत्[6]।।६।।

संक्षेपतो मयोक्तानि सप्त मन्वन्तराणि ते।
भविष्याण्यपि[7] वक्ष्यामि विष्णोश्शक्त्यन्वितानि[8] च।।७।।

विवस्वतश्च द्वे जाये[9] विश्वकर्मसुते उभे।
संज्ञा छाया च राजेन्द्र! ये प्रागभिहिते तव।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयोदशे तु वर्ण्यन्ते सप्तमादीन्यनुक्रमात्। मन्वन्तराणि सर्वाणि षड्विधानि पृथक्पृथक्।।

सप्तमादिमन्वन्तराण्याह - मनु रित्यादिना यावदध्यायसमाप्ति।।१-३।।

**आदित्या** इति। आदित्यादयो देवा इत्यन्वयः।।४,५।।

---

1- -1. M,Ma कुक्ष नभश्चैव 2. A,B,G,J,M,Ma,T "षद्य , H,V "शक. 3. H,V "षभो 4. H,V,W ते ऋषय. 5. H,V त"
6. A,B,G,J,M,Ma,T "क् 7. A,B,G,J,M,Ma,T "ण्यथ 8. A,B,G,J,T "क्त्या" 9. M,Ma भार्ये

**अत्रेति।** भगवतो जन्म अवतारः। तमेवाऽऽह - आदित्यानां विवस्वानर्यमा पूषेत्याद्युक्तानां मध्ये अवरं जन्म यस्य सः।।६।।

**संक्षेपत** इति। शक्त्या अवतारेणान्वितानि।।७।।

अष्टमं मनुं वक्तुं कथामाह - **विवस्वत** इति त्रिभिः।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं षष्ठं चाक्षुषमन्वन्तरं सचरित्राजितावतारं निरूप्याऽथ सप्तमादिमन्वन्तराण्याह मुनिः यावदध्यायसमाप्ति - **मनुरिति।** अधुना विद्यमानः सप्तमो मनुः विवस्वतः पुत्रः श्राद्धदेव इति प्रसिद्धः। तस्य श्राद्धदेवस्याऽपत्यानि पुत्रान् कथयतो मे मत्तः शृणु।।१।।

हे परन्तप! इक्ष्वाक्वादयश्चैते दश वैवस्वतस्य मनोः पुत्राः।।२,३।।

देवानाह - **आदित्या** इति। आदित्यादयो देवा इत्यन्वयः। इन्द्रमाह - हे राजन्! तेषां [1]देवानामधिपतिः इन्द्रः पुरन्दराख्यः।।४।।

सप्तर्षीनाह - **कश्यप** इति।।५।।

अवतारमाह - **अत्रापीति**। अत्राऽपि सप्तमे मन्वन्तरे कश्यपात्पितुः अदितेर्मातुश्च भगवज्जन्माऽभूत्, भगवानवततारेत्यर्थः। स च विष्णुः उपेन्द्राख्यो वामनरूपं धरतीति तथा आदित्यानां विवस्वानर्यमा पूषेत्यादीनां षष्ठस्कन्धोक्तानां मध्ये अवरं जन्म यस्य सः, आदित्यानां कनीयानित्यर्थः।।६।।

एवं वर्तमानं सप्तममन्वन्तरमुक्तम् , षडतीतान्युक्तानि। अथ भविष्याणि अष्टमादिमन्वन्तराणि विवक्षुः उक्तान्यनुवदति - **संक्षेपत** इति। एवं सप्त मन्वन्तराणि संक्षेपतः तुभ्यं मयोक्तानि, अथ भविष्याणि वक्तुं प्रतिजानीते - भविष्याणीति। [2]अथ विष्णोः शक्तिभिरंशैः, अवतारैरिति यावत् अन्वितानि भविष्याणि मन्वन्तराण्यष्टमादीनि वक्ष्यामि। विष्णोः शक्त्यन्वितानि इत्यनेन तेषामवश्यश्रोतव्यत्वं सूच्यते।।७।।

अष्टमं मन्वन्तरं वक्तुं तावत्तदुपोद्घातरूपां कथामाह - **विवस्वत** [3-]इत्यादिभिः[-3] त्रिभिः। विश्वकर्मणः प्रजापते र्दुहितरौ उभे संज्ञाच्छायानाम्न्यौ विवस्वतः द्वे भार्ये। हे राजेन्द्र! ये संज्ञाच्छाये तव तुभ्यं मया प्राक् षष्ठस्कन्धेऽभिहिते उक्ते।।८।।

---

1. A,B,T Omit देवानाम् 2. W Omits अथ 3- -3. A,B,T इति

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

प्रासङ्गिकं समाप्य अवशिष्टश्राद्धदेवादिमनुकथाकथनेन हरे र्माहात्म्यमेव वर्णयति कतिपयैरुत्तरैः अध्यायैः। तत्र श्राद्धदेवः कस्य पुत्रः? इति तत्राऽऽह - **मनुरिति**।।१।।

श्राद्धदेवस्यापत्यानि तत्र देवनामानि सप्तऋषिनामानि हरेरवतारविशेषश्च वक्ति - **इक्ष्वाकु रित्यादिना**।।२-६।।

मन्दानां प्रमेयविज्ञानार्थमुत्तरमन्वन्तराणि प्रतिजानीते - भविष्याणीति ।।७ - ८।।

**[1-]तृतीयां बडबामेके[-1] तासां संज्ञासुतास्त्रयः।**
**यमो यमी श्राद्धदेवश्छायायाश्च सुताञ्छृणु।।९।।**

**सावर्णि स्तपती[2] कन्या भार्या संवरणस्य या।**
**शनैश्चरस्तृतीयोऽभूदश्विनौ बडबात्मजौ।।१०।।**

**अष्टमेऽन्तरे[3] आयाते सावर्णिर्भविता मनुः।**
**निर्मोह[4] विरजस्काद्याः सावर्णे[5]स्तनया नृपाः[6]।।११।।**

**तत्र देवास्सुतपसो विरजा अमृतप्रभाः[7]।**
**तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति।।१२।।**

**दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम्।**
**राद्धमिन्द्रपदं[8] हित्वा ततस्सिद्धिमवाप्स्यति[9]।।१३।।**

**योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः।**
**निवेशितोऽधिके स्वर्गादधुनाऽऽस्ते स्वराडिव।।१४।।**

**गालवो दीप्तिमान्रामो द्रोणपुत्रः कृपस्तथा।**
**ऋष्यशृङ्गः पिताऽस्माकं भगवान्बादरायणः।।१५।।**

**इमे सप्तर्षयस्त[10]स्मिन् भविष्यन्ति स्वयोगतः।**
**इदानीमासते राजन्! स्वे स्व आश्रममण्डले।।१६।।**

---

1- -1. M,Ma °या बडबा नाम 2. H,V,W °तिः 3 M,Ma "रे याते 4 A,B,G,J,T "क" 5. A,B,G,J,T "वर्णित" 6. A,B,G,J,M,Ma,T नृप! 7. M,Ma °जाः 8. H,V,W मुक्त्वा 9. M,Ma °सि 10. A,B,G,J,M,Ma,T °स्तत्र

**श्रीध० तृतीयामिति** । एके बडबां तृतीयामाहुः। मम तु संज्ञैव बडबेति मतम्। तदुक्तं षष्ठे - "सैव भूत्वाऽथ बडबा नासत्यौ सुषुवे भुवि" (भाग.6-6-40) इति। यमश्च यमी च यमुना श्राद्धदेवश्चेति त्रयस्सुताः।।९।।

**सावर्णिरिति**। सावर्णिः पुत्रः ।।१०-१२।।

**दत्त्वेति**। पदत्रयं याचमानाय इमां सर्वां महीं सप्तमे मन्वन्तरे दत्त्वा अष्टमे मन्वन्तरे विष्णोः प्रसादेन च राद्धं लब्धमिन्द्रपदं हित्वेत्यर्थः।।१३-१४।।

**गालव इति**। रामः परशुरामः, द्रोणपुत्रोऽश्वत्थामा ।।१५।।

**इमे** इति। इदानीन्तु स्वयोगत आसते।।१६।।

**वीर०** बडबाख्यां विवस्वतस्तृतीयां भार्यां एके आहुः। मम तु [1]नैव बडबेति मतम्[-1]। " सैव भूत्वाऽथ बडबा नासत्यौ सुषुवे भुवि " ( भाग. 6-6-40) इति [2]षष्ठस्कन्धोक्तेः[-2]। तासां तिसृणां भार्याणां मध्ये संज्ञायाः सुतास्त्रयः। सुता च सुतौ च सुताः। " पुमान् स्त्रिया " ( अष्टा० 1-2-67 ) इत्येकशेषः। एका सुता द्वौ सुतौ इत्यर्थः। अथ छायायाः सुतान् शृणु। अत्रापि पूर्ववदेकशेषः। तदेवाऽऽह - यमश्च यमी च यमुनानदी च श्राद्धदेवश्चेति त्रयः सुता इत्यर्थः।।९।।

तदेवाऽऽह - सावर्णिः सुतः तपत्याख्या कन्या सुता या तपतिः संवरणस्य भार्या कथिता। शनैश्चरस्तृतीयः, सावर्णिशनैश्चरौ द्वौ [3]पुत्रौ तपतिः एका सुता चेत्यर्थः। अश्विनौ तु बडबायाः सुतौ ।।१०।।

अथ अष्टममन्वन्तरषट्कमाह - अष्टम इत्यादिना, नवमो दक्षसावर्णिरित्यतःप्राक्तनेन ग्रन्थेन। अष्टमेमन्वन्तरे आयाते सति सावर्णि विवस्वत एव पुत्रो मनुः [4]भविता भविष्यति। निर्मोहादयः सावर्णेर्मनोः पुत्रा भवितारः।।११।।

तत्र मन्वन्तरे सुतप आद्याख्या देवगणाः, तेषां देवगणानां [5]अधिपतिरिन्द्रो विरोचनसुतो बलिः भविष्यति।।१२।।

तं विशिनष्टि - **दत्त्वेति** द्वाभ्याम्। यो बलिः पदत्रयं याचमानाय विष्णवे वामनाय इमां पृथ्वीं दत्त्वा [6]विष्णोः प्रसादात् राद्धं लब्धं इन्द्रपदं हित्वा, अनुभवपूर्वकं हित्वेत्यर्थः। ततः सिद्धिं मुक्तिमवाप्स्यति।।१३।।

---

1--1. A,B,T नैवमेव 2--2. W Omits 3. W सुतौ 4. A,B,T Omit भविता 5. W 'प. 6. A,B,T तत्र

योऽसौ बलिर्भगवता बद्धः पुनः प्रीतेन तेनैव भगवता सुतले स्वर्गादप्यधिके लोके निवेशितोऽधुना स्वराडिन्द्र इवाऽऽस्ते।।१४।।

अत्र मन्वन्तरे भविष्यतः सप्तर्षीनाह- गालव इति। रामः परशुरामः, द्रोणपुत्रोऽश्वत्थामा, कृपः कृपाचार्यः।।१५।।

इमे गालवादयः स्वयोगतः स्वयोगप्रभावात् सप्तर्षयो भविष्यन्ति। हे राजन्! इदानीं त एते गालवादयः स्वकीयाश्रमस्थानेषु[1] वर्तन्ते।।१६।।

**विज०** तासां संज्ञा छाया बडबानां मध्ये संज्ञासुता एत इत्याह - यम इति।।९-१२।।

बलेरिन्द्रपदानन्तरं का सिद्धिरिति तत्राऽऽह - **दत्त्वेमामिति**। पदत्रयं याचमानाय विष्णवे इमां पृथिवीं दत्त्वा राद्धं सिद्धमिन्द्रपदं हित्वा यो बलिः ततस्सिद्धिं मुक्तिमवाप्स्यतीत्यन्वयः।।१३।।

इदानीं कुत्राऽऽस्त इत्यत[2] आह - **य** इति। स्वराडिव इन्द्र इव।।१४,१५।।

स्वयोगतः अच्युतनिष्ठालक्षणयोगात् इदानीं कुत्राऽऽसत इति तत्राऽऽह - इदानीमिति।।१६।।

**देवगुह्यात्[3]सरस्वत्यां सार्वभौम[4] इति प्रभुः।**
**स्थानं पुरन्दराद्धृत्वा बलये दास्यतीश्वरः।।१७।।**

**नवमो दक्षसावर्णिर्मनु र्वरुणसम्भवः।**
**धृत[5]केतु दीप्तकेतु रित्याद्यास्तत्सुता[6] नृपाः[7]।।१८।।**

**पारा[8] मरीचिगर्भाद्या देवा[9] इन्द्रोऽद्भुतस्स्मृतः।**
**द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः।।१९।।**

**आयुष्मतोऽम्बुधारायामृषभो भगवत्कला[10]।**
**भविता येन संराद्धां[11] त्रिलोकीं भोक्ष्यतेऽद्भुतः[12]।।२०।।**

**दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान्।**
**तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः।।२१।।**

---

1. A,B,T °श्रमेषु 2. A Omits इत्यत: 3. H,V वेदगुह्यां ; B,M,Ma देवगुह्यां 4. M,Ma °मपतिः 5. A,B,G,J,M,Ma,T भूत° 6. W °तान् 7. A,B,G,J,M,Ma,T नृप! 8. H,V परो मरीचिगं ; M,Ma परा मरीचिग° ; W धाता मरीचिगं 9. W °व इन्द्र श्रुत. 10. M,Ma °वान् किल 11. M,Ma सन्त्रातो ; W संरुद्धां 12 W °ते श्रुतः

***तत्रापि जन्म भविता हरेर्विश्वसृजो[1] गृहे।**
**[2]अमूर्तिरिति विख्यातो येनाप्यायेत वै जगत्।।**
**हविष्मान्सुकृति[3]स्सत्यो [4]जटामूर्तिस्तदा द्विजाः।**
**[5]सुवासन [6]विरुद्धाद्या देवाश्शम्भुस्सुरेश्वरः।।२२।।**

**विष्वक्सेनो विषूच्यान्तु शम्भोस्स[7]ख्यं करिष्यति।**
**[8]जातोऽशांशेन भगवान्गृहे विश्वसृ[9]जो विभुः।।२३।।**

**मनुर्वै धर्मसावर्णिरेकादशम आत्मवान्।**
**अनागता[10] स्तत्सुताश्च सत्यधर्मादयो दश।।२४।।**

**श्रीध०** [11-]**पारा** इति। अद्भुत इन्द्रः[-11]।।१७-२१।।

हविष्मत्प्रमुखा इत्युक्तानामेव केषाञ्चिन्नामान्याह - **हविष्मानिति**।।२२।।

**विष्वक्सेन** इति। विषूच्यां जातस्सन्।।२३।।

**मनुरिति**। एकादशम इत्यादिरार्षः।।२४।।

**वीर०** अवतारं तच्चरितञ्चाऽऽह - **देवगुह्यादिति**। ईश्वरो भगवान् देवगुह्यात्सरस्वत्यामवतीर्णः सार्वभौम इति प्रसिद्धो विभुः समर्थः, अत एव पुरन्दरात् सप्तममन्वतरस्थादिन्द्रात् स्थानमिन्द्रपदं हत्वाऽपनीय बलये दास्यति। अत्रेदमनुसन्धेयम् - चाक्षुषाख्ये षष्ठे मन्वन्तरे यदा दुर्वास[12]सश्शापेन गतश्रीरिन्द्रोऽजितशरणवरणात् तत्सहायोऽमृतं प्राश्य बलिं विजित्य सश्रीकः सदेवगणस्त्रिलोकाधिपत्यं कृतवान् तदा बलिः भार्गवैराहितबलः तमिन्द्रमुच्चाट्य त्रिविष्टपमधितस्थौ। तदा पुनरदित्याऽऽराधितो भगवानादित्याना म[13]नुजो वामनो भूत्वा पदत्रययाच्ञाव्याजेन बलेस्त्रिविष्टपं गृहीत्वा इन्द्राय पुरन्दराय प्रदाय बलिमनुगृह्णन् इदमाह - "एष मे प्रापितः स्थानं दुष्प्रापममरैरपि। सावर्णेरन्तरस्याऽयं भवितेन्द्रो मदाश्रयः।। तावत्सुत[14]लमध्यास्ते विश्वकर्मविनिर्मितम्" (भाग 8-22-31,32 ) इति तदेवमनुगृहीतस्तत्प्रभृतिसुतलेऽधिवसन् आयास्यत्यष्टमे मन्वन्तरे तदाऽवतरिष्यमाणेन सार्वभौमाख्येन भगवता पुरन्दरादपनीय दत्तेन्द्रपद इन्द्रो भविष्यति। ततस्तदाधिपत्यावसाने सिद्धिमवाप्स्यतीति।।१७।।

---

*An extra verse is found in H,Ma,V editions 1. M,Ma सृजां 2. M,Ma श्रीम्° 3. M,Ma कृत° 4. A,B,G,J,M,Ma,T जयो 5. H,V सुब्रमाणो 6. W °बुधाद्या 7. शशक्ति विधास्यति 8. A,B,G,J,T जातस्स्वांशेन ; M,Ma जातश्शान्तस्तु 9. M,Ma सृजां 10. M,Ma °त° 11- -11. H,V Omit 12. A,B,T °सश्शा° 13. A,B,T °मवरजो 14. A,B,T °लमधि°

नवममन्वन्तरषट्कमाह - **नवम** इति। वरुणसम्भवः वरुणस्य पुत्रः दक्षसावर्णिरिति प्रसिद्धो मनुः [1]नवमो भविता [2]भविष्यति। तस्य सुताः धृतकेत्वादयो [3-]भविष्यन्ति[-3]।।१८।।

धात्रा[4]दयो देवगणा इन्द्रस्तु श्रुतः इति प्रसिद्धो भविता द्युतिमत्प्रभृतयस्सप्तर्षयः [5]भविष्यन्ति।।१९।।

एवं मन्वादयः पञ्चोक्ताः सचरित्रमवतारमाह - **आयुष्मत** इति। अम्बुधारायां भार्यायाम् आयुष्मतः सकाशात् भगवानवतीर्णः ऋषभ इति प्रसिद्धो भविता, येनऋषभेण संरुद्धां रक्षितां त्रिलोकीं श्रुताख्य इन्द्रो भोक्ष्यते पालयिष्यति।।२०।।

दशममन्वन्तरषट्कमाह - **दशम** इति। उपश्लोकस्य सुतो महान् सुगुणः ब्रह्मसावर्णिरिति प्रसिद्धो दशमो मनुर्भविता। तस्य ब्रह्मसावर्णेर्मनोः सुताः भूरिषेणाद्याः द्विजाः। सप्तर्षयस्तु हविष्मत्प्रभृतयः।।२१।।

एतानेव कांश्चिन्निर्दिशति - **हविष्मानिति**। सुवासनादयो देवगणाः [6]भविष्यन्ति। सुरेश्वर इन्द्रस्तु शम्भुः [7]भविष्यति।।२२।।

अवतारमाह - विष्वक्सेनो विभुर्भगवान् विश्वजितो गृहे तद्भार्यायां विषूच्यां स्वांशेनाऽवतीर्णः शम्भोरिन्द्रस्य सख्यं करिष्यति।।२३।।

एकादशमन्वन्तरषट्कमाह - **मनुरिति**। आत्मवान् प्रशस्तमनस्को धर्मसावर्णिरिति प्रसिद्धः एकादशो मनुर्भविष्यति। एकादशम इत्यार्षम्। तस्य धर्मसावर्णेस्सुताः दश सत्यधर्मादयोऽनागताः भवितारः।।२४।।

**विज०** स्थानं स्वर्गम्।।१७-१९।।

अम्बुधारायां स्त्रियां येन ऋषभेण सन्त्रातोऽद्भुतो नामेन्द्रः।।२०-२२।।

शम्भोरिन्द्रस्य [8]शान्तः शान्ताख्यः।।२३।।

अनागतो भविष्यन्।।२४।।

**विहङ्गमाः कामगमा निर्वा[9]णाः रुचयस्सुराः।**
**इन्द्र[10]स्तु वैधृतस्तेषामृषयश्चारुणादयः।।२५।।**

**[11]आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः।**
**वैधृ[12]तायां हरेरंशः त्रिलोकीं धारयिष्यति।।२६।।**

1. W Omits नवम: 2. W Omits भविष्यति 3- -3 W Omits 4. A,B,T "द्याः 5. A,B,T भवितारः 6. A,B,T भवितारः 7. A,B,T भविता 8. A Omits शान्तः 9 A,B,G,J,M,Ma,T "णारु" 10. A,B,G,J,T, इ वैधृतस्ते , M,Ma "ष्वेव धृतिस्ते W स्तु वै ध्रुवस्ते 11. A,V सू" 12. H,V "तो यो

**भविता [1]रुद्रसावर्णी राजन्द्वादशमो मनुः।**
**देववानुपदेवश्च [2]देवश्रेष्ठादयस्सुताः।।२७।।**

**[3]ऋतुधामा च तत्रेन्द्रो देवाश्च हरितादयः।**
**ऋषयश्च तपोमूर्तिस्त[4]पश्चाग्नीध्रकादयः।।२८।।**

**स्वधामाख्यो हरेरंशस्साधयिष्यति तन्मनोः।**
**अन्तरं सत्य[5]सहसः सूनृतायास्सुतो विभुः।।२९।।**

**मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान्।**
**चित्रसेन विचित्राद्या देवसावर्णिदेहजाः।।३०।।**

**देवास्सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पतिः।**
**निर्मो[6]कतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा।।३१।।**

**देवहोत्रस्य तनय उपहर्ता दिवस्पतेः।**
**योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति।।३२।।**

**श्रीध० स्वधामेति।** तस्य मनोरन्तरं साधयिष्यति। सत्य[7]तपसः या सूनृता [8-]स्त्री[-8] तस्याः सुतस्सन्।।२५-३१।।

**देवेति।** दिवस्पतेरिन्द्रस्य उपहर्ता सम्पादकः [9-]देवहोत्रस्य[-9] [10-]बृहत्यां[-10] सम्भविष्यति।।३२।।

**वीर०** विहङ्गमाद्या देवगणाः, तेषामधिपतिरिन्द्रस्तु ध्रुव इति प्रसिद्धो भविता [11]ऋषयः सप्तर्षयस्त्वरुणादयः।।२५।।

अवतारमाह - **अर्यकस्येति** । आर्यकस्य भार्यायां वैधृतायां जातोऽवतीर्णः हरेरंशस्तत्र मन्वन्तरे धर्मसेतुरिति प्रसिद्धो [12]भविष्यति। स च त्रिलोकीं धारयिष्यति [13-]रक्षिष्यति[-13]।।२६।।

हे राजन्! द्वादशो मनुः रुद्रसावर्णिरिति प्रसिद्धो भविता। तस्य सुता देवादयः।।२७।।

तत्र मन्वन्तरे [14]ऋतुधामाख्य इन्द्रः। हरितादयो देवगणाः। सप्तर्षयस्तु तपःप्रभृतयः।।२८।।

1. H,V भद्र ; M.Ma मेरु° 2. A,B,G,J,M,Ma °वश्रेष्ठा° 3. A,B,G,J,M,Ma,T ऋत° 4. A,G,J,T °स्व्या°; B °ख्या° 5. H,V, तपसः 6. H,V, °ह 7. A,B,J सहसः 8- -8. B,H,J,V Omit 9- -9. B,H,J,V Omit 10- -10. B Omits 11. A,B,T, Omit ऋषयः 12. A,B,T भविता 13- -13. A,B,T Omit 14. A,B,T ऋत°

स्वसुधामाख्यो हरेरंशावतारः, तस्य मनोः रुद्रसावर्णेरन्तरं साधयिष्यति। स च सत्यसहस्सूनृतयोः सुतः।।२९।।

त्रयोदशो मनुः देवसावर्णिरिति प्रसिद्धो भाव्यः भविता। देवसावर्णेर्देहाज्जाताः तत्सुताः चित्रसेनादयः।।३०।।

सुकर्मादिसंज्ञकाः देवगणाः, इन्द्रस्तु दिवस्पतिरिति प्रसिद्धो भविता। तदा मन्वन्तरे ऋषयस्सप्त ऋषयो निर्मोकादयो भविष्यन्ति।।३१।।

देवहोत्रस्य भर्यायां बृहत्यां हरेरंशः सम्भविष्यति, स च योगेश्वराख्यो देवहोत्रस्य तनयो दिवस्पतेरिन्द्रस्य उपहर्ता इष्टसम्पादको भविता।।३२।।

**विज०** दिवस्पतिनामा।।२५-३२।।

**मनुर्वा[1] इन्द्रसावर्णिश्चतुर्दशम एष्यति।**
**[2]उरुगम्भीरवस्वाद्या[2] इन्द्रसावर्णिवीर्यजाः।।३३।।**

**[3]पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति।**
**अग्निर्बाहु श्शुचिश्शुक्रो[4] मागधाद्यास्तपस्विनः।।३४।।**

**[5]सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः।**
**[6]वितानायां महाराज क्रियातन्तून्वितायिता।।३५।।**

**राजंश्चतुर्दशैतानि त्रिकालानुगतानि ते।**
**प्रोक्तान्येभिर्मितः[7] कल्पो युगसाहस्रपर्ययः।।३६।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहस्यां संहितायां
अष्टमस्कन्धे मन्वन्तरानुवर्णनं नाम त्रयोदशोऽध्यायः।।१३।।

**श्रीध० सत्रायणस्येति।** क्रियातन्तून् कर्मसन्ततीः वितायिता विस्तारयिष्यति।।३३-३५।।

**राजन्निति।** युगसाहस्रेण पर्ययः परिवर्तो यस्य युगसहस्रप्रमाण इत्यर्थः।।३६।।

---

1. M,Ma 'ते 2- -2. A,B,G,J,T उरुगम्भीरबुद्धयाद्या , M,Ma जन्तुभीरवसयाद्या 3. M,Ma विचित्रा' 4 A,B,G,J,M,Ma,T 'श्शुद्धो
5. M,Ma नारायणस्य 6. H,V वितानाय , M,Ma विनतायां 7. A,B,G,J,M,Ma,T 'मित.

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां त्रयोदशोऽध्यायः।।१३।।

**वीर०** चतुर्दशो मनुस्त्विन्द्रसावर्णिरिति प्रसिद्धः एष्यति भविष्यति। तद्वीर्यजाः तत्सुताः उर्वादयः।।३३।।

देवगणास्तु पवित्रादिसंज्ञिताः। इन्द्रश्शुचिरिति प्रसिद्धः भविष्यति। तपस्विनःसप्तर्षयो अग्न्यादयः।।३४।।

हरिर्भगवान् सत्रायणस्य तनयो बृहद्भानुरिति प्रसिद्धो भविष्यति। हे महाराज! स च बृहद्भानुः वितानायां सत्रायणस्य भार्यायां जातः क्रियातन्तून् यज्ञकर्मसन्तानान् वितायिता विस्तारयिष्यति।।३५।।

मन्वन्तरकथनमुपसंहरति - **राजन्निति**। हे राजन् ! त्रिकालानुगतानि भूतवर्तमान भविष्यत्कालानुगतानि तत्र भूतानि षट् वर्तमानमेकं भविष्याणि सप्त इत्येवं चतुर्दशमन्वन्तराणि ते तुभ्यं मया प्रोक्तानि। एभिश्चतुर्दशभिर्मन्वन्तरैः कल्पः दैनन्दिनात्मकः कल्पः। स च युगसाहस्रपरिमितः युगानां कृतादीनां सहस्रवारं पर्ययः परिवृत्तिर्यस्मिन् स तथाभूतः।।३६।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रयोदशोऽध्यायः।।१३।।

**विज०** क्रियातन्तून् क्रियासमुदायान् वितायिता विस्तारं कारयिता।।३३-३५।।

त्रिकालानुगतानि अतीतवर्तमानभविष्यत्संज्ञान् त्रिकालान् अनुवर्तमानानीति। त्रिलोकानुगतानीति पाठे स्पष्टोऽर्थः। ते तव मितः प्रमाणीकृतः।।३६।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे त्रयोदशोऽध्यायः।।१३।।

oooOooo

# चतुर्दशोऽध्यायः

## (विजयध्वजरीत्या त्रयोदशोऽध्यायः)

[1-] श्रीविष्णुरात उवाच [-1]

मन्वन्तरेषु भगवन्[2]! यथा मन्वादय स्त्विमे[3]।
यस्मिन् कर्मणि ये येन नियुक्ता स्तद्वदस्व न[4]ः।।१।।

[5-] ब्रह्मरात उवाच [-5]

मनवो मनुपुत्राश्च मुनयश्च महीपते।
इन्द्रास्सुरगणाश्चैव सर्वे पुरुषशासनाः।।२।।

यज्ञादयो याः कथिताः पौरुष्य स्तनवो नृप।
मन्वादयो जगद्यात्रां नयन्त्याभिःप्रचोदिताः।।३।।

चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान्यथा।
तपसा ऋषयोऽपश्यन् यतो धर्म स्सनातनः।।४।।

ततो धर्मं चतुष्पादं मनवो हरिणोदिताः।
युक्ता स्सञ्चारयन्त्यद्धा स्वे स्वे काले महीं नृप।।५।।

पालयन्ति प्रजापाला यावदन्तं विभागशः।
यज्ञभागभुजो देवा ये [6-] चाऽन्येऽत्रानुकीर्तिताः [-6]।।६।।

इन्द्रो भगवता दत्तां त्रैलोक्यश्रिय मूर्जिताम्।
भुञ्जानः पाति लोकांस्त्रीन् कामं लोके प्रवर्षति।।७।।

ज्ञानञ्चा[7]ऽनुयुगं ब्रूते हरिस्सिद्ध[8]स्वरूपधृत्[9]।
ऋषिरूपधरः कर्म योगं योगेशरूपधृत्[10]।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम्। पृथक्कर्माणि वर्ण्यन्ते भगवद्वशवर्तिनाम्।

---

1- -1. A,B,G,J,M,Ma,T राजो वाच 2. M,Ma °वान् 3. W स्त्वमी 4 A,B,G,J,M,Ma,T मे 5- -5. A,B,G,J,M,Ma,T ऋषिरुवाच 6- -6. A,B,G,J,T ये च तत्राऽन्विताश्च ते ; M,Ma ये च तत्राऽनुकीर्तिताः 7. M,Ma °ञ्चातुर्युगं 8. H,V स्सिद्धेश 9. A,B,G,J,M,Ma,T °कृ 10. A,B,G,J,M,Ma,T °कृ

**मनव** इति। पुरुषेणेश्वरेण यज्ञाद्यवतारैः[1] शास्यन्ते नियुज्यन्ते इति तथा।।१,२।।

तदेवाऽऽह - **यज्ञादय** इति।।३।।

ऋष्यादीनां कर्माण्याह - **चतुर्युगान्त** इति चतुर्भिः। यतो येभ्यः श्रुतिगणेभ्यः।।४।।

**तत** इति। उदिता उक्ताः। युक्ताः[2] संयतास्सन्तो महीं धर्मं सञ्चारयन्ति ; मह्यां धर्मं प्रवर्तयन्तीत्यर्थः।।५।।

**पालयन्तीति**। प्रजापाला मनुपुत्रास्तं धर्मं पालयन्ति। यावदन्तं यावन्मन्वन्तरावसानम्। विभागशः पुत्रपौत्रादिक्रमेण। ये चाऽन्येद्यावापृथिव्यादयः अत्र[3] कर्मणि भोक्तृत्वेनाऽन्वितास्तैश्च सह।।६,७।।

प्रसङ्गाद्रूपान्तरै रपि जगद्यात्राप्रवर्तन माह **ज्ञानमिति** द्वाभ्याम्। सिद्धेशाः[4] सनकादयः। ऋषयो याज्ञवल्क्यादयः। योगेशा दत्तात्रेयादयः। तत्तद्रूपस्सन् ज्ञानं कर्म च योगञ्च ब्रूते।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं मन्वन्तरेषु कथितेषु प्रसङ्गान्मन्वादीनां कृत्यं पृच्छति राजा - **मन्वन्तरेष्विति**। हे भगवन्! मन्वन्तरेष्वमी उक्ता मन्वादयः, आदिशब्दग्राह्या स्तत्पुत्रादयः पञ्चअमी मन्वादयः येन यस्मिन् कर्मणि ये नियुक्ताः तन्नोऽस्मभ्यं वदस्व प्रत्येकं मन्वादीनां कृत्यं वदेत्यर्थः[5]।।१।।

तत्र येनेति पृष्टं नियोक्तारं तावदाह मुनिः - **मनव** इति। हे महीपते! मन्वादयः पञ्चैते सर्वे पुरुषेणेश्वरेण यज्ञाद्यवतारैः शास्यन्ते नियुज्यन्त इति तथा।।२।।

तदेवाऽऽह - **यज्ञादय** इति। हे नृप! पौरुष्यः परमपुरुषस्य सम्बन्धिन्यः तनवोऽवताराः या यज्ञादयः कथिताः आभिस्तनुभिः प्रचोदिता नियुक्ता मन्वादयः जगद्यात्रां नयन्ति जगत्पोषणं कुर्वन्तीत्यर्थः।।३।।

एवं भगवदवतारो नियोक्ता, मन्वादयो नियोज्याः जगद्यात्रानयनं तेषां कर्मेत्युक्तम्। अथ कथं जगद्यात्रां नयन्तीत्यपेक्षायां तावदृषीणां कर्माऽऽह - **चतुर्युगान्त** इति। पूर्वपूर्वमन्वन्तरावसाने कालेनाऽध्येत्रभाव युक्तकालेन ग्रस्तान् विप्लुतान् श्रुतिगणान् पुनर्यथावदृषयः सप्त ऋषयः तपःप्रभावेनाऽपश्यन् साक्षात्कृत्य प्रवर्तितवन्त इत्यर्थः। श्रुतिगणान्विशिनष्टि - यतो येभ्यः श्रुतिगणेभ्यः सनातनो धर्मः, अवबुध्यते इति शेषः।।४।।

---

1. A "ज्ञाव" 2. H,V Omit युक्ताः 3. A,B,J यत्र 4. A,B,J "द्धा : 5. A,B,T वदस्वेत्यर्थः

मनूनां कर्माऽऽह - **तत** इति। ततः ऋषिभिः यथावत् श्रुतिगणदर्शनानन्तरं तदवबोधितं स्वं स्वप्रवर्त्यं[1] चतुष्पादं धर्मं हरिणा यज्ञादिरूपिणा उदिता उक्ता नियुक्ता इत्यर्थः। संयतास्सन्तो मनवः अद्धा साक्षात् स्वे स्वे काले युगानुरूपं महीं मह्यां सञ्चारयन्ति उपदेशेन[2] प्रवर्तयन्ति।।५।।

मनुपुत्राणां कृत्यमाह - **पालयन्तीति**। प्रजापाला मनुपुत्राः तं धर्मं यावदन्तं यावन्मन्वन्तरावसानं विभागशः पुत्रपौत्रादिक्रमेण वर्णाश्रमविभागेन च पालयन्ति। देवानां कर्माऽऽह - **यज्ञेति**। ये च ऋषिपितृभूतमनुष्याः यत्र पञ्चमहायज्ञादौ कर्मण्यन्विताः भोक्तृत्वेनाऽन्विताः तै स्सह देवा यज्ञभागभुजः तद्वोक्तारः।।६।।

इन्द्रस्य कृत्यमाऽऽह[3] - **इन्द्र** इति। भगवता यज्ञादिरूपिणा दत्तां अत एवोर्जितां प्रभूतां त्रैलोक्यश्रिय मनुभवन् त्रीन् लोकान् पाति। कथं पातीत्यत्राह कामं यथेष्टं लोकेऽभिवर्षति वृष्ट्या पातीत्यर्थः।।७।।

अथाऽवतारस्य कृत्यमाह - **ज्ञानमिति**। चशब्देन मन्वादिनियोजनं समुच्चीयते। हरि र्यज्ञाद्यवताररूपः सिद्धरूपधृत् कपिलादिरूपधृत्[4] ज्ञानं युगानुरूपं ब्रूते उपदिशति।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

यथा कथं प्रवृत्त इति शेषः। ये इमे मन्वादयो येन पुरुषेण यस्मिन् कर्मणि नियुक्ताः प्रेरिता वर्तन्ते, तत्सर्वम्।।१,२।।

कोऽयं पुरुष इति तत्राह - **यज्ञादय** इति। मन्वादिकालमारभ्य तेन यज्ञनाम्ना हरिणा प्रचोदिता मन्वादयो जगद्यात्रां जगत्स्थितिं नयन्तीत्यन्वयः। यतः श्रुतिगणेभ्यः सनातनो धर्मः सिद्धः, ऋषयः तान् श्रुतिगणान् यथावत्तपसाऽपश्यन्।।३,४।।

तत स्तदुक्तविधिना हरिणा चोक्ता मनव स्तं चतुष्पादं धर्म मद्धा सञ्चारयन्ति।।५।।

प्रजापाला नृपाश्च स्वस्वकाले विभागशो यावदन्तं कर्मक्षयपर्यन्तं महीं पालयन्तीत्यन्वयः।।६,७।।

सिद्धस्वरूपः ज्ञानमुपदिशति, ऋषिरूपधरो हरिः कर्म, योगेश्वररूप धृग्योगम्।।८।।

**सर्गं[5] प्रजेशरूपेण दस्यून् हन्यात्[6] स्वराड्वपुः।**
**कालरूपेण सर्वेषा मभावाय[7] पृथग्गुणः।।९।।**

**स्तूयमानो जनैरेभि र्मायया नामरूपया।**
**विमोहितात्मभिर्नानादर्शनै र्न च दृश्यते।।१०।**

1. A,T स्वं 2. A,T °शान् 3. A,B,T कर्माऽऽह 4. A,B,T °क 5 M,Ma सर्वं 6. M,Ma हन्ति 7. H,M,Ma,V,W °म

**एत त्कल्पविकल्पस्य प्रमाणं परिकीर्तितम्।**
**यत्र मन्वन्तराण्याहु श्चतुर्दश पुराविदः।।११।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे चतुर्दशोऽध्यायः।।१४।।

**श्रीध० सर्गमिति**। प्रजेशा मरीच्यादयः तेन रूपेण, सर्गं करोतीति शेषः। स्वराड्वपू राजमूर्तिः। सर्वेषामभावाय भवति पृथग्विधा गुणाः शीतोष्णादयो यस्य।।९।।

**स्तूयमान** इति। नामरूपात्मिकया मायया विमोहितात्मभि रेभिर्जनैः नानादर्शनैः [1]अनेकशास्त्रैः स्तूयमानो निरूप्यमाणोऽपि नैव दृश्यत इत्यर्थः।।१०।।

प्रासङ्गिकं निरूप्य प्रस्तुत मेवोपसंहरति **एतदिति** । एतत् कल्पविकल्पस्य अवान्तरकल्पस्य[2]।।११।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्दशोऽध्यायः।।१४।।

**वीर०** प्रजेशरूपेण मरीच्यादिरूपेण, सर्गं करोतीति शेषः। स्वराड्वपुः राजमूर्तिस्सन् तदनुप्रवेशनेत्यर्थः[3]। दस्यून् दुष्टसत्त्वात् हन्यात् पुनः कालरूपेण सर्वेषामभावाय लयाय च भवति। कथम्भूतः? पृथग्गुणः सृष्ट्याद्युपयुक्तगुणविशिष्टः।।९।।

नामरूपया नामरूपभाजा मायया विमोहितानि मनांसि येषां तैः अत एव नानादर्शनैः ज्ञानैकाकारेषु आत्मसु देवमनुष्यादिनानाबुद्धिं कुर्वद्भिरेभिर्जनैः केवलं स्तूयमान एव शास्त्रेण निरूप्यमाण एव। न तु दृश्यते इत्यर्थः।।१०।।

प्रासङ्गिकं निरूप्य "मनवोऽस्मिन् व्यतीताः स्युः कल्पे स्वायम्भुवादयः" (भाग. 8-1-4) इति मन्वन्तरकथनार्थतया प्रस्तुतं कल्पमेवोपसंहरति - **एतदिति**। कल्पविकल्पस्य कल्पभेदस्य अवान्तरकल्पस्य, दैनन्दिनकल्पस्येत्यर्थः। एतच्चतुर्दशमन्वन्तरात्मकं प्रमाणं परिकीर्तितं, कोऽसौ कल्पविकल्पः पुराविदः कल्पविकल्पयाथात्म्यविदः यत्र कल्पविकल्पे मन्वन्तराणि चतुर्दश आहु रूचुः।।११।।

---

1. B,H,J,V Omit अनेक 2. B,H,J,V add प्रमाणमुक्तं यत्र चतुर्दशमन्वन्तराण्याहुः 3. W °ति भावः

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्याया चतुर्दशोऽध्यायः।।१४।।

**विज०** प्रजापतिरूपेण सर्गंकरोति स्वराड्वपुः क्षत्रवपुः दस्यून्हन्ति। पृथग्गुणः अयथार्थज्ञान जनकतमोगुणप्रवर्तकः।।९।।

एभिः ऋष्यादिभिः स्तूयमानो दृश्यते, नामरूपरहितया अदृश्यत्वादिस्वभावविशिष्टया मायया अव्यक्तशब्दवाच्यया मोहितात्मभिः जनैः कल्पितैः नानादर्शनैः अद्वैतादिनानाविधशास्त्रै र्न दृश्यते, न ज्ञायते। च शब्दात् द्वैतज्ञानेन दृश्यत इति ग्राह्यम्। "अन्यमीशस्य महिमान मिति वीतशोकः" इति श्रुतेः।।१०।।

उपसंहरति - **एतदिति**। पुराविदो यत्र यस्मिन् कल्पे चतुर्दशमन्वन्तराण्याहुः, तस्य कल्पस्य एत त्प्रमाणमुक्तम्। यस्मिन् अवान्तरमन्वन्तराण्याहुः, तस्य विकल्पस्य एतत्प्रमाणं परिकीर्तितं, शास्त्रान्तरे इति शेषः। इति कल्पविकल्पस्य कल्पभेदस्येति वा।।११।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
चतुर्दशोऽध्यायः।।१४।।
( विजयध्वजरीत्या त्रयोदशोऽध्यायः)

०००0०००

# पञ्चदशोऽध्यायः

## (विजयध्वजरीत्या चतुर्दशोऽध्यायः)

### [1-] विष्णुरात उवाच [-1]

बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत।
[2] भूतेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम्।।१।।

एतद्वेदितु मिच्छामो महत्कौतूहलं हि नः।
यज्ञेश्वरस्य पूर्णस्य बन्धनं[3]चाऽप्यनागसः।।२।।

श्रीशुक उवाच

पराजितश्रीरसुभिश्च हापित[4]स्त्विन्द्रेण राजन्भृगुभिस्सजीवितः।
सर्वात्मना तानभजद्भृगून्बलिः शिष्यो [5]महात्मार्थनिवेदनेन।।३।।

तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन्विश्वजिता त्रिणा[6]कम्।
जिगीषमाणं विधिनाऽभिषिच्य महाभिषेकेण महानुभावाः।।४।।

ततो रथः काञ्चनपट्टब[7]द्धो हयाश्च हर्यश्वतुरङ्गवर्णाः।
ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भि[8]रिष्टात्।।५।।

धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचञ्च दिव्यम्।
पितामहस्तस्य ददौ च माला मम्लानप[9]ष्पां जलजञ्च शुक्रः।।६।।

एवं स विप्रार्जितयोधनार्थः तैः कल्पितस्वस्त्ययनोऽथ विप्रान्।
प्रदक्षणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार।।७।।

अथाऽऽरुह्य रथं दिव्यं भृगुदत्तं महारथः।
सु[10-]स्रग्धरोऽथ सन्न[-10]ह्य धन्वी खड्गी धृतेषुधिः।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका।

अत्रेर्यते नवाध्या[11]य्यां वामं वामनचेष्टितम्। नि[12]ग्रहच्छलतो यत्र बलेर्भूया ननुग्रहः।।
बलिं पञ्चदशे विश्वजिताऽऽचार्या [13]अयाजयन्। ततोऽसौ स्वर्गमजयद्भयाद्देवा निलिल्यिरे।।

1- -1. A,B,G,J,M,Ma,T राजोवाच 2. A,G,J,T भूत्वे" 3. M,Ma "नं बाऽ" 4. A,B,G,J,T "तो ही" ; M,Ma "त इ" 5. M,Ma महान्स्वार्थ" 6. H,M,Ma,V "लो" 7 .A,B,G,J,T "न" 8. M,Ma "रिद्धात् 9. A,B,G,J,M,Ma,T पुष्पां 10- -10. H,V "र सरभसो ; M,Ma "रोऽथ सन्नद्ध" , W "रसुसन्नद्ध" 11. H,V, य्या 12. H,V "हा" 13. H,V ह्य"

**बलेरिति।** ईश्वरः स्वयं कृपणवत् कस्मात् हेतोरयाचत, लब्धार्थो भूत्वाऽपि तं कस्माद्बबन्ध?।।१,२।।

तत्र तावद्बले स्त्रिलोकीमपहर्तुं याच्ञादिच्छलं[1] कृतवानिति वक्तुं ब्राह्मणाराधनबलेन बलेः अकाण्ड एव स्वर्गविजयक्रममाह - **पराजितश्रीरित्यादिना।** यावदध्यायपरिसमाप्ति[2]। युद्धे पराजिता श्रीर्येन सः। इन्द्रेणाऽसुभिश्च त्याजितस्सन्। भृगून् भृगोर्वंश्यान् शुक्रादीन्। महात्मा उदारचित्तः। अर्थानां निवेदनेनाऽर्पणेन।।३।।

**तमिति[3]।** त्रिलोकं स्वर्गं जेतुमिच्छन्तं विश्वजिता यागेनाऽयाजयन्। महाभिषेकेण ऐन्द्रेण बह्वृच[4] ब्राह्मणे प्रसिद्धेन।।४।।

**तत इति।** हर्यश्वस्येन्द्रस्य ये तुरङ्गास्तेषामिव वर्णो हरितो येषाम्।।५।।

**धनुरिति।** पुरटं सुवर्णम्। तूणौ इषुधी। अरिक्तौ अक्षय्यशरौ। पितामहः प्ह्लादः जलजं शङ्खम्।।६।।

**एवमिति।** विप्रैरार्जितः सम्पादितो योधनार्थो युद्धपरिकरो यस्य तै रेव कल्पितं कृतं स्वस्त्ययनं मङ्गलवाचनादि यस्य। आमन्त्र्य पृष्ट्वा।।७।।

**अथेति।** अथाऽऽरुह्य रराजेति द्वयोरन्वयः। सुस्रग्धरः शोभनमालाधरः संनह्य[5] कवचं न्यस्य।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं मन्वन्तराण्याकर्ण्य "दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम्" (भाग.8-13-13) इति सङ्ग्रहेणोक्तं, हरेर्वामनरूप[6]स्य चरित्रं विस्तरेण बुभुत्सुः पृच्छति राजा-बलेरिति द्वाभ्याम्। हरिः स्वयमीश्वरः अवाप्तसमस्तकामो भूत्वा कृपणवत् कस्माद्धेतोः बलेः सकाशात् भूमेः पदत्रयमयाचत? लब्धार्थोऽपि याच्ञया लब्धपदत्रयोऽपि कस्माद्धेतोः तं बलिं बबन्ध?।।१।।

एतद्याच्ञाबन्धनादिकं हरेःकर्म वेदितुमिच्छामो वयं अत्रैतच्छ्रवणे नोऽस्माकं परमधिकं कुतूहलं[7] वर्तते। एतच्छब्दनिर्दिष्टमाह पूर्णस्य अवाप्तसमस्तकामस्य यज्ञेश्वरस्य भगवतः, कर्तरि षष्ठी। यज्ञेश्वरेणाऽनागसो निरपराधस्य[8] बलेः बन्धनं, चकारात् याचनञ्च।।२।।

[9]एवमापृष्टः सविस्तरं तच्चरित्रमाह मुनिर्नवभिरध्यायैः। तत्र तावद्बलेः त्रिलोकीमपहर्तु मुपायान्तरमपश्यन्

---

1. A,B,J °लनं 2. A,B,J Omit परि 3. A,B,J, °णा° 4. A,B,J °ण 5. B,H,J,V Omit सन्नह्य 6. A,B,T Omit रूप
7. A,B,T कौतू° 8. A,B,T °धिना 9. A,B,T add इत्येतत्

याच्ञां कृतवानिति वक्तुं तावद्बलेः गुरुसेवाबलेन स्वर्गप्राप्तिक्रममाह - पराजितश्रीरित्यादिना यावदध्याय समाप्ति। हे राजन्! इन्द्रेण दैवासुरे[1] युद्धे पराजिता [2]गृहीता श्रीः [3]जयलक्ष्मीर्यस्य सः असुभिः प्राणैश्च हापितः त्याजितः। पुनर्भृगुभिः [4]शुक्रादिभिः जीवितः जीवनं प्रापितो भृगूणां शिष्यो बलिः[5] तान् भृगूनेव सर्वात्मना करणत्रयैक्येन महात्मा उदारमना [6]अर्थानिवेदनेन[6] धनसमर्पणेन [7]न केवलं शुष्कभक्त्येत्यर्थः। अभजत् आराधितवान्[7]।।३।।

तं भजन्तं त्रिणाकं स्वर्गं जेतुमिच्छन्तं बलिं महानुभावा ब्राह्मणा भृगवः प्रीयमाणास्सन्तः विश्वजिता यागेनाऽयाजयन्। किं कृत्वा? महाभिषेकेण बह्वृचब्राह्मण प्रसिद्धेनाऽभिषिच्य।।४।।

ततो विश्वजिद्यागे हविर्भिरिष्टाद्धुताशनात् रथादय आसन्। तत्र तावत्काञ्चनपरिकरबद्धो रथ आविर्बभूव। ततो हर्यश्वस्य इन्द्रस्य तुरङ्गाणामिव वर्णो हरितो येषां ते हया उद्बभूवुः ततस्सिंहेन विराजमानो ध्वजः।।५।।

[8]ततः पुरटोपनद्धं काञ्चनपरिकरबद्धं धनु ररिक्तौ अक्षयौ तूणौ इषुधी दिव्यं कवचश्चाऽऽसन्। पितामहः प्रह्लादस्तस्य बलेः, सम्प्रदानस्य सम्बन्धविवक्षया षष्ठी। तस्मै आम्लानानि पद्मानि यस्यां तां मालां ददौ, शुक्रः जलजं शङ्खं ददौ इत्यनुषङ्गः।।६।।

एवं विप्रैः भृगुभिः अर्जितः सम्पादितो योधनार्थो युद्धपरिकरो यस्य स बलि स्तैर्विप्रैः कल्पितं कृतं स्वस्त्ययनं मङ्गलवाचनादिकं यस्य तादृशोऽथ विप्रान्परिक्रम्य तेभ्यः कृतः प्रणामो येन सः प्रह्लादं आमन्त्र्य पृष्ट्वा [9]तस्मै नमश्चकार।।७।।

अथ भृगुभिः दत्तंदिव्यमनर्घं रथमारुह्य स बलिः रराजेत्यन्वयः। कथम्भूतः? स्रग्धरः मालाधरः सुसन्नद्धः कवची धन्वी धनुर्धरः धृतः इषुधिः येन सः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

लब्धार्थः स्वीकृतत्रैलोक्यः।।१।।

पूर्णस्य ईश्वरस्य याच्ञा, अनागसो बलेर्बन्धनं यत्, एतत्।।२।।

---

1. A,B,T 'रघु' 2. W Omits गृहीता 3. A,B,T राज्य 4. A,B,T भृग्वा° 5. A,B,T add वैरोचनिः 6- -6. W Omits 7- -7. W अभजत् 8. W Omits ततः 9. A,T Omits तस्मै

असुभिः प्राणैः हापितो विजितः स्वार्थनिवेदनेन सर्वस्वसमर्पणेन अभीष्टार्थविज्ञापनेन वा तान् भृगून् सर्वात्मना अभजत्।।३।।

विश्वजिता सर्वस्वदक्षिणात्मना यागेन, महाभिषेकेण मन्त्रपूतस्नानविशेषेण।।४।।

हर्यश्वस्य इन्द्रस्य तुरङ्गाणां वर्णो येषां ते तथा इन्द्राश्ववर्णसदृशवर्णा इत्यर्थः। इद्धात् दीप्तात्।।५।।

पुरटोपनद्धम् सुवर्णबद्धम्। अरिक्तौ बाणैरशून्यौ अक्षयसायकावित्यर्थः। जलजं शङ्खम्।।६।।

योधनार्थो युद्धसाधनम् विप्रात् भृगोः।।७।।

स्रग्धरो मालाधरः।।८।।

हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः।
रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट्।।९।।

तुल्यैश्वर्य[1]बलश्रीभिः स्व[2]यूथे दैत्ययूथपैः।
पिबद्भिरिव खं दृग्भिः द[3]हद्भिः परिधीनिव।।१०।।

वृतो विकर्षन्[4]महती मासुरीं ध्वजिनीं विभुः।
ययाविन्द्रपुरीमृद्धां कम्पयन्निव रोदसी।।११।।

रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः।
कूजद्विहङ्गमिथुनै गार्यन्मत्तमधुव्रतैः।।१२।।

प्रवालफल पुष्पोरु भारशाखामरद्रुमैः।
हंससारसचक्राह्व कारण्डव कुलाकुलाः।
नलिन्यो यत्र क्रीडन्ति प्रमदास्सुरसेविताः।।१३।।

आकाशगङ्गया देव्या वृतां परिखभूतया।
प्राकारेणाऽग्निवर्णेन साट्टालेनोन्नतेन च।।१४।।

रुक्मपट्ट[5]कवाटैश्च द्वारैः स्फ[6]टिकगोपुरैः।
जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम्।।१५।।

---

1. M,Ma वय 2. H,V सरथे ; W सयूथे: 3. H,V हरिद्भिः ; W हरद्भि 4. A,B,G,J,T,V,W "री" स्वृद्धा
5. A,B,G,J,M,Ma,T "पा° 6 M,Ma स्फा"

**सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम्।**
**शृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः।।१६।।**

**श्रीध०** **हेमाङ्गदेति**। हेमाङ्गदाभ्यां लसन्तौ बाहू यस्य। धिष्ण्यस्थो भवने[1] प्रज्वालितः[2] कुण्डस्थ आहवनीय इवेति वा।।९।।

**तुल्येति**। तुल्यमैश्वर्यं नियन्तृत्वं[3] बलञ्च श्रीश्च येषां तैः निजयूथभूतैः[4- -4] दैत्ययूथपैः[5] वृतो ययाविति द्वयोरन्वयः। परिधीन् दिशः।।१०।।

**वृत इति**। स्वृद्धां[6] अतिसमृद्धाम्।।११।।

धिक् राज्यसुखम्[7]। तथाविधामपि[8] पुरीमकस्मादेव परित्यज्य इन्द्रादयः पलायिता इति वैराग्यार्थमिन्द्रपुरीं अनुवर्णयति रम्यामिति सार्धैः एकादशभिः। उपवनानि फलप्रधानानि[9] निकटस्थानि[10] वा[11], उद्यानानि पुष्प प्रधानानि दूरस्थानि वा[12], तै रम्याम्। कूजन्ति विहङ्ग[13]मिथुनानि येषु। गायन्तो मत्ता मधुव्रता येषु।।१२।।

**प्रवालेति**। प्रवालादीनामुरुभारो[14] यासु ताः शाखा येषां तेऽमरद्रुमा येषु तैः। यत्र यासु सुरसेविताः प्रमदाः क्रीडन्ति ता हंसादिकुलैः आकुला व्याप्ता नलिन्यः सरांसि यत्र येषु सन्ति तैः उपवनोद्यानैः रम्यामिति पूर्वेणैवाऽन्वयः।।१३।।

**आकाशेति**। किञ्च परिखाभूतया[15] आकाशगङ्गया वृताम्। प्राकारेण सौवर्णेन च आवृताम्।अट्टालाः प्राकारोपरिरचितानि उन्नतानि युद्धस्थानानि तत्सहितेन।।१४।।

**रुक्मेति**।[16] रुक्मपट्टानि कवाटानि[17] येषु तैः द्वारै रवान्तरैः स्फटिकमयैः गोपुरैश्च पुरद्वारैः जुष्टाम् संवृताम्[18]। विभक्ताः प्रपथा राजमार्गा यस्याम्।।१५।।

**सभेति**। सभा उपवेशस्थानानि चत्वाराण्यङ्गणानि रथ्या[19]रथमार्गाः तै राढ्यां सम्पन्नाम्। न्यर्बुदं दशकोटयः[20] तैः गणनीयैः अनन्तैः विमानैः युताम्। वज्रविद्रुममय्यो वेदयो येषु तैः शृङ्गाटकैः चतुष्पथैः युताम्।।१६।।

**वीर०** हैमाङ्गदाभ्यां लसन्तौ बाहू यस्य स्फुरती मकरकुण्डले यस्य तथाभूतो रथमारूढो रराज। क इव? धिष्ण्यस्थः वने प्रज्वलितः हव्यवाट् अग्निरिव कुण्डस्थः आहवनीय इवेति वा।।९।।

---

1. A,B, वने 2. A,B,J "ज्व" 3. B,H,J,V Omit नियन्तृत्वं 4- -4. B,H,J,V Omit 5. H,V, दैत्यैः यू° 6. H,V, ऋ° 7. A,B,J, प्राम्य 8. H,V Omit अपि 9. H,V "दा" 10. A,H,J,V °टानि 11. H,V च 12. H,V च 13. H,V °ग 14. H,V भा° 15. H,V °घ 16. A adds पट्टमुपरिबन्धः 17. A,B,J, °पा° 18. A,B,J Omit संवृताम् 19. A,B,J उप 20. A °टयः

दैत्ययूथपैर्वृतः स्वृद्धां इन्द्रपुरीं ययौ इत्यन्वयः। कथम्भूतैः तुल्यमैश्वर्यं बलं श्रीश्च येषां तैः सयूथैः ससैन्यैः[1] दृग्भिः खं अन्तरिक्षं पिबद्भिरिव परिधीन् दिशो दहद्भिरिव स्थितैः।।१०।।

कथम्भूतस्सन् विभुः समर्थः महतीमासुरीं ध्वजिनीं सेनां विकर्षन् प्रस्थापयन् रोदसी द्यावापृथिव्यौ कम्पयन्निव।।११।।

समृद्धिमेव दर्शयितुं इन्द्रपुरीं वर्णयति **रम्यामिति**। सार्धैरेकादशभिः। श्रीमद्भिः फलपुष्पादिसमृद्धिमद्भिः नन्दनादिभिः उपवनैः उद्यानवनैश्च रम्याम्। तत्रोपवनानि फलप्रधानानि निकटस्थानि वा, उद्यानानि पुष्पप्रधानानि दूरस्थानि वा। कथम्भूतैः? कूजन्ति विहङ्गमिथुनानि येषु, गायन्तो मधुना[2] मत्ता मधुव्रता येषु तैः।।१२।।

प्रवालादीनां उरुभारो यासु ताः शाखा येषां ते अमरद्रुमा येषु तैः, यत्र यासु सुरसेविताः प्रमदाः क्रीडन्ति ताः हंसादिकुलैः आकुला व्याप्ता, नलिन्यः सरांसि यत्र येषु तैः उपवनोद्यानैः, रम्यामिति पूर्वेणान्वयः।।१३।।

किञ्च, परिखाभूतया देव्या देवस्य त्रिविक्रमस्य पादाङ्गुष्ठजया आकाशगङ्गया प्राकारेण च जुष्टामित्यन्वयः। कथम्भूतेन? अग्निरिव वर्णो यस्य तेन सुवर्णमयेनेति भावः। अट्टालाः प्राकारोपरि रचितानि युद्धस्थानानि, तत्सहितेन उन्नतेन च [3-]एवम्भूतेन प्राकारेण[-3]।।१४।।

रुक्मपट्टानि कवाटानि[4] येषु तैः अवान्तरद्वारैः स्फटिकमयैः गोपुरैः पुरद्वारैश्च जुष्टाम्, विभक्ताः प्रपथाः राजमार्गाः यस्यां, विश्वकर्मणा विनिर्मिताम्।।१५।।

सभादिभिः आढ्यां सुन्दरीं[5] सम्पन्नां वा तत्र सभा आवेशस्थानानि, चत्वराणि अङ्गणानि रथ्याः उपमार्गाः, न्यर्बुदं दशकोटयः ताभिर्गणनीयैः अनन्तैः विमानैः युतां, वज्रविद्रुममय्यो वेदयो वेदिकाः येषु तैः शृङ्गाटकैः चतुष्पथैः युताम्।।१६।।

**विज०** धिष्ण्यस्थ आहवनीयादिस्थाने स्थितः हव्यवाडग्निः।।९-१३।।

यत्र इन्द्रपुर्यां यत्र नलिनीषु परिखभूतया दीर्घिकावद्वर्तमानया।।१४।।

पट्टमुपरिबन्धः।।१५।।

न्यर्बुदैः इत्युपलक्षणम्; अनेकैः इत्यर्थः।।१६।

---

1. A Omits ससैन्यैः 2. W "धुम" 3- -3. A,B,T इति । 4. A,B, "पा" 5. A,B,T "रां

यत्र नित्यवयोरूपाः श्यामा विरजवाससः।
भ्राजन्ते रूपवन्नार्यो[1] ह्यर्चिर्भिरिव वह्नयः।।१७।।

सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम्।
यत्राऽऽमोदमुपादाय मार्ग आवाति मारुतः।।१८।।

हेमजाल[2]विनिर्गच्छ[3]द्धूपेनाऽगरु[4]गन्धिना।
[5]पाण्डुरेण प्रतिच्छन्नमार्गे यान्ति सुरस्त्रियः[6]।।१९।।

मुक्तावितानैर्मणिहेमकेतुभिः नानापताकावलभीभिरावृताम्।
शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमङ्गलाम्।।२०।।

मृदङ्गशङ्खानक दुन्दुभिस्वनैः स तालवीणामुरजै[7]श्च वेणुभिः।
[8]नृत्यैस्सवाद्यैरुपदेवगीतकैः मनोरमां स्वप्रभया जितप्रभाम्।।२१।।

[9]यां न व्रजन्त्यधर्मिष्ठाः [10]भूतधर्म द्रुहश्शठाः।[12]
मानिनः कामिनो लुब्धाः [11]एभिर्हीना व्रजन्ति यत्।।२२।।

तां देवधानीं स वरूथिनीपतिः बहिस्समन्ताद्रुरुधे पृतन्यया।
आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन्भयमिन्द्रयोषिताम्।।२३।।

मघवां[13]स्तमभिप्रेत्य बलेः परममुद्यमम्।
सर्वदेवगणोपेतो गुरुमेतदुवाच ह।।२४।।

**श्रीध० यत्रेति।** नित्यं वयस्तारुण्यं रूपं च सौकुमार्यं यासां ताः [14-]श्यामाः षोडशवर्षाः विरजानि दिव्यानि वासांसि यासां ताः[-14] रूपवन्नार्यः स्वलङ्कृताः स्त्रियः यत्र यस्यां भ्राजन्ते।।१७।।

**सुरेति।** सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगन्धिकस्रजाम् आमोदमु[15]पादाय।।१८।।

**हेमेति।** हेमगवाक्षेभ्यो [16-]हिरण्मयगवाक्षेभ्यो[-16] निर्गच्छता धू[17]पेन सुरस्त्रि[18]यः अप्सरसः।।१९।।

**मुक्तेति।** मुक्तामयैः वितानैः मणिहेममयैः केतुभिश्च ध्वजैः नानापताकायुक्ताभिः वलभीभिश्च विमानानां पुरोभागैः आवृतां व्याप्ताम्। वैमानिकस्त्रीणां कलगीतैः मङ्गलाम्।।२०।।

---

1. H,M,Ma,V,W "र्यः अ" 2. A,B,G,J,M,Ma,T "लाक्ष" 3. A,B,G,J,M,Ma,T "मे" 4. A,G,J,M,Ma,T "गु" 5. H,V, पाण्ड° 6. A,B,G,J,T प्रिया. 7 A,B,G,J,M,Ma,T "जर्हि" 8. W नृत्तैः 9. H,V न यां ; W यत्र 10. A,B,G,J,M,Ma,T खला भूत° 11. A,B,G,J,M,Ma,T एभि" 12. H,V,W "न्ति याम् ; M,Ma "न्त्युत 13. M,Ma "द" 14- -14. B,H,J,V Omit 15. B,H,J,V Omit उपादाय 16- -16. B,H,J,V Omit 17 A,B,J "मे" 18. A,B,J प्रियाः

**मृदङ्गेति।** उपदेवानां गन्धर्वादीनां गीतकैश्च मनोरमाम्। जिताप्रभा साक्षाद्गीत्यधिष्ठात्री देवता यथा ताम्। अन्यैः अजितप्रभामिति वा। [1]जितग्रहामिति[-1] पाठान्तरे जिताग्रहाः सूर्यादयो यथा।।२१।।

**यामिति।** यत् याम्।।२२।।

**तामिति।** पृतन्यया सेनया।।२३,२४।।

**वीर०** नित्यं वयस्तारूण्यं, रूपं सौकुमार्यञ्च यासां ताः श्यामाः यौवनमध्यस्थाश्च, विरजं निर्मलं वासो यासां ताः, रूपवत्यः नार्यः स्त्रियः अर्चिर्भिः शिखाभिः वह्नय इव यत्र यस्यां राजन्ते [2]ते इत्यर्थः[-2]।।१७।।

यत्र यस्यां सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगन्धिकस्त्रजामामोदमुपादाय मारुतो हेमगवाक्षेभ्यो विनिर्गच्छता धूपेनागरु[3]सुगन्धिना सह मार्गे वहति ताम्।।१८।।

यस्यां मार्गे पाण्डुरेण पटेन प्रतिच्छन्ने मार्गे सुरस्त्रियोऽप्सरसः यान्ति सञ्चरन्ति ताम्।।१९।।

मुक्तामयैः वितानैः मणिहेममयैः केतुभिश्च नानाविधानां पताकानां आवलिभिश्च विराजितां, शिखण्ड्यादिभिः नादितां वैमानिकस्त्रीणां मधुरगीतैः मण्डिताम्।।२०।।

मृदङ्गादीनां स्वनैः तालादिध्वनिसहितैः नृत्तैः सवाद्यैः उपदेवानां गन्धर्वादीनां गीतकैश्च मनोरमां स्वप्रभया जिता प्रभा साक्षाद्दिव्यगीताद्यधिष्ठात्री देवता यया 'तामन्यै रजितप्रभाम्' इति वा। पाठान्तरे जिताः ग्रहाः सूर्यादयो यया ताम्।

यत् यां, सामान्ये नपुंसकम्। अधर्मिष्ठादयो न व्रजन्ति इतः प्रेत्य न प्राप्नुवन्ति। [4]खलाः दुरात्मानः शठाः मूर्खा मानिनोऽहङ्कारिणः लुब्धाः वञ्चकाः।।२२।।

तामेवम्भूतां देवधानीममरावतीं बहिस्समन्ताद्वरूथिन्याः सेनायाः पतिः स बलिः पृतन्यया सेनया रुरुधे। तत इन्द्रयोषितां भयमुत्पादयन् आचार्येण शुक्रेण दत्तं महास्वनं शङ्खं दध्मौ।।२३।।

मघवानिन्द्रः तं बलेः परमर्मधिकं उद्योगं ज्ञात्वा सर्वैः देवानां गणैः उपेतो बृहस्पतिं इत्थमुवाच।।२४।।

**विज०** शृङ्गाटकैः चत्वरमण्डपैः वज्ररत्नविद्रुमखचितवेदिभिः, श्यामाः षोडशवर्षाः।।१७।।

सौगन्धिकैः स्थलचम्पकैः रचिताः स्त्रजः तासामामोदं परिमलमुपादाय।।१८।।

जालाक्षं गवाक्षम्।।१९,२०।।

---

1--1. A,B,J Omit 2--2. W Omits 3. W Omits सु 4. A,T omit खलाः

जितसूर्यादिग्रहाम्।।२१।।

एभिरधर्मादिभिः।।२२।।

पृतन्यया पृतनया।।२३,२४।।

भगवन्नु[1]द्यमो [2]भूयो बलेर्नः पूर्ववैरिणः।
अवि[3]षह्यमिमं मन्ये केनाऽऽसीत्ते[4]जसोर्जितः।।२५।।

[5]नैनं कश्चित्कुतो वाऽपि प्रतिव्योढुमधीश्वरः।
पिबन्निव मुखेनेदं लिहन्निव दिशो दश।
दहन्निव [7]दिशो दृग्भिः संवर्ताग्निरिवोत्थितः।।२६।।

ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य [8]यन्निपोः।
ओजस्सहो बलं तेजो यत [9]एतत्समुद्यमः।।२७।।

गुरुरुवाच

जानामि मघवन् शत्रो रुन्नतेरस्यकारणम्।
शिष्यायोपभृतं तेजो [10]गुरुभिर्ब्रह्मवादिभिः।।२८।।

*भवद्विधो भवान्वापि वर्जयित्वेश्वरं हरिम्।
[11-]नाऽस्य शक्तः पुरः स्थातुं कृतान्तस्य यथा जनाः[-11]।।२९।।

तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रविष्टपम्।
यातकालं प्रतीक्षन्तो यतः शत्रोर्विपर्ययः।।३०।।

एष विप्रबलोदर्कः सम्प्रत्यूर्जितविक्रमः।
[12]तेषामेवा[13]वमानेन सानुबन्धो विनङ्क्ष्यति।।३१।।

एवं सुमन्त्रितार्थास्ते गुरुणार्थानुदर्शिना।
हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः।।३२।।

**श्रीध भगवन्निति।** केन हेतुनैवं तेजसोर्जित आसीत्।।२५।।

---

1. M,Ma "त्तो 2. A,B,G,J,M,Ma,T भूयान्ब" 3. M,Ma "द 4. M,Ma सा सम: 5. H,V "वं 6. M,Ma "वो" 7. H,V यतो ; W नभो 8. A,B,G,J,M,Ma,T म" 9. M,Ma एव स° 10. A,B,G,T भृगुभि" * H,V,W प्रकाशेषु पूर्वार्धमुत्तरार्धत्वेन उत्तरार्धं पूर्वार्धत्वेन मुद्रितम्। 11- -11. H,V,W नचास्याद्य क्षणमपि स्थातु शक्नोति सम्मुखो। 12. M,Ma ए° 13. A,B,G,J,T "ब"

**नेति**। प्रतिव्योढुं अपाकर्तुम्।।२६।।

**ब्रूहीति**। यतः [1]यस्मात् कारणादेतस्य ओजआदि, [2-]तत्कारणं ब्रूहि[-2]। यत ओज आदेः। एतस्य [3]बलेस्समुद्यमः।।२७।।

**जानामीति**। उपभृतं सञ्चितम्।।२८,२९।।

तत्रोचितं मन्त्रमाह - **तस्मादिति** । तस्माद्यूयं त्रिविष्टपमुत्सृज्य निलयमदर्शनं यात। यतः कालात्।।३०।।

केनाऽस्य विपर्ययः स्यादित्यत आह **एषइति**। विप्राणां बलेनोदर्क उत्तरोत्तरमधिकं फलं यस्य सः।।३१।।

**एवमिति**। सुमन्त्रितोऽर्थः कार्यं येषां ते निलयं जग्मुः।।३२।।

**वीर०** तदेवाऽऽह- **भगवन्निति** [4-]सार्धैस्त्रिभिः[-4]। हे भगवन्! पूर्ववैरिणो दैवासुरे युद्धे पराजितस्य बलेरधुनाऽयं महानुद्यमः। इममुद्यमं सोढुमशक्यं मन्ये। केन हेतुना अयं तेजसोर्जित आसीत्?।।२५।।

एनं बलिं कोऽपि पुमान् केनाऽप्युपायेन अपाकर्तुं न प्रभुः। अयं मुखेनेदं जगत्पिबन्निव दश दिशो लिहन्निव उत्थितः प्रलयाग्निरिव दृग्भिः नभो दहन्निव आस्ते।।२६।।

मम शत्रोः बलेः दुर्धर्षत्वस्यैतस्य कारणं ब्रूहि। यतः कारणात् ओज आदिः तत्प्रयुक्तः समुद्यमश्चेत्येतदासीत्। तत्र ओज इन्द्रियबलं, सह उत्साहो, मानसं, बलं दैहिकम्।।२७।।

एवं विज्ञापित आह गुरुः - **जानामीति**। हे मघवन् अस्य त्वच्छत्रोः बलेः [5]औन्नत्यस्य कारणमहं जानामि। किं तत्? [6]यत् ब्रह्मवादिभिः शुक्रादिभिः शिष्याय बलये उपभृतमाहितं तेज इत्येतत्।।२८।।

अतो भगवन्तं विनाऽन्यः कश्चिद्[7]भवद्विधः, [8]भवादृशः साक्षाद्भवान्वा अस्य सम्मुखे क्षणमपि स्थातुं न शक्नोति।।२९।।

मन्त्रमाह - **तस्मादिति**। तस्मात् जेतुमशक्यत्वात् सर्वे यूयं त्रिविष्टपं त्यक्त्वा निलयमदर्शनं यात गच्छत। कथम्भूताः? यतः येन कालेन शत्रोः पराजयो नौन्नत्यं वा भविष्यति तं कालं प्रतीक्षमाणास्सन्तः।।३०।।

कोऽसौ [9]स कालः तत्राऽऽह अयमधुना विप्राणां बलेनोदर्कउत्तरोत्तरमधिकं फलं यस्य ऊर्जितः

---

1. A,B,J Omit यस्मात् 2- -2. B,H,J,V Omit. 3. B,H,J,V Omit बले 4- -4. W Omits 5. A,B,T 'त्यक्त' 6. W Omits यत् 7. W Omits भवद्विधः 8. A,B,T Omit भवादृशः 9. A,B,T Omit सः

बलीभूतः विक्रमो यस्य, तादृश आस्ते, स पुनः तेषां विप्राणामेवाव[1]मानेन हेतुना सानुबन्धः ससमृद्धिः विनङ्क्ष्यति, तं कालं प्रती[2]क्षमाणा इत्यर्थः।।३१।।

एवमित्थमर्थानुदर्शिना तत्तत्कालोचितकर्तव्यप्रयोजनाभिज्ञेन बृहस्पतिना सम्यगालोचिताः गीर्वाणाः सुरास्त्रिविष्टपं त्यक्त्वा कामरूपिणस्सन्तः जग्मुः।।३२।।

**विज०** असौ बलिः तेजसा केन ब्रह्मणा समः। केन केनापीति वा।।२५।।

प्रतिवोढुं प्रतियोद्धुं वारयितुं वा इदं जगद्यतः।।२६।।

ओज आदय, एष समुद्यमश्च यतः मद्रिपोः एतस्य दुर्धर्षत्वस्य कारणं ब्रूहीत्यन्वयः।।२७।।

गुरुभिः भृगुभिः यतः कारणात्।।२८,२९।।

त्रीणि विष्टपानि महरादिस्थानानि यस्मिन् तत्तथा।।३०।।

एष बलिः विप्राणां बलल्लक्षणमुत्तरफलं यस्य स तथा। कुत इति तत्राऽऽह - सम्प्रतीति।।३१,३२।।

**देवेष्वथ[3] विलीनेषु[4] बलि वैरोचनः पुरीम्।**
**देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयम्।।३३।।**

**तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः।**
**शतेन हयमेधाना मनुव्रतमयाजयन्।।३४।।**

**ततस्तदनुभावेन भुवनत्रयविस्तृ[5]ताम्।**
**कीर्तिं दिक्षु वितन्वानः स रेजे[6] उडुराडिव।।३५।।**

**बुभुजे च श्रियं स्वृ[7]द्धां द्विजदेवोपलम्भिताम्।**
**कृतकृत्य मिवाऽऽत्मानं मन्यमानो महामनाः।।३६।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे पञ्चदशोऽध्यायः।।१५।।

**श्रीध० तमिति।** एवं प्राप्तमिन्द्रपदं स्थिरीकर्तुं, अयाजयन्। अनुव्रतं अनुवर्तिनम्।।३३-३५।।

**बुभुजेति।** द्विजदेवै ब्राह्मणैः उपलम्भितां प्रापिताम्।।३६।।

---

1. A,B,T प° 2. A,B,T °क्षन्त 3. M,Ma °ति° 4. A,B,G,J,T नि° 5. A,B,G,J,M,Ma,T °श्रु° 6. H,V °जेषु 7. M,Ma ऋ°

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्याया पञ्चदशोऽध्यायः।।१५।।

**वीर०** एवं देवेष्वन्तर्हितेषु सत्सु, अथ वैरोचनो बलिः देवधानीं पुरीं अधिष्ठाय लोकत्रयं स्ववशमकरोत्।।३३।।

ततस्तं विश्वजयिनं शिष्यमनुव्रतं बलिं तद्वत्सला भृगवो हयमेधानां शतेन [1]अश्वमेधानां शतेन[1] अयाजयन् प्राप्तमिन्द्रपदं स्थिरीकर्तुं अयाजयन् [2]इत्यर्थः।।३४।।

ततो हयमेधयागशतप्रभावेण लोकत्रयव्याप्तां कीर्तिं वितन्वानः स बलिः [3]चन्द्रमा इव रराज।।३५।।

द्विजदेवैः ब्राह्मणैः उपलम्भितां प्रापितां सुसमृद्धां श्रियं सम्पदं बुभुजे। कथम्भूतः? महामनाः दीर्घसङ्कल्पः आत्मानं, कृतं कृत्यं कर्तव्यप्रयोजनं येन तं,कृतार्थमिव मन्यमानः।।३६।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चदशोऽध्यायः।।१५।।

**विज०** द्विजाः भृगवः त एवमभीष्ट दातृत्वेन देवाः उपलम्भितां प्रापिताम्।।३३-३६।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे पञ्चदशोऽध्यायः।।१५।।

(विजयध्वजरीत्या चतुर्दशोऽध्यायः।।१४।।)

1--1. A,B,T Omit 2. W Omits इत्यर्थ. 3 A,B,T चन्द्र

०००0०००

# षोडशोऽध्यायः

## (विजयध्वजरीत्या पञ्चदशोऽध्यायः)

### श्रीशुक उवाच

एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा।
हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत्।।१।।

एकदा कश्यपस्तस्या आश्रमं भगवानगात्।
निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात्।।२।।

स पत्नीं दीनवदनां कृतासनपरिग्रहः।
[1]सभाजितो यथान्याय मिदमाह कुरूद्वह!।।३।।

अप्यभद्रं न विप्राणां भद्रे लोकेऽधुना[2] गवाम्।
न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः।।४।।

अपि वाऽकुशलं[3] किञ्चित् गृहेषु गृहमेधिनि[4]।
धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम्।।५।।

अपि वाऽतिथयो[5] ह्यत्र कुटुम्बासक्तया त्वया।
गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित्।।६।।

गृहेषु येष्वतिथयो[6] नाऽर्चितास्सलिलैरपि।
यदि निर्यान्ति ते नूनं फेरु[7]राजगृहोपमाः।।७।।

[8]अप्यग्नयस्ते[9] वेलायां न हुता हविषा सति।
त्वयोद्विग्नधिया भद्रे! प्रोषिते मयि कर्हिचित्।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

षोडशे पुत्रनाशेन शोचन्त्या अदितेः पतिः। प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते।। यद्वा-

षोडशे कश्यपोऽदित्या प्रार्थितो लीनपुत्रया। महच्छ्रेयस्करं तस्यै पयोव्रतमुपाविशत्।।

---

1. H,V सम्भावितो 2,A,B,G,J,M,Ma,T "नाऽऽगतम् 3. M,Ma किं वा 4. M,Ma "नाम् 5. A,B,G,J,M,Ma,T योऽभ्येत्य
6. W योऽनर्चि" 7. M,Ma प्रेत" 8. M,Ma अथा" 9. A,B,G,J,M,Ma,T "स्तु

इदानीं श्रीवामनावतारप्रसङ्गमाह - **एवमिति** - [1]यावद[2]ध्यायपरिसमाप्ति[2]। नष्टेषु अदृश्येषु सत्सु।।१,२।।

**स इति**। स कश्यपः पत्नीमिदमाह।।३।।

दीनवदनत्वादिकमालक्ष्य बहुधा विकल्पयन्पृच्छति - **अप्यभद्रमिति** सप्तभिः। हे भद्रे! मृत्योश्छन्दमिच्छामनुवर्तत इति तथा। मृत्युवशवर्तिनो जनस्येत्यर्थः।।४।।

**अपीति**। हे गृहमेधिनि! अपि वा किं वा गृहेषु धर्मादेः किञ्चिदकुशलमिति काका प्रश्नः। यत्र येषु गृहेषु अयोगिनामपि योगः स्वधर्मादिना योगफलं भवति।।५।।

**अपि वेति**। किं वा, त्वया अपूजिता एवाऽभ्येत्य गृहाद्याताः।।६।।

**गृहेष्विति**। नार्चिता अनर्चिताः सन्तो यदि निर्गच्छन्ति ते गृहाः फेरुराजः सृगालराजः तदीयविवरतुल्याः।।७।।

**अपीति**। वेलायां होमकाले कर्हिचिन्न हुताः किम्?।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं बलेरिन्द्राधिपत्यप्राप्तिप्रकार मभिधाय अथ भगवतो वामनाव[3]तारप्रकारं प्रस्तोष्यन् तदुपोद्घातरूपां कथां तावत्प्रस्तौति मुनिः - **एवमिति**। इत्थं पुत्रेष्विन्द्रादिषु नष्टेष्वदृश्येषु सत्सु दैत्यैः त्रिविष्टपे हृते च सति देवमाता अदितिः अनाथवत् [4]असहाया इव[4] पर्यतप्यत्।।१।।

एवं परितप्यन्त्यामदित्यां कदाचिद्भगवान् कश्यपः चिरात् समाधेर्विरतः तस्या अदितेराश्रममाजगाम। कथम्भूतम्? निर्गतः उत्सवः यस्मात्, निर्गत आनन्दो यस्मात्, तम्।।२।।

स कश्यपः कृत आसनपरिग्रहो येन सः, यथान्यायं सभाजितः सम्यक् पूजितः हे कुरूद्वह! दीनं वदनं यस्यास्तां पत्नीमिदं वक्ष्यमाणमाह।।३।।

दीनवदनामालक्ष्य बहुधा विकल्पयता कश्यपेन पृष्टमाह - **अपीति** सप्तभिः। अपीति प्रश्नद्योतकमव्ययम्। हे भद्रे! अधुना लोके विप्राणां गवां धर्मस्य लोकस्य जनस्य, कथम्भूतस्य मृत्योः छन्दमिच्छामनुवर्तत इति तथा तस्य च अभद्रम् अकुशलं न हि।।४।।

हे गृहमेधिनि! अपि वा किं गृहेषु धर्मादेः किञ्चिदकुशलमिति काका प्रश्नः। गृहान्विशिनष्टि - यत्र येषु

1. A,B,J 'त्यादि 2- -2. A,B,J यावत्समाप्ति। 3. A,B,T 'तारं 4- -4. W Omits

गृहेषु अयोगिनामपि योगः स्वधर्मादिना योगफलं भवति। यद्वा अयोगिनामेव योगः आसक्तिः योगिनान्तु नेत्यर्थः।।५।।

अतिथयः आगत्य कुटुम्बासक्तया त्वया प्रत्युत्थानादिना कदाचिदप्यपूजितास्सन्तो गृहात् याता गताः किं वा।।६।।

यद्यतिथयोऽभ्येत्य येषु गृहेषु सलिलैरपि अनर्चितास्सन्तो निर्गच्छन्ति। तर्हि ते गृहाः नूनं सृगालनाथ बिलतुल्या एव।।७।।

हे सति! हे भद्रे ! मयि प्रोषिते प्रस्थिते सति उद्विग्नधिया त्वया अग्नयः आहवनीयादयः त्वदधीनाः हविषा वेलायामुदिते सूर्ये "प्रातर्जुहोति" इत्युक्तप्रातरादिकाले न हुताः किं वा?।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

तस्या अदित्याः।।१-३।।

आदित्यलोके विप्राणामभद्रं नाऽऽगतमपि? किं, धर्मस्य अभद्रं नागतमपि? किम् अर्थस्य अभद्रं नाऽऽगतमपि? छन्दानुवर्तिनो मृत्योस्सकाशात् अभद्रं लोकस्य नाऽऽगतं किम्? अयोगिनां संसारिणां यत्र येषु धर्मादियोगोऽस्ति तेषु किञ्चिदप्यकुशलं न हीति तत्राऽनुकर्षः कर्तव्यः।।४-६।।

प्रेतराजगृहोपमाः श्मशानतुल्याः।।७।।

वेलायामिति, योग्यकाले प्रोषिते गृहादन्यत्र स्थिते।।८।।

**यत्पूजया कामदुघान्[1] याति[2] लोकान्गृहव्रतः[3]।**
**ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्।।९।।**

**अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि।**
**लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम्।।१०।।**

**अदितिरुवाच**

**भद्रं द्विजगवां ब्रह्मन् धर्मस्याऽस्य जनस्य च।**
**त्रिवर्गस्य परं क्षेत्रं गृहमेधिन् गृहा इमे।।११।।**

---

1. W दुहा 2. M,Ma यान्ति 3. A,B,G,J,T °हान्वितः, M,Ma °हान्विताः

अग्रयोऽतिथयो भृत्या भिक्षवो ये च[1] लिप्सवः।
सर्वं भगवतो ब्रह्मन् अनुध्यानान्न रिष्यति।।१२।।

को नु मे भगवन्कामो न सम्पद्येत मानसः।
यस्या भवान् प्रजाध्यक्ष एवं धर्मान्प्रभाषते।।१३।।

तवैव[2] मारीच मनश्शरीरजाः प्रजा इमास्सत्त्वरजस्तमोजुषः।
[3]समो भवांस्तासु[4] सुरादिषु प्रभो [5-]तथाऽपि भक्तं[-5] भजते महेश्वरः।।१४।।

तस्मादीश[6] भजन्त्या मे श्रेयश्चिन्तय सुव्रत।
हृतश्रियो हृतस्थानान्सपत्नैः[7] पाहि नः प्रभो[8]।।१५।।

परै विवासिता साऽहं मग्ना व्यसनसागरे।
ऐश्वर्यं श्रीर्यशःस्थानं हृतानि प्रबलैर्मम।।१६।।

**श्रीध०** अपीति। भवत्या आत्मानं मनः अस्वस्थमप्रकृतिस्थं लक्षणैर्मुखम्लान्यादिभिः[9] लक्षयामि ।।९,१०।।

अस्वास्थ्यकारणमन्यदस्तीति वक्तुं त्वत्गृहमभद्रादिकं नाऽस्तीत्याह - **भद्रमिति द्वाभ्याम्**। इमे गृहास्त्रिवर्गस्य परं क्षेत्रमुद्भवस्थानम्। त्रिवर्गोऽपि यथावद्वर्तत इत्यर्थः।।११।।

**अग्रय** इति। भगवतस्तवाऽनुध्यानं यन्मया क्रियते तस्मादग्रयोऽतिथय इत्यादि सर्वं न रिष्यति न हीयते।।१२।।

प्रस्तुतं विज्ञापयितुमाह - **कोन्विति**।।१३।।

सम्पाद्यं काममाह - **तवैवेति** चतुर्भिः।।१४।।

**तस्मादिति**। सपत्नैर्दैत्यैर्हृता श्रीः येषाम्। हृतं स्थानं येषामिति पुत्राभिप्रायेण बहुवचनम्।।१५,१६।।

**वीर०** किञ्च[10], अग्नीन्विशिनष्टि **यत्पूजयेति**। कामानिष्टार्थान् दोग्धीति तथा तान् तया येषामग्नीनां पूजया गृहान्वितः[11] गृहस्थः पुमान् पुण्यलोकान् याति प्राप्नोति। किञ्च, ब्राह्मणोऽग्निश्च सर्वदेवताशरीरकस्य विष्णोर्मुखं, वै निश्चये। "ब्राह्मणोऽस्य मुखमासीत्"(पु.सू.1-6) "मुखादिन्द्रश्चाग्निश्च"(पु.सू. 1-6) इत्यादि श्रुतेः इति भावः।।९।।

---

1. W बलीप्सवः 2. H,V हे देव! 3. M,Ma मनोरथं ता" 4. A,B,G,J,T "ताम्वसु" 5- -5. M,Ma यथा विभागं 6. M,Ma "देश
7. H,M,Ma,V,W "ना: स" 8. H,V प्रजाः 9. H,V नादि" 10 W Omits किञ्च 11 W Omits गृहान्वित.

हे मनस्विनि! ते सर्वे पुत्राः कुशलिनोऽपि कुशलिन एव हि? किमालक्ष्य एवं पृच्छसीत्यत्राऽऽह - भवत्या आत्मानं मनः अस्वस्थमप्रकृतिस्थं वदनदैन्यादिभिश्चिह्नैरहं लक्षये तव चित्तमस्वस्थं लक्षयित्वाऽहं पृच्छामीति भावः।।१०।।

एवं[1] पृष्टा सती[2] अदितिः अस्वास्थ्यकारणमन्यदिति वक्तुं तत्पृष्टमभद्रादिकं नाऽस्तीत्याह - **भद्रमिति** द्वाभ्याम्। हे ब्रह्मन्! द्विजादीनां भद्रमेव तथा हे गृहमेधिन्! त्रिवर्गस्य धर्मार्थकाम[3]रूपस्य यत्परं क्षेत्रमुद्भवस्थानं तद्गृहं गृहाश्रमश्च अग्न्यादयः पूजेप्सवश्चेति एतत्सर्वं हे ब्रह्मन्! भगवतस्तव अनुध्यानात् मया क्रियमाणाद्धेतोः न रिष्यति न नङ्क्ष्यति न हीयते इत्यर्थः।।११,१२।।

अनुध्यानान्न रिष्यति इत्येतदेव काक्वा दर्शयति - **को न्विति।** हे भगवन्! मे मानसो मनोविषयः मनसा काङ्क्षितः कामः को नु न सम्पद्येत, सर्वोऽपि कामः सम्पत्स्यत एवेत्यर्थः। कुतः? यतो भवान् प्रजाध्यक्षः प्रजानां पतिस्सन् यस्या मे त्वद्धर्मपत्न्याः एवंविधान् धर्मान् प्रभाषते उपदिशति। उपदेशेनैवं विधान् धर्मान् त्वय्यनुष्ठापयति सति को नु कामो दुर्लभ इति भावः।।१३।।

तर्हि किं तव चित्तास्वास्थ्यनिमित्तमित्यपेक्षायां तद्विज्ञापयितुं, तदयं नाऽपाकुर्यादित्याशङ्कया तावत्तं प्रसादयति - **तवेति।** हे मारीच! सत्त्वादिप्रधाना इमास्सर्वाः प्रजा देवाः दैत्याश्च तवैव मनसः शरीराच्च जाताः। अतो भवान् तासु सुरादिषु[4] प्रजासु यद्यपि समः समदर्शनः तथाऽपि हे प्रभो! महेश्वरो भगवान् भक्तं भजतेऽनुवर्तते भक्त पक्षपाती भगवानित्यर्थः। प्रभोरिति पाठे प्रभोः तव भक्तं महेश्वरो भवान् भजत इत्यर्थः।।१४।।

तस्मात् भक्तानुभजनस्वभावत्वात् त्वं[5] त्वां भजन्त्याः मे मम श्रेयः श्रेय उपायं चिन्तयाऽऽलोचय। हे सुव्रत! कस्तवाऽधुना श्रेयोविपर्ययः तत्राऽऽह - सपत्नै दैत्यै हृता श्रीर्येषां, हृतानि स्थानानि येषां तान् अस्मान् अस्मत्पुत्रान् पाहि पालय[6]। यतः[7] हे प्रभो! [8-]पालनसमर्थस्त्वम् इत्यर्थः[-8]।।१५।।

सा त्वत्पत्नीत्वेन असम्भावितदुःखाऽहम् अधुना परैर्दैत्यैर्विवासिता स्वस्थानादुच्चाटिता, पुत्रेषु स्वाभेदाभिमा[9]नेनाऽहं विवासितेत्युक्तम्। दुःखसागरे मग्नाऽभवम्, अधुना प्रबलैर्दैत्यैः मम ऐश्वर्यादीन्यपहृतानि। तत्र ऐश्वर्यमाधिपत्यं, श्रीः भोग्या[10]दिसम्पत्, स्थानं निवासदेशः।।१६।।

---

1. W adds श्च 2. A,B,T Omit सती 3. A,B,T "मस्य 4. A,B,T असु" 5. W Omits त्वं 6. A,B,T add इत्यर्थः 7. W Omits यतः 8- -8 W Omits 9. A,B,T प्रायेण 10. A,B,T भोगा"

**विज०** सर्वदेवात्मनो विष्णोर्मुखं ब्राह्मणोऽग्निश्चेति द्वयम्।।९।।

हि यस्मात् अस्वस्थम्।।१०,११।।

इमे गृहा अग्नयश्च इत्यादि सर्वं भगवतोऽनुध्यानात् न रिष्यति न क्षिणोति।।१२।।

यस्या मम प्रजानां कुशलाकुशलयोः अध्यक्षः साक्षित्वेन द्रष्टा भगवानेवंविधान्[1] धर्मान् प्रवक्तीति यत्।।१३।।

यथाविभागं सत्त्वादिगुणानुकूल्येन अद्य दैत्यानां मनोरथं साधयतीत्यभिप्रायः।।१४।।

अंशं देवताभागं तव देहार्धं व्यवहारार्थं वा, हतस्थानाः हतस्वर्गस्थानाः।।१५।।

पुनरुक्तमेव विशिनष्टि - **परैरिति**। मम पुत्राणामिति शेषः।।१६।।

**यथा तानि पुरस्साधो प्रपद्येरन् ममात्मजाः।**
**तथा विधेहि कल्याण्या[2] धिया कल्याणकृत्तम।।१७।।**

**श्रीशुक उवाच**

**एवमभ्यर्थितोऽदित्या कस्तामाह[3] हसन्निव[4]।**
**अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत्।।१८।।**

**क्व देहो भौतिकोऽनात्मा क्व चाऽऽत्मा प्रकृतेः परः।**
**[5]कस्य के पतिपुत्राद्या मोह एव हि कारणम्।।१९।।**

**उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम्।**
**सर्वभूतगुहावासं वासुदेवं जगद्गुरुम्।।२०।।**

**स विधास्यति ते कामान् हरिर्दीनानुकम्पनः।**
**अमोघा भगवत्सेवा[6] नेतरेति मतिर्मम।।२१।।**

**अदितिरुवाच**

**केनाऽहं विधिना ब्रह्मन्! उपस्थास्ये जगद्गुरुम्[7]।**
**यथा मे सत्यसङ्कल्पो विदध्यात्स[8] मनोरथम्।।२२।।**

---

1. A,B भवा॰ 2. A,B,G,J,M,Ma,T ॰णां 3. A,B,G,J,M,Ma,T स्मय॰ 4. H,V,W add कश्यप उवाच 5. W कश्येमे
6. A,B,G,J,M,Ma,T ॰वद्भक्तिर्ने " 7. A,B,G,J,M,Ma,T ॰त्पतिम् 8. M,Ma ॰धाति

**आदिश[1] त्वं द्विजश्रेष्ठ विधिं तदुपधावनम्।**
**आशु तुष्यति मे देवः[2] सीदन्त्यास्सह पुत्रकैः।।२३।।**

**कश्यप उवाच**

**एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः।**
**यदाऽऽह[3] ते प्रवक्ष्यामि व्रतं केशवतोषणम्।।२४।।**

**श्रीध० एवमिति।** कः कश्यपः। प्रथमं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेनैव तत्त्वमुपदिशति - अहो इति सार्धेन।।१८-१९।।

अत्राऽपरितुष्यन्तीं प्रत्याह - **उपतिष्ठस्वेति** द्वाभ्याम्।।२०।।

**स** इति। नन्वेवम्भूतकामप्राप्तिहेतुः देवान्तरसेवा प्रसिद्धा तत्राऽऽह - अमोघेति।।२१।।

**केनेति**। स[4] यथा च मे मनोरथं विदध्यात्।।२२।।

**आदिशेति**। यथा च मे आशु तुष्यति तथा तत्सेवाप्रकारमादिश।।२३।।

**एतदिति**। मे मया पृष्टः पद्मजो मे यद्व्रतमाह - एतत्ते तव प्रवक्ष्यामीत्यन्वयः।।२४।।

**वीर०** एतानि मत्पुत्राः पुनर्यथा पूर्ववत्प्रतिपद्येरन् प्राप्नुयुः यथा येनोपायेन प्रपद्येरन्निति वा। तथा हे साधो! हे कल्याणकृच्छ्रेष्ठ! कल्याणधिया शुभालोचनया विधेहि कुरु।।१७।।

एवमित्थम् अदित्या प्रार्थितः कः प्रजापतिः कश्यपः स्मयन्निव तामदितिमाह।।१८।।

तदेवाऽऽह - **अहो** इति। प्रथमं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेन तत्त्वमुपदिशति अहो इति सार्धेन। अहो[5] विष्णोर्मायाया बलं कियत् इदं जगत् स्नेहबद्धं पुत्रादिषु स्नेहपाशेन बद्धमित्येतत् भौतिकः भूतपञ्चकपरिणामरूपो देहः क्व? प्रकृतेः परो भिन्न आत्मा प्रत्यगात्मा क्व? परस्परमेव मत्यन्त विलक्षणयोः देहात्मनोरभेदः अत्यन्तमसम्भावित इत्यर्थः। एवमसम्भावितभेदयोर्देहात्मनोः मध्ये कस्येमे पुत्राद्याः। कस्य सम्बन्धिनः? किं देहस्य[6]? किं वा आत्मनः? अयम्भावः तावन्नात्मनः साक्षात्पुत्रादिभिः सम्बन्धः, अपि तु देहद्वारा। देहस्य भौतिकत्वेन उपचयादिविकारित्वेन च अनित्यत्वात् तत्सम्बन्धिषु पुत्रादिषु[7] स्नेहोऽज्ञानमूलक इति तदेवाऽऽह - मोह एव हि कारणमिति। देहात्मभ्रम एवाऽत्र स्नेहे कारणमित्यर्थः।।१९।।

एवं तत्त्वोपदेशेन अपरितुष्यन्तीं प्रत्याह - **उपतिष्ठस्वेति** द्वाभ्याम्। वासुदेवमुपतिष्ठस्व आराधय,

---

1. W °शस्व 2. H,V °व। 3. M,Ma °दह ते 4. A,B,J Omit सः 5. A,B,T Omit अहो 6. W adds सम्बन्धिनः 7. A,B,T Omit पुत्रादिषु

वासुदेवाराधनस्य समीहितसाधनत्वं सूचयन् तं विशिनष्टि - जगद्गुरुं जगत आराधकस्य लोकस्य गुरुं हितकारिणं, क्वा[1]ऽधिवसन् हितं करोति? अतो विशिनष्टि - सर्वेषां भूतानां गुहासु हृदयकुहरेषु आवासो यस्य तम्, अनेन वासुदेवशब्दस्य प्रवृत्तिनिमित्तं दर्शितम्। ननु, किं विशेषेण वासुदेवमेव उपतिष्ठस्वेति वदसि? इत्यतो विशिनष्टि - जनार्दनमिति। ' अर्द गतौ याचने च ' इति धातुः, जनैः श्रेयस्कामैः अर्द्यते याच्यते इति [2]जनार्दनः, स एव याचनीय इति भावः। तत्र हेतुं वदन् विशिनष्टि - भगवन्तं षाड्गुण्यपूर्णं, देवतान्तरस्य दरिद्रत्वादिति भावः। वदान्यत्वमाह - पुरुषमिति। पुरु अधिकं षणोति ददातीति पुरुषः तम्। 'षणु - दाने' इति धातोः "अन्येभ्योऽपि दृश्यते" इति डः। "य आत्मदा बलदाः" ( नृ.पू.ता.उ. 2-12 ) "एको बहूनां यो विदधाति कामान्" (श्वेता.उ. 6-13) इत्यात्मपर्यन्तदातृत्वेन प्रसिद्ध इति भावः।।२०।।

पुरुषजनार्दनपदाभ्यामभिप्रेतं विशदयन्नाह - स इति। स पुरुषो जनार्दनः ते तव कामान् विधास्यति पूरयिष्यति। अनेन उदाहृतश्रुत्यर्थोऽनुसंहितः। स च पुरुषशब्दप्रवृत्तिनिमित्तभूत इति च दर्शितम्। न केवलं कामानां विधाता, अपि तु हरिराश्रितार्तिहरश्च। नाऽहं तमाराधितुं प्रभवामीति शङ्कामपनुदन्विशिनष्टि - दीनानुकम्पनः दीनेषु किञ्चिदानुकूल्ययुक्तेषु विपुलापराधिष्वपि निरतिशयकृपायुक्तः। भगवतः पूर्णषाड्[3]गुण्य-युक्तस्य अवाप्तसमस्तकामस्यैव सेवा अमोघा सफला नेतरा [4]न देवतान्तरसेवेति मम मतिः, मतमित्यर्थः, देवतान्तरस्य अनवाप्तसमस्तकामत्वादिति भावः।।२१।।

एवमुपदिष्टानिष्ट निरसनेष्टप्रापणसमर्थोपाया तदुपायानुष्ठान प्रकार बुभुत्सया पृच्छत्यदितिः - केनेति द्वाभ्याम्। हे भगवन्! अहं केन विधिना जगत्पतिं भगवन्तं [5]उपस्थास्ये[5] भजेयम्? यथा येन प्रकारेण भजमानाया मम स सत्यसङ्कल्पो भगवान्मनोरथं विदध्यात्।।२२।।

हे द्विजश्रेष्ठ! पुत्रैस्सह क्लिश्यन्त्याः मम यथा च देवो भगवानाशु तुष्यति तथा तं तद्भजनप्रकारात्मकं विधिमादिशस्व उपदिश।।२३।।

एवं पुनरापृष्टो भगवान्कश्यपः पयोव्रताख्यं भगवदाराधनात्मकं कर्मोपदेक्ष्यन् तस्मिन् विस्रम्भार्थं साम्प्रदायिकत्वं वदन् तत्कथनं प्रतिजानीते - एतदिति। प्रजाः पुत्रान् कामयमानस्य मे मया पृष्टो भगवान् पद्मजो ब्रह्मा यत्पयोव्रताख्यं कर्माऽऽह तत्केशवस्य सन्तोषकरं कर्म ते तुभ्यं प्रवक्ष्यामि।।२४।।

---

1. W क्वाऽव॰ 2. A,B,T Omit जनार्दनः 3. W ॰ण्यस्य 4. A,B,T Omit न 5- -5 W Omits

**विज०** अनात्मा जडात्मकः, मोहोऽज्ञानम्।।१७-२०।।

इतराः इतरदेवादिविषयाः।।२१।।

सत्यसङ्कल्पो हरिः।।२२।।

तदुपधावनं तस्य हरेः सेवाविषयम्, आशु तुष्यति, येनेति शेषः।।२३।।

यदेतद्व्रतं तद्वक्ष्यामि।।२४।।

फाल्गुनस्याऽमले पक्षे द्वादशाहं पयोव्रतम्[1]।
अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः।।२५।।

सिनीवाल्यां मृदाऽऽलिप्य स्नायात्क्रोडविदीर्णया।
यदि लभ्येत वै स्रोतस्येतं मन्त्रमु[2]दीरयेत्।।२६।।

त्वं देव्याऽऽदिवराहेण रसायाः स्थानमिच्छता।
उद्धृताऽसि नमस्तुभ्यं पाप्मानं मे प्रणाशय।।२७।।

[3]निर्वर्तितात्मनियमो देवमर्चेत्समाहितः।
[4]अर्चयेत् स्थण्डिले सूर्ये जले वह्नौ गुरावपि।।२८।।

नमस्तुभ्यं भगवते पुरुषाय महीयसे।
सर्वभूतनिवासाय वासुदेवाय साक्षिणे।।२९।।

नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च।
चतुर्विंश[5]द्गुणज्ञाय गुणसं[6]ख्यानहेतवे।।३०।।

नमो द्वि[7]शीर्ष्णे त्रिपदे शतुश्शृङ्गाय तन्तवे।
सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः।।३१।।

नमश्शिवाय रुद्राय नम[8-]श्शक्तिधराय च[-8]।
सर्वविद्याधिपतये भूतानां पतये नमः।।३२।।

---

1. A,B,G,J,M,Ma,T व्रतः 2. H,V °मुदाहरेत् 3. H,M,Ma,V निव° 4. A,B,G,J,M,Ma,T अर्चायां 5. H,V,W °श गु° 6. M,Ma °स्था° 7. M,Ma,W °र्षे 8- -8. M,Ma °स्साधारणाय च।

**श्रीध० फाल्गुनस्येति**। अमले शुक्ले।।२५।।

तत्राऽऽदौ पूर्वेद्युः कृत्यमाह - **सिनीवाल्यामित्यारभ्य**[1] " ब्रह्मचार्यथ तद्व्राम्याम् " (भाग.8-16-44) इत्यन्तेन ग्रन्थेन। यदि लभ्येत तर्हि क्रोडविदीर्णया वन्यवराहोत्खातया आलिप्य।।२६।।

तत्र मन्त्रः ' त्वं देवि!' इति। हे देवि! त्वं रसाया उद्धृताऽसि।।२७।।

**निर्वर्तितेति**। निर्वर्तित आत्मनियमो नित्यनैमित्तिको येन।।२८।।

तत्राऽऽवाहनादौ नवमन्त्रानाह-**नमस्तुभ्यमिति**। पाद्यादौ विशेषतस्तु द्वादशाक्षरं वक्ष्यति।।२९।।

**नम** इति। चतुर्विंशतिगुणाः तत्त्वानि जानातीति तथा तस्मै। गुणसंख्यानस्य[2] हेतवे सांख्यप्रवर्तकाय।।३०।।

एवं सामन्यतो नत्वा गुणावतारान्प्रणमति त्रिभिः। तत्राऽऽदौ मन्त्रोक्तयज्ञरूपेण विष्णोः प्रणामो **नम** इति। द्वे शीर्षे यस्य। त्रयः पादा यस्य। तन्तवे फलविस्तारकाय। त्रय्यां विद्यायामात्मा यस्येति त्रिधा बद्ध इत्यस्याऽर्थ उक्तः। तथा च मन्त्रः - " चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश" (मना.उ. 8-10-1) इति।[3] "मार्गमुद्रवदालूनः सोऽयं प्राज्ञैर्यथायथम्। विष्णुस्तु यज्ञरूपेण स्तूयते तेन[4] तत्त्वतः"। [5-]अस्यार्थः - मार्गः विष्ण्वाराधनं तस्मिन् या मुत् तां गच्छन्ति ये सायैर्गीयते वा ते मुद्राः भक्ताः ते विद्यन्ते एषु ते मुद्रवन्तः तैः आलूनः व्याप्तः साक्षात्कृतः इत्यर्थः। निवृत्तिमार्गलभ्यं अमुदानन्दं तत्प्रापकं उपासनामार्गे मुदं गच्छन्ति ते मार्गमुद्राः तत्प्रवर्तकाः आचार्याः ते विद्यन्ते। एषु अर्वाचीनेषु ते मार्गमुद्रवः तैः आलूनः पृथक्त्वेनोपासित इत्यर्थः। पाठान्तरे मुदं वहन्तीति मार्गमुद्वहन्तः तैः आलूनः पृथक्त्वेनोपासित इत्यर्थः। किञ्च पूर्वोदाहृतश्रुत्यर्थोऽपि यास्काचार्यैः विवृतः।[-5] [6]चत्वारि शृङ्गेति। वेदा एव[7] उक्तास्त्रयोऽस्य पादाः इति[8] सवनानि त्रीणि। द्वे शीर्षे प्रायणीयोदयनीये। सप्तहस्तासः सप्तच्छन्दांसि त्रिधा बद्धः[9] मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिः यजुर्भिः सामभिः "यदेनमृग्भिः शंसन्ति, यजुर्भिर्यजन्ति सामभिः[10] स्तुवन्ति।" [11-]महादेव इत्येष हि महान् देवो यद्यज्ञो मर्त्यां आविवेश इत्येष हि मनुष्यानाविशति यजनाय[-11] इति।।३१,३२।।

---

1. A,B,J °दिना 2. H,V "नहे" 3. B इति।। ३१,३२ ।। (According to B edn the commentary ends here ) 4 A,J अनेन 5- -5. A,J Omit 6. A,J add तथा च यास्कः 7. A,J वा एन 8 A,J Omit इति 9. A,J add त्रेधा बद्धः 10. H,V Omit सामभिः 11- -11. H,V Omit

**वीर०** एवं प्रतिज्ञाय तदेवाऽऽह - **फाल्गुनस्येत्यादिना** यावदध्यायसमाप्ति। फाल्गुनस्य मासस्य अमले शुक्ले पक्षे द्वादशाहं द्वादशाहसाध्यं पयोव्रताख्य कर्म, कर्तव्यमिति शेषः। तेन पयोव्रतेन परमया अव्यभिचरितया भक्त्या यक्तोऽरविन्दाक्षमर्चयेत्। अन्वित इति पुंलिङ्ग[1]निर्देशेन एतन्मे पद्मज आह इत्यनेन ते प्रवक्ष्यामीत्यनेन च स्त्रीपुरुषसाधारणमेतद्व्रतानुष्ठानमिति सूचयति।।२५।।

तत्रादौ पूर्वेद्युः कृत्यमाह - **सिनीवाल्या** मित्यादिना "ब्रह्मचार्यथ तद्वाऽऽत्र्याम्" (भाग.8-16-44) इत्यन्तेन। दृष्टेन्दुकलायाममावास्यायां यदि लभ्येत तर्हि क्रोडविदीर्णया अरण्यवराहोत्खातया मृदा मृत्तिकया देहमालिप्य स्रोतसि नद्यामिमं मन्त्रं वक्ष्यमाणं जपन् स्नायादुदीरयेदिति तदालेपनसमये एतन्मन्त्रमुदीरयेदित्यर्थः।।२६।।

मन्त्रमेवाऽऽह - **त्वमिति**। "उद्धताऽसि वराहेण कृष्णेन शतबाहुना" (मना.उ. 4-5) इति मन्त्रार्थानुवादकोऽयं मन्त्रः। हे देवि! हे भूदेव[2]ते! स्थानं तव यथास्थान मिच्छता वराहेण श्रीभगवता त्वं रसायाः रसातलादुद्धताऽसि। तुभ्यं नमः मम पापं प्रणाशय इतीयं मन्त्रमुदीरयन् मृदाऽऽलिप्य स्नायात्।।२७।।

ततो निर्वर्तितः सम्यगनुष्ठितः आत्मनियमः स[3]न्ध्योपासनादिर्येन तादृशः समाहितचित्तो हरिमभ्यर्चयेत्। कुत्राऽर्चयेत्? इत्यत्राऽऽह - **अर्चयेदिति**। स्थण्डिलादिषु पञ्चस्वप्यर्चयेत्[4]। तत्र स्थण्डिलं [5]रङ्गवल्यादिभिः अलङ्कृता[-5] भूमिः, जलं विशुद्ध[6]कुम्भसम्भृतम्।।२८।।

तत्राऽऽवाहने [7]नव मन्त्रानाह - **नम** इति। अत्रायं विवेकः - अत्र प्रधानो मन्त्रो वासुदेवद्वादशाक्षरः वासुदेवं जगद्गुरुम् उपतिष्ठस्व इत्युक्तत्वात् "गन्धमाल्यादिभिश्चाऽर्चेत् द्वादशाक्षरविद्यया" (भाग.8-16-39) "जुहुयान्मूलविद्यया जपेदष्टोत्तरं शतम्" (भाग. 8-16-40) इति वक्ष्यमाणत्वाच्च। नमस्तुभ्यमित्यादयस्तु आवहनोपचारमन्त्रा इति। तत्राऽऽद्यो मन्त्रो द्वादशाक्षरार्थानुवादी भगवद्वासुदेव शब्दाभ्यां तत्प्रत्यभिज्ञानात्। सर्वभूतनिवासाय इत्यनेन वासुदेवशब्दप्रवृत्तिनिमित्तमुक्तम्, सर्वभूतनिवासाय, अत एव वासुदेवशब्दवाच्यायेत्यर्थः। वसतीति वासुः, वसत्यस्मिन्निति वा वासुः। 'वस - निवासे' इति धातोः कर्तर्यधिकरणे च औणादिकः। आद्ये सर्वभूतेषु निवसत्यन्तरात्मतयेति सर्वभूतनिवासः तस्मै। द्वितीये तु सर्वभूतानामाधेयानां वासुः आधारभूतः तथा तस्मै। साक्षिणे इत्यनेन देवशब्दार्थ उच्यते। साक्षी साक्षाद्द्रष्टा सर्वं

1. A,B,T Omit लिङ्ग 2. A,T 'वि! ते 3. W सन्ध्यो " 4. W adds इत्यर्थः 5- -5. A,T Omit 6. A,B,T 'द्ध
7. W Omits नव

चेतनाऽचेतनाद्यात्मकं वस्तुजातं साक्षात्पश्यन् दृश्यधर्मैरस्पृष्टः साक्षीत्युच्यते। देवशब्दस्याऽप्ययमेवाऽर्थः। स्वतेजसा दीप्यमानो हि देवः महीयसे पुरुषाय इत्यनेन " वेदाऽहमेतं पुरुषं महान्तम् " (पु.सू. 2-1) इति पुरुषसूक्तप्रत्यभिज्ञानात् 'तत्र चैतम्' इत्येतच्छब्देन पूर्वोक्तजगत्कारणत्वतदुपयुक्तगुणपौष्कल्यवतः परामर्शात् तस्य जगत्कारणत्वादिगुणजातस्य मन्त्रप्रतिपाद्यवासुदेवविशेषणत्वमवगम्यते, तदेवम्भूताय तुभ्यं नमः। सर्वत्र मन्त्रेषु[1] नमश्शब्दप्रयोगः स्वप्रयोक्त्रभिप्रायको ज्ञेयः[2]।।२९।।

यदि [3-]स एवम्भूतो भगवान् सर्वभूतनिवासः सर्वसाक्षी च भवति[-3] तर्हि सर्वैः[4] कथं[5] न दृश्यते? इत्यत्राऽऽह - नमोऽव्यक्तायेति। अयं मन्त्रस्तु "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" ( मुण्ड.उ.1-6 ) इत्युपनिषत्प्रतिपाद्यपरमात्मस्वरूपप्रकाशकः अव्यक्तादिशब्दैरद्रेश्यसूक्ष्मभूतयोनित्वादिप्रत्यभिज्ञानात् अव्यक्ताय व्यक्तैरिन्द्रियैश्चक्षुरादिभिः न व्यज्यते न दृश्यते इत्यव्यक्तः तथा[6] तस्मै अद्रेश्यायेत्यर्थः। तत्र हेतुः सूक्ष्माय निरतिशयसूक्ष्मजीवान्तरात्मतया प्रवेशयोग्यत्वेन ततोऽपि सूक्ष्माय सूक्ष्मत्वप्रयुक्तं परिच्छिन्नत्वं वारयति - प्रधानपुरुषायेति। [7-]प्रधानपुरुषाय[-7] प्रकृतिपुरुषरूपायेत्यर्थः। ताद्रूप्यमत्र प्रकृतिपुरुषसमानाधिकृतत्वं, तच्च शरीरात्मभावननिबन्धनं शरीरबुद्धिशब्दानामात्मपर्यन्तत्वाभिप्रायेणाभेदनिर्देशः। एवञ्च सर्वान्तःप्रवेशयोग्यतया सूक्ष्मस्याप्याकाशस्येव प्रकृतिपुरुषान्तरात्मतया अनुप्रविष्टस्य स्वरूपमपरिच्छिन्नमेवेति भावः। प्रधानपुरुषायेति कारणावस्थाचिद्रूपत्वमुक्तम्। अथ कार्यावस्थतद्रूपत्वमाह - चतुर्विंशद्गु[8]णज्ञाय गुणभूतचतुर्विंशतितत्त्वाभिज्ञाय। गुणभावो विशेषणत्वं, शरीरत्वमिति यावत्। शरीरमपि हि आकृतिगुणादिवदपृथक्सिद्धविशेषणमेवेत्यभिप्रायः। अपृथक्सिद्धविशेषणविषयबुद्धिशब्दयोः तद्विशेष्य पर्यन्तत्वमाकृत्यधिकरणन्यायसिद्धम्। न केवलं चतुर्विंशति तत्त्वान्तरात्मतया तद्रूपत्वम्, अपि तु तत्कारणतयाऽपीत्याह - गुणसंख्यान हेतव इति। गुणानां सत्त्वादीनां चतुर्विंशतितत्त्वरूपेण कार्यावस्थानां संख्यानं गणनं तस्य हेतवे कारणभूताय गुणानां चतुर्विंशतिधा गणनायास्तेषां कार्यतापत्तिमूलकत्वात्तस्य तत्कारणत्वात् तद्धेतुत्वेन संख्यानहेतुत्वमपीत्यवगन्तव्यम्। यद्वा संख्यानं प्रमितिः, गुणसंख्यानस्य सत्त्वादिगुणानां प्रमितेः चतुर्विंशतिधा परिणतानां सत्त्वादिगुणानां प्रमितेः तद्विषयकप्रमायाः हेतवे। तत्प्रमाहेतुत्वञ्च तत्कारणत्वद्वारा इत्यवगन्तव्यम्। यद्वा गुणसंख्यानयोर्हेतवे।

1. A,B,T Omit त्र 2. W Omits ज्ञेयः 3- -3. W सर्वभूतनिवासः 4. W Omits सर्वै 5. W किं 6. W Omits तथा 7- -7. W Omits 8. W गु

संख्यानमत्र व्यष्टिप्रत्यगात्मस्वरूपम् अहमित्येवं सम्यक् स्वस्मै प्रकाशमानत्वात्। गुणशब्देन गुणकार्यभूतं चतुर्विंशतितत्त्वात्मकमचेतनद्रव्यमुच्यते। तयोर्हेतवे कारणभूतायेत्यर्थः ।।३०।।

एवं "यद्भूतयोनिम्" इति श्रुतिस्थभूतयोनिशब्दार्थ उक्तः। प्रधानपुरुषायेत्यादि पदत्रयेण कार्यकारणोभयावस्थ प्रकृतिपुरुषशरीरकत्वेन तत्कारणत्वेन च रूपात्मकस्य जगतः तद्विशेषणत्वमुक्तम्। अथ नामात्मकप्रपञ्चस्य तद्बोधकत्वेन तद्विशेषणत्वमाह - नम इति। अयं मन्त्रः " चत्वारि शृङ्गाः त्रयो अस्य पादाः द्वे शीर्षे सप्तहस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश " (मना.उ.8-10) इति मन्त्रप्रकाशितशब्दात्मकप्रपञ्चविशेषणपरमात्मस्वरूपप्रकाशकः तस्मिन् हि मन्त्रे शब्दात्मकप्रपञ्चो वृषभत्वेन रूप्यते। शब्दश्च [1]वर्णात्मको ध्वन्यात्मकश्चेति द्विविधः[1]। वर्णात्मकोऽपि पुनः साध्वसाधुभेदेन द्विविधः, साधुश्च वेदरूपेण, तन्मूलकस्मृतीतिहासादिरूपेण च द्विविधः। तत्र "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी नाम्ना यतस्सर्वाः प्रसूतयः। वेदशब्देभ्य एवाऽऽदौ देवादीनां स निर्ममे" (भारत.12-238-56) इत्याद्युक्तरीत्या कृत्स्नजगत्सृष्टेः वेदार्थालोचनमूलकत्वात्, वेदस्य प्राधान्यात् स च तन्मूलकस्मृत्यादिश्च साधुशब्दात्मकः प्रपञ्चो वृषभत्वेनाऽस्मिन् मन्त्रे रूप्यते। तदयं मन्त्रार्थः - महो देवः महान्देवः शब्दात्मको देवः। देवस्य परमात्मनो बोधकत्वाद्वा उपचाराद्देवः मर्त्यान् नश्वरान् देवमनुष्याद्यर्थान् परमात्मशरीरभूतान् आविवेश बोधयितुं प्रवृत्त इत्यर्थः। वृषभो रोरवीति प्रसिद्ध द्विशृङ्गचतुष्पादेकमूर्धवृषभविजातीय वृषभरूपः रोरवीति शब्दं करोति शब्दात्मकतामापन्न इत्यर्थः। विजातीयवृषभत्वेन तं रूपयति - चत्वारीति। अस्य शब्दात्मनो वृषभस्य शृङ्गाश्चत्वारि चत्वारः नामाख्यातनिपातोपसर्गाः त्रयो भूतभविष्यद्वर्तमानकालाः पादा आख्यातादीनां भूतादिकालोपाधिना विहितत्वाच्छब्दानां कालसाहचर्याच्च तेषां भूतादीनां पादत्वेन रूपणम्। द्वे शीर्षे प्रवृत्तिनिमित्तं तदाश्रयश्चेति द्वे शिरसी। सप्त विभक्तयो हस्तासः हस्ताः " आज्जसेरसुक् " (अष्टा.7-1-50) इत्यसुगागमः। त्रिधा बद्धः उरसि कण्ठे शिरसि च बद्धः, स्थानत्रये एव शब्दानामाविर्भावादिति भावः इति। प्रकृतमन्त्रार्थस्तु त्रयीविद्यात्मने, त्रयीविद्या वेदविद्या तदात्मने तद्विशेषणकाय। तद्विशेषणकत्वञ्च तद्बोधयत्वरूपं विवक्षितम्। रूपात्मकप्रपञ्चस्य परमात्मनोऽपृथक्सिद्धविशेषणत्वात् अपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यन्त बोधकत्वस्वाभाव्यात् निगमागमादिशब्दजातबोध्यायेति फलितोऽर्थः। "काठिन्यवान्यो बिभर्ति" (विष्णु.पु.1-14-28) इत्यादिवत् द्विशीर्षत्वादिकं साक्षात्त्रयीविद्याविशेषणम् परमात्मनस्तु सद्वारकं

1--1. A,B,T Omit

विशेषणमित्यवगन्तव्यम्। तन्तवे तनोति यज्ञादिक्रियाकलापं विस्तारयति विस्तृत्य प्रकाशयतीति तन्तुस्तस्मै यज्ञाय। यज्ञो विष्णुः - "यज्ञो वै विष्णुः" (तैत्ति.सं.1-5-6) इति श्रुतेः। " यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते" इति स्मृतौ यज्ञशब्दस्य विष्णौ प्रयोगाच्च। यज्ञाय विष्णुप्रकाशकाय। पूर्वोत्तरभागाभ्यां कर्मब्रह्मप्रतिपादकायेत्यर्थः। केचिदत्र यज्ञरूपेण विष्णुः स्तूयते इत्युक्त्वा, चत्वारिशृङ्गेति वेदा वा, एतदुक्ताः त्रयोऽस्य पादा इति सवनानि त्रीणि, द्वे शीर्षे प्रायणीयोदयनीये सप्तहस्तासः सप्त छन्दांसि, त्रिधा बद्धः त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्बद्धो वृषभो रोरवीति रोरवणं सवनक्रमेण ऋग्भिर्यजुर्भिस्सामभिः "यथैन मृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति" इति यास्कनिरुक्तमुदाहृत्य व्याचक्षते।।३१।।

तदेवं नामरूपात्मकजगदन्तरात्मत्वेन तत्कारणत्वेन च प्रकृतकर्माराध्यस्य वासुदेवस्य तद्विशेषणकत्वमुक्तम्। ननु, जगत्सृष्ट्यादिकर्तृत्वं ब्रह्मरुद्रादिगतं न वासुदेवगतमित्याशङ्कायां यद्ब्रह्मादिगतं जगत्स्रष्टृत्वादिकं तदन्तरात्मतयाऽनुप्रविष्टस्य तच्छरीरकस्य तद्द्वारा तस्यैव विशेषणमित्यभिप्रायेण तद्रूपत्वमुच्यते - **नमश्शिवायेति** [1-]श्लोकद्वयेन[-1]। तत्र शिवत्वादिधर्माणां प्रतर्दनाधिकरणन्यायेन इन्द्रद्वारा त्वाष्ट्रहन्तृत्वादीनामिव रुद्रब्रह्मशरीरकस्य परमात्मनः [2]भूतानीति सद्वारक विशेषणत्वमवगन्तव्यम्। शक्तिधराय अम्बिकापतये इत्यर्थः।।३२।।

**विज०** पयोव्रत इति पुंलिङ्गप्रयोगः सर्वसाधनत्वज्ञापनार्थः। मृदो विशेषमाह - क्रोडेति। वराहखातया स्रोतः स्यन्दमानं जलं तत्र स्नानं कुर्यादित्यर्थः।।२५,२६।।

रसायाः रसातलात्, स्थानमिच्छता, भूतानामिति शेषः।।२७।।

[3]निर्वर्तितात्मनियमः कृतसन्ध्योपासनादिकः।।२८,२९।।

गुणसंस्थानहेतवे कपिलात्मने।।३०।।

" [4]द्विशीर्षे चत्वारिशृङ्गाः" (म.ना.उ.8-10) इति श्रुतेः। " चत्वारि शृङ्गा वेदास्तु पादास्त्रिसवनानि च। [5]प्रायणीयं शिरस्त्वेकमन्यच्चोदयनीयकम्। हस्तास्तु सप्त च्छन्दांसि, तैर्गृह्णति फलान्यसौ। मन्त्रब्राह्मणकल्पैस्तु त्रिधा बद्ध इतीर्यते। शस्त्रोद्गातृस्तुतिरवै रोरवीत्यृत्विजो मुखात्। वृषभो महान्स्वधर्मत्वात् देवस्तु फलभावनात्"। इति। तन्तवे व्याप्ताय सन्तति हेतवे च। त्रयीविद्यानां सोमपानाम् आत्मने अन्तर्यामिणे।।३१,३२।।

1. A,B,T Omit 2. W Omits भूतानीति 3. A,B निर्व " 4. M द्वे 5. M,Ma "प"

**नमो हिरण्यगर्भाय प्राणाय जगदात्मने।**
**योगैश्वर्यशरीराय नमस्ते योगहेतवे।।३३।।**

**नमस्त आदिदेवाय [1] देवदेवाय ते नमः।**
**नारायणाय ऋषये नराय हरये नमः।।३४।।**

**नमो मरकतश्यामवपुषेऽधिगतगतश्रिये।**
**केशवाय नमस्तुभ्यं नमस्ते पीतवाससे।।३५।।**

**त्वं सर्ववरदः [2] पुंसां वरेण्य वरदर्षभ।**
**अतस्ते श्रेयसे धीराः पादरेणुमुपासते।।३६।।**

**अन्ववर्तन्त यं देवाः [3-] श्रीश्च यत्पाद [-3] पद्मयोः।**
**स्पृहयन्त इवाऽऽमोदं भगवान्मे प्रसीदताम्।।३७।।**

**एतैर्मन्त्रै हृषीकेशमावाहनपुरस्कृतम् [4]।**
**अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः।।३८।।**

**[5-] अर्चयित्वा गन्धमाल्यैः [-5] पयसा [6] स्नापयेद्विभुम्।**
**वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः।**
**गन्धधूपादिभिश्चाऽर्चेत् द्वादशाक्षरविद्यया।।३९।।**

**[7] शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति।**
**ससर्पिस्सगुडं दत्त्वा जुहुयान्मूलविद्यया।।४०।।**

**श्रीध० नम** इति। प्राणाय सूत्रात्मने। योगैश्वर्यं शरीरं यस्य।।३३,३४।।

**नम** इति। अधिगता प्राप्ता श्रीः येन तस्मै।।३५,३६।।

**अन्ववर्तन्तेति**। [8] यत्पादपद्मयोरामोदं स्पृहयन्त इव देवाश्च श्रीश्च यमन्ववर्तन्त, स मे प्रसीदतु।।३७।।

**एतैरिति**। आवाहनेन पुरस्कृतं [9-] सन्निधापितम् [-9]।।३८,३९।।

**शृतमिति**। पयसि शृतं पक्वं [10] पायसम्। मूलविद्यया द्वादशाक्षरेणैव।।४०।।

---

1. A,B,G,J,T साक्षीभूताय 2. M,Ma तपसा 3- -3 A,B,G,J,T श्रीश्च तत्पाद , M,Ma श्री विनिर्जित° 4. M,Ma °स्सरम्
5- -5. A,B,G,J,T अर्चित्वा गन्धमाल्याद्यै. , M,Ma अर्चित गन्धमाल्याद्यैः 6. A,B,G,J,T स्न° 7. W श्रितं 8. A,B,J त°
9- -9 A,B,J सम्मानितम्। 10. H,V Omit पायसम्

**वीर०** हिरण्यगर्भाय चतुर्मुखरूपेणाऽवस्थिताय प्राणायति सर्वाणि भूतानीति प्राणः तस्मै। " को ह्येवाऽन्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् " (तैत्ति.उ. 2-7) इति श्रुतेः। प्राणशरीरकत्वाद्वा प्राणः जगदन्तरात्मने ब्रह्मादिस्तम्बपर्यन्तजगदन्तरात्मत्वमेव तत्समानाधिकृति निमित्तमिति भावः। योगैश्वर्यशरीराय योगैश्वर्यनिर्वाहकाय तन्निर्वाहकत्वं योगस्मृतिप्रणेतृत्वरूपकारणत्वेनेत्याह योगहेतवे योगस्मृतिकर्त्रे इत्यर्थः। इदं विशेषणद्वयं साक्षाच्चतुर्मुखस्य, तद्द्वारा तु परमात्मन इत्यवगन्तव्यम्।।३३।।

उक्त विशेषणसामर्थ्यलब्धैरन्यैरप्यसाधारणधर्मैः विशिंषन्नमस्करोति मन्त्रः **नमस्त** इति आदिदेवाय ब्रह्मरुद्रादिदेवानामपि[1] आदिभूताय कारणभूतायेत्यर्थः। अयमुक्तसर्वकारणत्वसामर्थ्यलब्धोऽर्थः। शब्दार्थस्तु आदिश्चाऽसौ देवः तस्मा इति। अत एव देवानामपि देवाय अधिपतये स्वतेजसा दीप्यमानानां ब्रह्मादिदेवानामपि अन्तरात्मतया दीप्यमानायेति वा। नारायणाय नाराणां प्राप्याय प्रापकाय आधाराय च नाराय नित्याय ऋषये सर्वज्ञाय। यद्वा, नारायणाय ऋषये नराय च नरनारायणऋषिरूपेणावतीर्णाय हरये आश्रितार्तिहन्त्रे।।३४।।

मरकतवदिन्द्रनीलवत् श्यामं वपुर्यस्य अधिगता नित्यसंश्लिष्टा श्रीर्महालक्ष्मीर्येन तस्मै। केशवादिद्वादशमूर्तीनां उपलक्षकः केशवशब्दः केशवादिद्वादशमूर्तिरूपेणावस्थितायेत्यर्थः। पिशङ्गं वासो वस्त्रं[2] यस्य तस्मै।।३५।।

हे वरेण्य! अनेन गायत्रीप्रतिपाद्यत्वं सूचितम्। हे वरदश्रेष्ठ! त्वमेव यतः सर्ववरदः ततः तवैव पादरेणुमिष्टप्राप्तये धीरा उपासते सेवन्ते।।३६।।

श्रीर्लक्ष्मीः देवाः ब्रह्मादयश्च यत्पादपद्मयोरामोदं स्पृहयन्तः कामयमाना इव यमनुसृतवन्तः स भगवान् पूर्णषाड्गुण्यो वासुदेवो मह्यं प्रसीदताम्[3]।।३७।।

इत्येतैर्मन्त्रैरावाहनेन[4] पुरस्कृतं सन्निधापितं हृषीकेशं पाद्योपस्पर्शनं[5] पाद्यसमर्पणं तदादिर्येषां तैः आसनार्घ्यै। आदिशब्देन ग्राह्यो पाठक्रमस्त्वविवक्षितः[6] आसनार्घ्यपाद्यैरर्चयेदित्यर्थः।।३८।।

एवं एतैरर्चित्वा गन्धमाल्यैः गन्धपुष्पैस्सह पयसा गन्धादिसहितेन क्षीरेण शुद्धजलेन च विभुं वासुदेवं स्नापयेदित्यर्थः[7]। ततो वस्त्रादिभिरभ्यर्च्य गन्धादिभिरर्चेत्।आदिशब्देन दीपमधुपर्काचमनानि ग्राह्याणि। द्वादशाक्षरविद्ययेति पूर्वोत्तरान्वयि आसनाद्युपचाराश्चाऽनयैव कार्याः।।३९।।

1. A,B,T 'द्रादीना' 2. W Omits वस्त्रं 3. W 'तात्। 4. A,B,T 'नपु' 5. A,B,T पाद्याऽऽचमनं 6. W Omits पाठ
7. W Omits इत्यर्थः

तथा तयैव विद्यया विभवे सति पयसि क्षीरे [1]शृतं पक्कं शाल्यन्नं ससर्पिः [2-]घृतेन सहितं[-2] सगुडञ्च नैवेद्यं दत्वा समर्प्य उक्तद्वाशाक्षरविद्यया जुहुयात्।।४०।।

**विज०** हिनोति दुःखं, राति सुखमिति हिरण्यं रेनो लक्षणं गर्भं यस्य स तथा तस्मै।।३३-३५।।

यतो वरदर्षभः अतः।।३६।।

श्रिया विनिर्जिते पद्मे ययोस्तौ तथा तयोः पादयोरामोदं स्पृहयन्तो देवा यमन्ववर्तन्त स भगवान्।।३७।।

उपस्पर्शनमाचमनम्।।३८।।

द्वादशाक्षरविद्यया ओं नमो भगवते वासुदेवायेति।।३९।।

पयसि शृतं पायसान्नम्।।४०।।

निवेदितं [3]तद्भक्ताय दद्यात् भुञ्जीत वा स्वयम्।
दत्त्वाऽऽचमनमर्चित्वा ताम्बूलञ्च निवेदयेत्।।४१।।

जपेदष्टोत्तरशतं [4-]स्तुवीत स्तुतिभिः[-4] प्रभुम्।
कृत्वा प्रदक्षि[5]णं भूमौ प्रणमेद्दण्डवन्मुदा।।४२।।

कृत्वा शिरसि तच्छे[6]षां देवमुद्वासयेत्ततः।
द्व्यवरान्भोजयेद्विप्रान् पायसेन यथोचितम्।।४३।।

भुञ्जीत तैरनुज्ञातः [7-]शेषं सेष्टः[-7] सभाजितैः।
ब्रह्मचार्यथ तद्रात्र्यां श्वो भूते प्रथमेऽहनि।।४४।।

[8]स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः।
पयसा स्नापयित्वा[9]ऽर्चेत् यावद्व्रतसमापनम्।।४५।।

[10]पयोभक्षव्रतमिदं चरेद्विष्णवर्चनादृतः।
पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चाऽपि भोजयेत्।।४६।।

---

1. W श्रितं 2- -2. W Omits 3. H,V तु भक्ताय ; W तु तद्भोक्त्रे 4- -4 W स्तुवन्स्तस्तस्तु° 5. M,Ma °णा 6. A,B,G,J,T °षां
7- -7. M,Ma हुतशेषं 8. M,Ma प्रातः 9. W °पयभर्चेत् 10. A,B,G,J,M,Ma,T भक्षो

**एवन्त्वहरहः कुर्यात् द्वादशाहं पयोव्रतम्[1]।**
**हरेराराधनं होममर्हणं द्विजतर्पणम्।।४७।।**

**प्रतिपद्दिनमारभ्य यावच्छुक्ल[2]त्रयोदशी।**
**ब्रह्मचर्यमधः स्वप्नं[3] स्नानं त्रिषवणं चरेत्।।४८।।**

**श्रीध० जयेदिति।** पूर्वोक्ताभिरन्याभिश्च स्तुतिभिः।।४१,४२।।

**कृत्वेति।** तस्य शेषं निर्माल्यम्। द्वाववरौ येषां तान्। असम्भवे द्वावपि भोजयेदित्यर्थः।।४३।।

**भुञ्जीतेति।** सभाजितैः तैः अनुज्ञातस्सन्। शेषं[4] सेष्टः बन्धुभिस्सहितः। तस्यां रात्र्यां ब्रह्मचारी सन् श्वो भूते प्रभाते सति।।४४,४५।।

**पय इति।** पय एव भक्ष आहारो यस्य।।४६,४७।।

**प्रतिपदिति।** अधः स्वप्नं शयनम्।।४८।।

**वीर०** ततः[5] यद्भगवते निवेदितमन्नं पायसं तत् सति लाभे भोक्त्रे ब्राह्मणाय दद्यात्, नो चेत् स्वयं वा भुञ्जीत। तत आचमनं दत्त्वा ताम्बूलं निवेदयेत् समर्पयेत्।।४१।।

ततो द्वादशाक्षरं मन्त्रं अष्टोत्तरशतं जपेत्। स्तोत्रैः [6-]वैदिकतान्त्रिकस्तुतिभिः[-6] भगवन्तं स्तुवीत। ततः प्रदक्षिणं कृत्वा दण्डवत् भूमौ मुदा हर्षेण प्रणमेत्।।४२।।

तच्छेषां[7] निर्माल्यं पुष्पादिकं शिरसि धृत्वा ततो भगवन्तमुद्वासयेत्। द्वाववरौ येषां तान् विप्रान् यथाविधि पायसेन भोजयेत् द्व्यवरानित्यनेन असति सम्भवे[8] द्वावपि वा[9] भोजयेत्, न त्वेकमिति विवक्षितम्। ततः सम्यक् पूजितैः तैर्विप्रैरनुज्ञातः सेष्टः बन्धुभिस्सहितः शेषं शिष्टमन्नादिकं भुञ्जीत। अथ तद्रात्र्यां ब्रह्मचारी स्त्रीसङ्गरहितः, शयीतेति शेषः। अथ प्रथमेऽहनि श्वो भूते प्रभाते।।४३-४४।।

स्नातः शुचिः समाहितचित्तो यथोक्तेन विधानेन पयसा स्नापयन्, भगवन्तमिति शेषः। [10]स्नपनग्रहणमाह्वानादीनामप्युपलक्षणम् यावद्व्रतसमाप्ति एवमभ्यर्चेदित्यर्थः।।४५।।

पयः क्षीरमेव भक्ष आहारो यस्य सः, [11-]विष्णोरर्चने[-11] आदरयुक्त इदं व्रतं कुर्यात्। पूर्ववदग्नौ जुहुयात्, विप्रांश्च भोजयेत्।।४६।।

---

1. A,B,G,J,T,W व्रतः। 2. M,Ma चतुर्दशी 3. M,Ma स्वापं 4. A,B,J Omit शेषं 5. W Omits ततः 6- -6. W Omits
7. W 'षं 8. A,B,J Omit विभवे 9. A,B,T Omit वा 10. W स्ना° 11- -11. W विष्ण्वर्चनायां

एवमहरहः द्वादशदिनपर्यन्तं स्वयं पयोभक्षः हरेराराधनं द्विजभोजनं तदर्हणं ब्रह्मचर्यमधश्शयनं त्रिकालस्नानञ्च इत्येतत्सर्वं यावच्छुक्लत्रयोदशीपर्यन्तं कुर्यात्। 'द्वादशाहं पयोव्रतम्' इति पाठे द्वादशदिनसाध्यं पयोव्रताख्यं कर्म हरेः आराधनादिरूपं चरेदित्यर्थः।।४७,४८।।

**विज०** तच्छेषं पुष्पं द्रवमाणम्।।४१-४३।।

द्व्यवरान् अवरपक्षेऽपि द्वावपेक्षितौ। मुख्यपक्षस्तु द्वादशेति।।४४-४८।।

वर्जयेदसदालापं[1] भोगानुच्चावचांस्तथा।
अहिंस्रस्सर्वभूतानां वासुदेवपरायणः।।४९।।

त्रयोदश्यामथो विष्णोः [2-]स्नपनं पञ्चकै[-2]र्विभोः।
कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः।।५०।।

पूजाञ्च महतीं कुर्या द्वित्तशाठ्यविवर्जितः।
चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे।।५१।।

सूक्तेन[3] तेन[4] पुरुषं यजेत सुसमाहितः।
नैवेद्यञ्चाऽधिगुणवत् दद्यात्पुरुषतुष्टिदम्।।५२।।

आचार्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः।
तोषयेदृत्विजश्चैव तद्धि[5] ह्याराधनं हरेः।।५३।।

भोजयेत्तान् गुणवता सदन्नेन शुचिस्मिते।
अन्यांश्च ब्राह्मणान्युक्तान्[6] ये च तत्र समागताः।।५४।।

दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथार्हतः।
अन्नाद्येनाश्वपाकेभ्यः[7] प्रीणयेत्समुपागतान्।।५५।।

भुक्तवत्स्वथ[8] सर्वेषु[9] दीनान्धकृपणादिषु[10]।
विष्णोस्तत्प्रीणनं विद्वान्भुञ्जीत सह बन्धुभिः।।५६।।

---

1. W °लापान् 2- -2. M,Ma स्नापनं स्नापकै° 3. A,B,G,J,M,Ma,T श्रुतेन 4. A,G,J,T °ति ; B,M,Ma °पि
5. A,B,G,J,M,Ma,T तद्विद्ध्या° 6. A,B,G,J,M,Ma,T °च्छक्तया 7. A,B,G,J,M,Ma,T °पाकांश्च
8. A,B,G,J,M,Ma,T भुक्तवत्सु च 9. M,Ma विप्रेषु 10. A,B,G,J,T °णेषु च

**श्रीध०** **त्रयोदश्यामिति।** पञ्चकैः पञ्चामृतैः।।४९-५६।।

**वीर०** अथ वर्ज्यानाह - **वर्जयेदिति।** नानाविधान् असद्भिः आलापान् वर्जयेत्। यद्वा असदालापान् तथेन्द्रियान्तरव्यापारान् असतः त्यजेदित्यर्थः। तथा सर्वभूतसम्बन्धिहिंसारहितः वासुदेवानुसन्धानपरो भवेत्।।४९।।

एवं द्वादशसु दिनेष्वतीतेषु अथ त्रयोदश्यां पञ्चभिरमृतैः साधनैश्चतुर्भिः ऋत्विग्भिः आचार्येण चेति पञ्चभिर्वा शास्त्रोक्तेन विधिना तदभिज्ञैः प्रयोज्यकर्तृभिः विष्णोः स्नपनं कारयेत्।।५०।।

वित्तलोभमकुर्वाणो विष्णोर्महतीं सर्वोपचारयुक्तां पूजां कुर्यात्। क्षीरे चरुं हविः शिपिविष्ट विष्णुदेवताकं कारयित्वा, शिपिविष्टो निरतिशयतेजोयुक्तः सुसमाहितचित्तः परमपुरुषं पुरुषसूक्तेन षोडशऋग्भिः यजेत होमेन तमाराधयेदित्यर्थः[1]। ततः परमपुरुषप्रीतिकरं षड्रसोपेतं नैवेद्यं भगवते समर्पयेदित्यर्थः।।५१,५२।।

ततो वस्त्रादिभिर्ज्ञानसम्पन्नमाचार्यं यथावित्तं द्विजांश्च तोषयेत्। हि यस्मात् तदाचार्यद्विजतोषणं विष्णोरेवाऽऽराधनं भवति तस्मात्तांस्तोषयेदित्यर्थः।।५३।।

गुणवता षड्रसयुक्तेनाऽन्नेन हे शुचिस्मिते! तान् पूजितान् आचार्यब्राह्मणान् ये चाऽन्ये तत्र समागतास्तांश्च युक्तान् भोक्तुं योग्यान्भोजयेत्।।५४।।

ततो गुरवे ऋत्विग्भ्यश्च स्ववित्तानुसारेण दक्षिणां दद्यात्। श्वपाकपर्यन्तेभ्यः समागतान् सर्वान् अन्नादिभिस्तोषयेत्।।५५।।

एवं दीनादिष्वपि भुक्तवत्सु तत्सत्कारं विष्णोरेव तोषकरं जानन् स्वयमपि बन्धुभिस्सह भुञ्जीत।।५६।।

**विज०** स्नापकैः स्नानसाधनैः।।४९,५०।।

शिपिषु रश्मिषु विष्टः शिपिविष्टः शिपौ गरुडे विष्टः तस्मै वा।।५१।।

मधुरादिगुणवत्।।५२-५६।।

**[2]नृत्तवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः[3]।**
**कारयेत्तत्कथाभिश्च पूजां भगवतोन्वहम्।।५७।।**

**एतत्पयोव्रतं नाम पुरुषाराधनं परम्।**
**पितामहेनाऽभिहितं [4]मया ते समुदाहृतम्।।५८।।**

1. W Omits इत्यर्थः 2. A,B,G,J,M,Ma,T नृत्य 3. M,Ma °चनैः 4. M,Ma मम

**त्वञ्चाऽनेन महाभागे सम्यगर्चय[1] केशवम्।**
**आत्मना शुद्धभावेन[2] नियतात्मा भजाव्ययम्।।५९।।**

**अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति[3] स्मृतम्।**
**तपस्सारमिदं भद्रे! दानञ्चेश्वरतर्पणम्।।६०।।**

**त एव नियमास्साक्षात्त एव च क्रतूत्तमाः[4]।**
**[5-]तपोदानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः[-5]।।६१।।**

**तस्मादेतद्[6]व्रतं भद्रे! प्रयता श्रद्धया यज[7]।**
**भगवान्परितुष्टस्ते वरमाशु[8] विधास्यति।।६२।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे अदितिपयोव्रतकथनं नाम षोडशोऽध्यायः।।१६।।

**श्रीध० एतदिति।** मया च ते समुदाहृतम्।।५८-५९।।

**अयमिति।** सर्वयज्ञाख्योऽयं यज्ञः सर्वव्रतमिति च स्मृतमेतद्व्रतम्।।६०-६१।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षोडशोऽध्यायः।।१६।।

**वीर०** आद्यन्तदिनद्वयं मध्ये द्वादश इत्येवं चतुर्दशस्वहस्सु नृत्तादिभिस्सह भगवतः पूजां कारयेत्।।५७।।

तदेवं पयोव्रताख्यं कर्म उपदिश्य पुनर्विश्वासायोक्तं साम्प्रदायिकत्वं स्मारयन् निगमयन् अनेन भगवन्तमाराधयेत्याह - **एतदिति।** पुरुषः परमपुरुष आराध्यते येन तत्तथा। परं श्रेष्ठम् एतत्पयोव्रतं नाम प्रसिद्धं मह्यं पितामहेनोपदिष्टं मम, मया च तुभ्यं सम्यगभिहितम्।।५८।।

हे महाभागे! त्वमपि सम्यगनुष्ठितेन अनेन पयोव्रतेन विशुद्धः भावो भक्तिर्यस्मिन् तेन आत्मना मनसा भजनीयमव्ययं केशवं भज आराधय।।५९।।

1. A,B,G,J,M,Ma,T सम्यक् चीर्णेन 2. M,Ma भजनीयं 3. M,Ma मिदं 4. A,B,G,J,M,Ma,T यमोत्तमाः 5- -5. H,V,W Omit 6. M,Ma चं व्रतं 7. A,B,G,J,M,Ma,T चर 8. A,B,G,J,M,Ma,T वरानाशु

प्रकृतं [1]व्रतं स्तौति - **अयमिति**। [2]सर्वयज्ञाख्योऽपि व्रतरूपो यज्ञः इदं व्रतं सर्वव्रतं स्मृतम्[2]। सर्वयज्ञव्रततुल्यमिदं [3]एकं व्रतमित्यर्थः। किञ्च, हे भद्रे! सर्वतपस्सारतुल्यं तथा सर्वदानतुल्यञ्च इदं व्रतं कुतः? चशब्दो हेत्वर्थः। च यतः [4]हेतोरिदमीश्वरतर्पणम् ईश्वरः तर्प्यतेऽनेनेति [5]तत्तथा ईश्वरतृप्तिकरत्वेन सर्वयज्ञादिसमकक्ष्यमित्यर्थः।।६०।।

यमनियमादयोऽपि ईश्वरतोषकरा एव सफलाः, अन्ये तु व्यर्था एवेत्याह - **त एवेति**। येन नियमादिनाऽधोक्षजः तुष्यति, त एव नियमादिशब्दवाच्याः अन्ये त्वाभासरूपा व्यर्था एवेत्यर्थः।।६१।।

तस्मात्सर्वयज्ञादिभिस्तुल्यत्वात् ईश्वरतोषकत्वाच्च, हे भद्रे! समाहिता त्वं श्रद्धया एतद्व्रतमनुतिष्ठ, तेन तुष्टो भगवांस्तवाऽऽशु वरान् दास्यति।।६२।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षोडशोऽध्यायः।।१६।।

**विज०** " तपस्सन्तोष आस्तिक्यं दानमीश्वरपूजनम्। सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च [6]जयो व्रतम्।। एते च नियमाः प्रोक्तास्तांश्च सर्वान् पृथक्शृणु।। अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम्। क्षमा धृतिर्मिताहारः शौचञ्चैते यमाः स्मृताः " ( वाराह.उ. 5-13 ) इति।।५७-६२।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे षोडशोऽध्यायः।।१६।।

---

1. A,B,T Omit व्रतं 2- -2. A,B,T Omit 3. A,B,T पयो" 4. W Omits हेतोः 5. A,B,T Omit तत् 6. A,B जपो

०००Ο०००

# सप्तदशोऽध्यायः

### श्रीशुक उवाच

इत्युक्ता साऽदिती राजन्! स्वभर्त्रा कश्यपेन वै।
अन्वतिष्ठ द्व्रतमिदं द्वादशाहमतन्द्रिता।।१।।

चिन्तयन्त्येकया[1] बुद्ध्या [2]महापुरुष मीश्वरम्[2]।
प्रगृह्येन्द्रियदुष्टाश्वान् मनसा बुद्धिसारथिः।।२।।

मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि।
वासुदेवे समाधाय चचार ह पयोव्रतम्।।३।।

[3]तस्याः प्रादुरभूत्तात! भगवानादिपूरुषः।
पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः।।४।।

तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम्।
ननाम भुवि कायेन दण्डवत्प्रीतिविह्वला।।५।।

सोत्थाय बद्धाञ्जलि रीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा।
बभूव तूष्णीं पुलकाकुलाकृति स्तद्दर्शनात्युत्सवगात्रवेपथुः।।६।।

प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह।
उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम्।।७।।

### अदिति रुवाच

यज्ञेश! यज्ञपुरुषाच्युत! तीर्थपाद! तीर्थश्रवः श्रवणमङ्गल नामधेय।
आपन्नलोकवृजिनोपशमोदयाऽऽद्य शं नः कृधीश! भग[4]वन्नसि दीननाथः।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

ततः सप्तदशेऽदित्या कृते तस्मिन् व्रते हरिः। तत्कामपूरणायादौ तत्पुत्रोऽभूदितीर्यते।।

सेति। प्रीतिविह्वलत्वादेव सा बद्धाञ्जलिस्सती स्थिता केवलमीडितुं पुनर्नोत्सेहे न शशाक, अपि तु

1. M,Ma "यत्ये" 2- -2. M,Ma भगवन्तमधोक्षजम् 3. B तस्मात्मा" 4. M,Ma "वन्नवसन्ननाथ।

तूष्णीं बभूव। कथम्भूता? आनन्दजलै राकुले ईक्षणे यस्याः। पुलकैराकुला आकृति देहो यस्याः। तस्य दर्शनेन योऽत्युत्सवस्तेन गात्रे वेपथुः कम्पो यस्याः।।१-६।।

**प्रीत्येति।** तुष्टाव पिबतीव उद्वीक्षमाणेति च क्रियाभेदात् 'सा' इत्यस्य पदस्य द्विरुक्ति रदोषः।।७।।

* "अयत्नतो विनिर्जित्य दैत्या नत्यूर्जितानपि। भक्ता न्रक्षितुमीशस्त्वमित्यस्तौ ददिति त्रिभिः" यज्ञेशेत्यादिदशभिः सम्बोधनैस्तवाशक्यं किमपि नास्तीति वदन्ती प्रार्थयते। शं नः कृधि कुरु। यतो दीनानां नाथोऽसि त्वम्। तीर्थं श्रवः कीर्तिर्यस्य, श्रवणमेव मङ्गलं यस्य, तन्नामधेयं यस्य, आपन्नानां शरणं[1] गतानां लोकानां[2] वृजिनोपशमः[3] उदयो यस्य।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एव मुपदिष्टपयोव्रताऽदितिः तदन्वतिष्टदित्याह मुनिः -**इतीति।** इति इत्थं, हे राजन्! स्वभर्त्रा कश्यपेन[4] उक्ता उपदिष्टव्रता सा अदितिः अतन्द्रिता समाहिता द्वादशाह मिदं पयोव्रत मन्वतिष्ठत्।।१।।

अथं[5] अनुष्ठानप्रकारमेवाह[6] - **चिन्तयन्तीति** द्वाभ्याम्। महापुरुषमीश्वरं वासुदेवमेकया अनन्यविषयया बुद्ध्या चिन्तयन्ती पयोव्रतं चचारेत्यर्थः। किं कृत्वा? बुद्धिः सारथिः मनोनिग्रहोपायभूता यस्यास्सा मनसा इन्द्रियाण्येव दुष्टसत्त्वाः तान्प्रगृह्य निगृह्य।।२।।

मनश्च एकाग्रया अनन्यविषयया बुद्ध्या सर्वान्तरात्मनि षाड्गुण्यपूर्णे वासुदेवे समाधाय स्थिरं कृत्वा तस्यामदित्यामित्थं व्रतमनुतिष्ठन्त्यां सत्यां भगवान् वासुदेवः प्रादुरासीत्। कथम्भूतः? पीते पिशङ्गे वाससी यस्य, चत्वारो बाहवो यस्य सः, शङ्खादीन्बिभ्राणः।।३,४।।

तं नेत्रगोचरं वासुदेवं समीक्ष्य अदितिराशूत्थाय प्रीत्या विह्वला सती कायेन दण्डवद्भूमौ ननाम[7] नमस्कृतवती।।५।।

प्रीतिविह्वलत्वादेव सा बद्धाञ्जलिः तूष्णीं स्थिता केवलमीडितुं स्तोतुं[8] पुनर्नोत्सेहे न शशाक। कथम्भूता? आनन्दजलैः आकुले ईक्षणे अक्षिणी यस्याः सा, पुलकै राकुला आकृतिर्देहो यस्या स्सा, तस्य भगवतो दर्शनमेव निरतिशयोत्सवः तेन गात्रे शरीरे वेपथुः कम्पो यस्यास्सा।।६।।

ततो हे कुरूद्वह! अदिति र्देवी शनैः गद्गदया गिरा प्रीतिपूर्वकं हरिं तुष्टाव। कथम्भूता सा? श्रियःपति

---

* श्रीधरीयोऽयं श्लोकः। 1. A,B,T 'ण्गाग' 2. A,B,J Omit लोकानां 3. A,B,J शमाय 4. W का° 5. W Omits अथ 6. A,B,T °रमाह 7. A,T Omit ननाम 8. W Omits स्तोतुं

मुद्वीक्ष्य चक्षुषा पिबन्तीव स्थिता सती तुष्टाव। पिबन्तीव उद्वीक्ष्य इति च क्रिया भेदात्सा इत्यस्य पदस्य द्विरुक्तिरदुष्टा [1-] इति ज्ञेयम् [-1]।।७।।

"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति" ( म.ना.उ. 1-6 ) "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" (भगी.9-24) इत्यादिश्रुतिस्मृतिप्रसिद्धं यत् यज्ञेश्वरत्वादिकं तदधुना दर्शयन्निव[2] दुर्लभोऽप्यल्पीयसाऽपि मत्कृतेनाऽऽराधनेन आविर्भूतोऽसीत्यभिप्रायेण सम्बोधयन्ती प्रार्थयते **यज्ञेशेति**। हे यज्ञेश! यज्ञानां प्रभो! हे यज्ञ पुरुष! यज्ञभोक्तः। आश्रितान्नच्यावयतीति अच्युतः तस्य सम्बोधनम्। तीर्थं गङ्गादिरूपं पादे यस्य, तीर्थं विशुद्धं श्रवः कीर्तिर्यस्य। हे तीर्थश्रवः। श्रवणमेव मङ्गलं यस्य तत् नामधेयं यस्य, आपन्नानां शरणागतानां लोकानां दुःखोपशमाय उदय आविर्भावो यस्य सः, नोऽस्माकं शं सुखं कृधि कुरु। यत स्त्वं [3-] हे भगवन्! षाड्गुण्यपूर्ण [-3]! दीनानां मादृशादीनां नाथोऽसि।।८।।

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

अव्यक्तस्वभावोऽपि भक्त्या भजमानस्य पुंसः प्रत्यक्षो भवति भगवानित्येत मर्थं दर्श्यत्यध्यायद्वयेन। तत्र अदित्याः भक्त्या व्रताचरणप्रकारं वक्ति - **इत्युक्तेति** ।।१-३।।

तद्व्रताचरणफलमाह - **तस्या** इति।।४-५।।

तस्याः भक्तिलक्षणं प्रदर्शयति - **सेति**। पुलकेन रोमाञ्चेन आकुला व्याप्ता आकृतिः तनुर्यस्या स्सा तथा। पुन स्तया किमकारीति तत्राऽऽह - तद्दर्शनेति। तद्दर्शनमेवाऽत्युत्सवः तन्निमित्तो गात्रवेपथुः देहकम्पो यस्याः सा तथा।।६।।

तस्याः मुग्धभावं दर्शयति - उद्वीक्षतीति।।७।।

स्वाभीष्टोदयकरगुणविशिष्टत्वेन स्तौति - **यज्ञेशेति**। यज्ञपुरुष अच्युत इत्यनेन गुणान्तराणि समुच्चिनोति। तानि कानीति तत्राऽऽह - तीर्थपादेत्यादि। तीर्थस्य शास्त्रस्य श्रवः श्रवणं याभ्यां ते तीर्थश्रवसी, ते च श्रवणेचेति। तीर्थश्रवश्श्रवणे ते मङ्गलयतीति तीर्थ श्रव श्श्रवणमङ्गलं, तच्च नामधेयं नाम, यस्य स तथा तस्य सम्बुद्धिः तीर्थश्रवश्श्रवणमङ्गलनामधेय। आपन्नस्य लोकस्य वृजिनं दुःखं तस्योपशमनार्थं परिहारार्थ मुदयो अवतारो यस्य स तथा तस्य सम्बुद्धिस्तथा, कृधि कुरु, अवसन्ननाथ क्षीणजनरक्षक!।।८।।

---

1- -1. W Omits 2. A.B,T ॰न्तीव 3- -3. W Omits

विश्वाय विश्वभवनस्थितिसंयमार्थ[1] स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने।
स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते।।९।।

आयुः परं वपुरभीष्ट मतुल्यलक्ष्मी र्द्योभूरसाः सकल[2]योग गुणास्त्रिवर्गः।[-2]
ज्ञानञ्च केवल मनन्त भवन्ति तुष्टात् त्वत्तोनृणां किमु सपत्नजयादि राशीः।।१०।।

श्रीशुक उवाच

अदित्यैवं स्तुतो राजन् ! भगवान् पुष्करेक्षणः।
क्षेत्रज्ञस्सर्वभूताना मिति होवाच भारत!।।११।।

श्रीभगवानुवाच

देवमात र्भवत्या मे विज्ञातं चिरकाङ्क्षितम्।
यत्सपत्नै र्हृतश्रीणां [3]च्यावितानां स्वधामतः।।१२।।

तान्विर्निर्जित्य समरे दुर्मदा नसुरर्षभान्।
प्रतिलब्धजयश्रीभिः पुत्रै रिच्छस्युपासितुम्।।१३।।

इन्द्रज्येष्ठैः स्वतनयैः हतानां युधि विद्विषाम्।
स्त्रियो रुदन्ती रासाद्य द्रष्टु मिच्छसि दुःखिताः।।१४।।

आत्मजान्सुसमृद्धांस्त्वं प्रत्याहृतयशश्श्रियः।
नाकपृष्ट मधिष्ठाय क्रीडतो द्रष्टुमिच्छसि।।१५।।

प्रायोऽधुना तेऽसुरयूथनाथा [4]अपारणीया इति देवि! मे मतिः।
यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति।।१६।।

**श्रीध विश्वायेति।** [5]भूम्ने महते नमः। महत्त्वे हेतवः विश्वाय विश्वस्य भवनस्थिति संयमार्थं स्वैरं गृहीताः पुरुशक्ते र्मायया गुणा येन तस्मै। तथाऽपि स्वस्थाय अप्रच्युतस्वरूपाय। कुतः? शश्व दुपबृंहितो नित्योर्जितो यः पूर्णबोध स्तेन व्यापादितं नित्यनिरस्तमात्मनि तमो मायालक्षणं येन तस्मै।।९।।

अस्मदीयमनोरथपूरण मीषत्करमेव तवेति कैमुत्य न्यायेनाऽऽह - **आयुरिति।** आयुः परं ब्रह्मायुः

1. A,B,G,J,M,Ma,T "य 2- -2. M,Ma किमुपसभजनाधिनाश. 3 M,Ma बाधितानां 4. A,B,G,J,T अपा" 5. A adds हे आद्य !

[1] अपि द्यौश्च भूश्च रसातलञ्च द्योभूरसाः। द्यौरिति पृथक्पाठे भूश्च रसाश्च बिलस्वर्गाः इति विग्रहः। रसेति पाठे त्रीणि पदानि। सकला योगगुणा अणिमादयः।।१०।।

**अदित्येति।** क्षेत्रज्ञोऽन्तर्यामी।।११।।

**देवेति।** सपत्नैः हृता श्रीर्येषां, स्वधामत श्च्यावितानाञ्च पुत्राणां सम्बन्धि यत्तद्भवत्या श्चिर माकांक्षितम् मया विज्ञातम्।।१२।।

कांक्षितमेवाऽऽह - **तानिति** त्रिभिः। प्रतिलब्धो जयश्च श्रीश्च यैस्तैः पुत्रैः सहोपासितुमेकत्र स्थातुमिच्छसि।।१३,१४।।

**आत्मजानिति।** प्रत्याहृतं यशश्च श्रीश्च यै स्तान्।।१५।।

**प्राय** इति। [2] अवारणीया अनतिक्रमणीयाः। यद्यस्मात् अनुकूल ईश्वरः कालो येषां तैः विप्रैः गुप्ता रक्षिताः। अनुकूलै रीश्वरैः समर्थैः विप्रै र्गुप्ता इति वा।।१६।।

**वीर०** [3] किञ्च - विश्वाय विश्वरूपाय अत एव अत्राऽऽविर्भूतोऽसीति भावः। हरये तुभ्यं नमः। विश्वरूपत्वे हेतुः - विश्वेति। [4-] विश्वभवनस्थितिसंयमाय [-4] विश्वस्य सृष्ट्यादि कारणाय विश्वस्योपादान कारणत्वात् तदन्तरात्मतया पालकत्त्वाञ्च तद्रूपायेत्यर्थः। कारणत्वमन्तरात्मत्वञ्च समानाधिकृतौ निबन्धन मिति भावः। निर्विकारस्य मम कथं विश्वकारणत्वम्? अत आह - स्वैरं यथा तथा गृहीताः उरुशक्तेः विविधविचित्रपरिणामशक्तेः मायया गुणाः सत्त्वरजस्तमांसि येन। स्वैरमित्यनेन जीवस्येव न गुणवश्यतेत्युक्तम्। गृहीतेत्यादिना प्रकृतिपुरुषशरीरकस्य तव विश्वकारणत्वं न स्वरूपेणेत्यत स्तेन निर्विकारत्वमेवेति सूचितम्। कारणत्वोपयुक्तं सार्वज्ञ्य सर्वशक्तित्वादि कल्याणगुणयोगमाह - भूम्न इति। कल्याणगुणैर्भूम्ने महते। यद्वा - स्वैरं गृहीतेति प्रकृतिवैशिष्ट्यमुक्तम्। भूम्ने इत्यनेन पुरुषवैशिष्ट्यमुच्यते। भूमा व्यापकः जीवेष्वप्यन्तरात्मतया व्यापी तस्मा इत्यर्थः। एवं प्रकृतिपुरुष वैशिष्ट्येऽपि तद्गत दोषास्पर्श माह - स्वस्थायेति। स्वरूपेण गुणैश्च यथावत्स्थिताय, नत्वन्यथाभाव मापद्यमानाय, तत्र हेतुं वदन् विशिनष्टि - शश्वादिति। शश्वत् सदा उपबृंहितमाविर्भूतं, पूर्ण कल्याणगुणपरिपूर्ण मपरिच्छिन्नानन्दात्मकं यत् स्वरूपं तस्य बोधेन याथात्म्यदर्शनेन व्यापादितं निरस्तम् आत्मतमः आत्मनां जीवानामाच्छादकं तमोऽज्ञानं येन तस्मै। जीवानां स्वपरयाथात्म्याज्ञानाभावप्रयुक्ताज्ञानेन स्वभावान्यथात्वम्, अचेतनस्यतु परिणामस्वभावत्वात्

1. A,B,T add पुनः 2. A,B,T अपा" 3. W Omits किञ्च 4- -4. W Omits

स्वरूपान्यथात्वम्। परमात्मनस्तु तव नित्याऽसङ्कुचितापरिच्छिन्न ज्ञानानन्द स्वरूपयाथात्म्यानुभवेन तदुभयं दूरतो निरस्तमिति भावः।।९।।

अस्मदीयमनोरथपूरणमीषत्करमेव त्वयेति कैमुत्यन्[1]यायेनाऽऽह - **आयुरिति।** हे अनन्त! तुष्टात्प्रसन्नात्त्वत्तो नृणामायुरादय एव सुलभा भवन्ति, किमुत शत्रु विजयादिसम्पत्तिस्सुलभा[2] भवतीत्यर्थः। तत्र आयुः परं ब्रह्मायुरप्यतुल्यं, निरुपमं वपुः शरीरं बलपराक्रमसौन्दर्यादियुक्तं, शरीरमिति भावः। अभीष्टलक्ष्मीः भोग्यभोगोपकरणादिसम्पत् द्यौश्च भूश्च रसातलश्च द्योभूरसाः, द्यौरिति पृथक्पाटे भूश्च रसाश्च बिलस्वर्गा इति विग्रहः। सकला योगगुणा अणिमादयः त्रिवर्गो धर्मार्थकामाः केवलं निस्संशयं ज्ञानम्।।१०।।

हे राजन्! इत्थमदित्या संस्तुतो भगवान् पुष्करेक्षणः सर्वभूतानां क्षेत्रज्ञः क्षेत्रान्तर्भूतमनोवृत्तिज्ञः जीवशरीरको वा इति वक्ष्यमाणप्रकारेण उवाच। हेति हर्षे विस्मये वा, हे भारत!।।११।।

[3]उक्तिमेवाऽऽह - [4]**देवमातरित्यादिना**[4] [5]नवाभिः। स्वस्य क्षेत्रज्ञत्वमेव दर्शयन्निव अदिते हार्द माविष्कर्तुं प्रतिजानीते - देवमातरित्यर्धेन। हे देवमातः! भवत्या चिरकाङ्क्षितं[6] तत् मे मया विज्ञात मेव। किन्तदित्यत्र तदाविष्करोति यदिति सार्धैस्त्रिभिः। सपत्नै दैत्यैः हृता श्रीर्येषां स्वस्थानाच्च्यावितानां विवासितानां स्वपुत्राणां सम्बन्धि यदैश्वर्यं तत्त्वया चिरकाङ्क्षितं तन्मया ज्ञातमित्यन्वयः।।१२।।

किञ्च तान्सपत्नान् दुष्टो मदो येषां तानसुरर्षभान् युद्धे विनिर्जित्य प्रतिलब्धो जयः श्रीश्च यैस्तैः पुत्रैः सह उपासितुम् एकत्र स्थातुमिच्छसि।।१३।।

इन्द्रो ज्येष्ठो येषां तैः स्वतनयैः युधि हतानां शत्रूणां स्त्रियो भर्तृसमीपम् आसाद्य रुदन्तीः दुःखिताश्च द्रष्टुमिच्छसि।।१४।।

प्रत्याहृतं प्रत्यानीतं यशः श्रीश्च यै स्तान् सुसमृद्धान् नाकपृष्टं स्वर्गमधिष्ठाय, क्रीडतः आत्मजान् द्रष्टु मिच्छसीत्येतत्सर्वं त्वत्कांक्षितमित्यर्थः।।१५।।

एवं तदभिप्रेतमाविष्कृत्य तत्र यत् - 'तान्विनिर्जित्य समरे' इत्यभिप्रेतं तदधुना मयापि कर्तुं न शक्यम् इति वदन्समरादन्य एव उपायश्चिन्तनीय इत्याह - **प्राय** इति द्वाभ्याम्। हे देवि! अधुना ते दैत्याः प्रायशः यद्यप्यवारणीया अजेया इत्येव मे मतिः अवारणीया इत्यहम् अभ्यवश्यामीत्यर्थः। कुतः? यद्यस्मात् ते दैत्या

---

1. W 'नयेन 2. W "भेती" 3. A,T उक्त 4- -4 A,B,T Omit 5 W. Omits नवभि 6. W "तं मया

अधुना अनुकूल ईश्वरः कालरूपो येषां तैः विप्रैर्गुप्ताः। अतो अस्मदादिभिः तेषु कृतो विक्रमः पराक्रमः सुखं न दास्यति सुखहेतु र्न भविष्यति।।१६।।

[1] **विज०** विश्वाय विश्वनाम्ने विश्वस्य भवनस्थितिसंहारा यस्मात्सः तथा तस्मै, स्वैरं स्वेच्छया गुणाः सत्त्वादयः व्यापादितात्मतमसे विनाशिताज्ञानाय।।९।।

परमायुर्द्विपरार्द्धावसानलक्षणं च यज्ञ तदादयो नृणां तुष्टा त्वत्तो भवन्ति यत्तस्मात उपसन्नजनाधिनाशः किं, शरणागतजनमनोदुःखनाशो भवतीति किं वक्तव्यं, योगगुणोऽणिमादिः।।१०,११।।

भवत्या सपत्नैः स्वर्गात् बाधितानां उद्घाटितानाम् हृतश्रीणाम्, आकृष्टसम्पदां पुत्राणामर्थे यच्चिरं कांक्षितं तन्मया विज्ञातमित्यन्वयः।।१२।।

किन्तदिति तत्राह - **ताञ्चिनिर्जित्येति**। उपासितुं, मामिति शेषः।।१३।।

इदञ्चाकाङ्क्षितमित्याह - **इन्द्रेति**। इन्द्रः ज्येष्ठो येषां ते तथा तैः।।१४,१५।।

नैतत् क्षिप्रसाध्यमित्याह - **प्राय इति**। कुतोत्राह - यत्ते इति। अनुकूलैः ईश्वरैः[2] विप्रैः गुप्ता रक्षिता इति यत्तस्मात् तत्र तेषु।।१६।।

**[3]तथाप्युपायो मम देवि! चिन्त्यः सन्तोषितस्य व्रतचर्यया ते।**
**ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात्।।१७।।**

**त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः।**
**स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्तास्मि[4] मारीचतपस्यधिष्ठितः[5]।।१८।।**

**उपधाव[6] पतिं भद्रे! प्रजापतिमकल्मषम्।**
**[7-]मां च भावयती पत्यावेवं[-7] रूपमवस्थितम्।।१९।।**

**नैतत् परस्मात् आख्येयं[8] देवगुह्यं कथञ्चन।**
**सर्वं सम्पद्यते[9] देवि! देवगुह्यं[10] सुसंवृतम्[11]।।२०।।**

**श्रीशुक उवाच**

**एतावदुक्त्वा भगवान् तत्रैवाऽन्तरधीयत।**
**अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः।।२१।।**

1. M Omits विश्वाय 2. M,Ma °रविप्रैः 3. A,B,G,J,T अ° 4. M,Ma पातास्मि 5. A,B,G,J,T °धिष्ठितः 6. M,Ma उपा° 7- -7. M,Ma मां च भावयतेऽपत्यमेवं; H,V मां च भावयती पत्या देव°; W धारयिष्यसि मां पत्या देवं 8. A,B,G,J,T पृष्टयापि 9. W °त्स्यते 10. M,Ma °गुह्यात् 11. M,Ma °तात्

**उपाधावत् पतिं भक्त्या परया कृतकृत्यवत्।**
**स वै समाधियोगेन कश्यपस्तदबुध्यत।।२२।।**

**प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः।**
**सोऽदित्यां वीर्य माधत्त तपसा चिरसम्भृतम्[1]।।**
**समाहितमना राजन् दारुण्यग्निं यथाऽनिलः।।२३।।**

**[2]अदितेर्धिष्ठितं गर्भं[2] भगवन्तं सनातनम्।**
**हिरण्यगर्भो विज्ञाय समीडे [3]ह्यनामभिः।।२४।।**

**श्रीध० तथेति।** मम मया चिन्त्य एव। तत्र हेतुः - सन्तोषितस्येत्यादि। श्रद्धानुरूपमिच्छानुसारेण फलहेतुत्वात्।।१७।।

**त्वयेति।** मारीचस्य तपसि [4]अवस्थितस्सन्[4] गोप्तास्मि पालयिष्यामि।।१८।।

**उपधावेति।** अतः पतिमुपधाव भजस्व।।१९।।

**नेति।** देवानां गुह्यं रहस्यं सर्वं सुसंवृतं सुगुप्तं सत् सम्पद्यते सिध्यति।।२०।।

**एतावदिति।** प्रभोर्हरेरात्मनि जन्म लब्ध्वा।।२१,२२।।

**प्रविष्टमिति।** अवितथमीक्षणं दृष्टिर्यस्य सः। अनिलो यथा सर्वत्र समोऽपि दारुणि संघर्षेण वनदाहकमग्निमाधत्ते एवं स्वयं पुत्रेषु [5]सर्वेषु समोऽपि दैत्यक्षप[6]णार्थं वीर्यमाधत्तेत्यर्थः।।२३।।

**अदितेरिति।** [7]अदित्याः गर्भमाधिष्टितम्[7] अधिष्ठाय स्थितम्। [8]सन्धिरार्षः[8]। समीडे तुष्टाव [9]इत्यर्थः।।२४।।

**वीर०** यद्यप्येवमद्यापि हे देवि! तव व्रतचर्यया तोषितस्य मे मया कश्चिदुपायश्चिन्तनीय एव, कुतः? यतो मदाराधनमन्यथागन्तुं विफलीभवितुं नार्हति, तत्कुतः? मदाराधनस्य कर्तुः श्रद्धानुसारमिच्छानुसारेण फलहेतुकत्वात्, फलहेतुकृत्त्वादिति पाठे फलहेतुं करोतीति फलहेतुकृत् तस्य भावः तत्त्वं, तस्मादादिकारणत्वादित्यर्थः।।१७।।

चिन्त्यमुपायं दर्शयति - **त्वयेति।** पुत्ररक्षणाय त्वया पयोव्रतेनाहम् [10]अनुगुणं यथार्थं सम्यगर्चितः स्तुतश्चातोऽहं मारीचतपस्यवस्थितः कश्यपतपःफल [11]प्रदानेऽवस्थितः स्वांशेन तव पुत्रत्वम् उपेत्य तव सुतान्

---

1. M,Ma सञ्चितम् 2- -2. H,V अदित्याधिष्ठितं गर्भं, M,Ma अदित्यां निहितं गर्भं; W अदित्या निहितं गर्भं 3. A,B,G,J,M,Ma,T गुह्य° 4- -4. A,B,J अधिष्ठायस्थितस्सन् 5. B,H,J,V Omit सर्वेषु 6. A,B,J °णं 7- -7. A,B,J धिष्ठितम् 8- -8. A,B,J Omit 9. H,V Omit इत्यर्थः 10. W. Omits अनुगुणं 11. W Omits प्र

गोप्तास्मि गोपायिष्यामि। स्वान्स्वेनेति पाठे स्वेनाजहत्स्वभावस्वरूपेणाहं तव पुत्रत्वमुपेत्य स्वान् त्वत्सम्बन्धिनः पुत्रान् गाप्तास्मीत्यर्थः।।१८।।

अतो हे भद्रे। पतिमकल्मषं प्रजापतिं कश्यपमुपधाव, अनुवर्तस्व, पत्या[1] भर्त्रा निमित्तेन मां गर्भे धारयिष्यसि, कथम्भूतं रूपम्? वामन[2]रूपमवस्थितं स्वसङ्कल्पेनाददानं देवं स्वतेजसा[3] देदीप्यमानम्।।१९।।

अन्येन पृष्टयापि त्वयैतन्मदुक्तं कथञ्चिदपि नान्यस्मै कथनीयं, हे देवि! देवरहस्यं सर्वं गुप्तं, सदेव सम्पत्स्यते फलदं भविष्यति।।२०।।

एतावदभिधाय तत्रैव भगवानन्तर्दधे अथादितिः स्वस्यां भगवतोऽवतारं दुर्लभं प्राप्य कृतार्थेव श्रद्धायुक्तया भक्त्या, परयेति पाठे अनन्यया पतिमन्ववर्तत। तदनुवर्तनं स्वस्मिन् प्रविष्टं हरेरंशश्च सः[4] कश्यपः[5] समाधियोगेन योगदृष्ट्या अन्वबुध्यत वि[6]ज्ञातवान् यतोऽयमवितथेक्षणः अवितथमीक्षणं दृष्टिर्यस्य सः।।२१,२२।।

ततः सः कश्यपः तपसा हेतुना चिरं सम्भृतं धृतं वीर्यं तस्याम् आदित्यामाधत्त निहितवान् कश्यपं प्रविष्टस्य भगवतो येन केनपि रूपेण अदित्युदरप्रवेश व्याजमात्र कथनमिदं न तु जीवस्येव वीर्यसंश्लेषकथन परमित्यवगन्तव्यम्। कथमाधत्तेत्याह - हे राजन्! सर्वत्र समोपि वायुर्दारुणि सङ्घर्षणेन यथा वनदाहकमाग्निमाधत्ते, एवं स्वयं पुत्रेषु समोऽपि दैत्यक्षपणं वीर्यमाधत्तेत्यर्थः।।२३।।

ततोऽदितेर्गर्भे[7] निष्ठितं प्रविष्टं सनातनं भगवन्तं ज्ञात्वा हिरण्यगर्भः च[8]तुर्मुखः भगवदसाधारणगुण प्रतिपादके[9] र्नामभिः समीडे समीपे तुष्टाव इ[10]त्यर्थः।।२४।।

**विज०** तर्ह्युपायाभावदुपरम एव श्रेयानिति तत्राह - **अथेति**। मम सकाशान्मम व्रतचर्यया वा श्रद्धानुरूपमिति क्रियाविशेषणं, ममार्चनमन्यथा फलराहित्येन गन्तुं नार्हति। यथा श्रद्धा तथा फलहेतुकत्वात् पुरुषार्थलक्षणफलस्य निमित्तत्वात्, कप्रत्ययः स्वार्थमतिसाधयति।।१७,१८।।

[11]उपाधाव उपास्व अपत्यम् अपत्यत्वेन।।१९।।

परस्मै शत्रवे।।२०-२२।।

किमवबुद्धमिति तत्राह - **प्रविष्टमिति**।।२३,२४।।

---

1. W. Omits पत्या 2. A,B,T 'नं रू' 3. W 'सामीप्य' 4. A,B,T Omit सः 5. W का° 6. A,B,T Omit वि 7. A,B,T अपि 8. W. ब्रह्मा 9. A,B,T 'दनैः 10. A,B,T Omit इत्यर्थः। 11. A,B उपधाव

**ब्रह्मोवाच**

**जयोरुगाय भगवन्! उरुक्रम!नमोस्तु ते।**
**[1]नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः।।२५।।**

**[2-]नमस्ते पृश्निगर्भाय[-2] वेदगर्भाय वेधसे।**
**[3]त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे।।२६।।**

**त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः।**
**कालो भवानाक्षिपतीश विश्वं स्रोतो [4]यथाऽन्तः पतितं गभीरम्।।२७।।**

**त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीना[5]मपि [6]सम्भविष्णुः।**
**दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु।।२८।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे सप्तदशोध्यायः।।१७।।

**श्रीध० नम** इति। अदितेरेव पूर्वस्मिन् जन्मनि पृश्निरिति नाम तस्या गर्भाय अर्भकाय।[7] वेदा गर्भे यस्य। यद्वा वेदानां गर्भाय वेदेषु प्रकाशमानायेत्यर्थः। त्रयो लोका नाभौ यस्य स त्रिनाभः तस्मै। त्रयाणां लोकानां पृष्ठे उपरि स्थिताय। शिपि शब्देन पशवो जीवाः तेष्वन्तर्यामितया प्रविष्टाय। " यज्ञो वै त्रिष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति " ( तैत्ति.सं. 1-5-6 ) इति श्रुतेः। यद्वा शिपयो रश्मयस्तैर्वेष्टितायेत्यर्थः। तथापि विष्णवे व्यापिने।।२५,२६।।

**त्वमिति**। अन्तः पतितं तृणादि यथा गभीरं स्रोत आक्षिपत्याकर्षति तथा कालात्मा भवान् विश्व[8]माक्षिपति [9]आकर्षति।।२७।।

**त्वं वा** इति। [10]प्रजानां प्रजापतीनां च त्वमेव [11]सम्भविष्णुः उत्पादनशीलोऽसि। अयं भावः न ह्येवम्भूतस्य तव जन्मादिसम्भवः किन्तु देवानां [12-]प्रजापतीनां प्रजानां च[-12] परमाश्रयत्वेन तत्कार्यसाधनाय अवतारोऽयम् अतः तान्स्वर्गच्युतान् पुनः स्वर्गे स्थापयेति।।२८।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तदशोऽध्यायः।।१७।।

---

1- -1. H,V Omits 2. M,Ma पृश्निगर्भाय 3. M,Ma त्रिगुणाय; W. त्रिणाभाय 4. M,Ma यथाऽम्भः 5. A,B,G,J,M,Ma,T "मसि 6. M,Ma सम्प्रविष्टः 7. A adds तत्रापि 8 H,V Omit आक्षिपति 9. A,B,J Omit आकर्षति 10. A,B,J Omit प्रजानां 11. H,V सम्भविष्णुः 12- -12. H,V Omit

**वीर०** [1]गुणनामभिः हिरण्यगर्भकृतां [2]स्तुतिमेवाह - [3]जयेति यावदध्यायसमाप्ति[3]। हे [4]भगवन्! [5]षाड्गुण्यपूर्ण! हे उरुक्रम! उरवः क्रमाः पादविन्यासाः करिष्यमाणाः यस्य तथाभूत इत्यर्थः। जय सर्वोत्कृष्टतां प्राप्नुहि ते तुभ्यं नमोस्तु ब्रह्मकुले साधवो ब्रह्मण्यास्तेषां देवाय तस्मै देवायेति वा, त्रिगुणाय सृष्ट्याद्युपयुक्त रज आदि गुणत्रयनियन्त्रे [6]इत्यर्थः।।२५।।

अदितिरेव [7]पूर्वस्मिन् जन्मनि पृश्निरिति नाम, तस्या गर्भाय, वेदो गर्भे यस्य वेदानां गर्भाये[8]ति वा। वेधसे विधात्रे। त्रयो लोका नाभ्यां यस्य तस्मै, त्रयाणां लोकानां पृष्ठे उपरि परमव्योम्नि स्थिताय। शिपयो जीवास्तेष्वन्तर्यामितया प्रविष्टाय। " यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति " (तैत्ति.सं.1-5-6) इति श्रुतेः। यद्वा शिपयो रश्मयः तैः वेष्टितायेत्यर्थः। विष्णवे व्यापिने।।२६।।

भुवनस्य विश्वस्य त्वमेवादिमध्यान्तकारणभूतः यमपरिमितशक्तिं परमपुरुषमाहुः। " परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च " ( श्वेता.उ.6-8 ) इत्यादयो वेदान्ताः। स त्वमेव कालशरीरको भवानेव विश्वमाक्षिपति प्रवर्तयति, यथान्तःपतितं तृणादिकं स्रोतःप्रवाहः आक्षिपति तद्वत्।।२७।।

प्रजानामस्मदादीनां प्रजापतीनां च त्वमेव सम्भविष्णुः उत्पादनशीलोसि। अयं भावः - न ह्येवम्भूतस्य तव जीवस्येव कर्मणा जन्मादिसम्भवः। किन्तु देवानां परमाश्रयत्वेन तत्कार्यसाधनायावतारोऽयम्। अतस्तान् स्वर्गच्युतान् [9]पुनः स्वर्गे स्थापये[10]ति आश्रयत्वे दृष्टान्तः। अप्सु मज्जतः पुंसो नौर्यथा तद्वत् सुराणामाश्रयभूत इत्यर्थः।।२८।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तदशोऽध्यायः।।१७।।

**विज०** पृश्न्यां गर्भो यस्य स तथा तस्मै वेदगर्भाय सद्यो जन्म शक्तये त्रीणि पृष्टानि वैकुण्ठादीनि यस्य स तथा तस्मै।।२५,२६।।

गभीरं स्रोतो नदी आक्षिपति तीरं प्रति नयति।।२७,२८।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीविजयध्वजतिर्थविरचितायां पदरत्नावल्यां
टीकायां सप्तदशोऽध्यायः।।१७।।

---

1. A,B,T गुह्य" 2. A,B,T "तिमाह 3- -3. जयेत्यादिना यावत्समाप्ति 4. A,B,T Omit भगवन्। 5. W Omits षाड्गुण्यपूर्ण। 6. W Omits इत्यर्थः। 7. A,B,T पूर्वज" 8. W Omits इति 9. W Omits पुन. 10. W Omits इति

ooo0ooo

# अष्टादशोऽध्यायः

श्रीशुक उवाच

इत्थं विरिञ्चस्तुतकर्मवीर्यः[1] प्रादुर्बभूवामृतभूरदित्याम्।
चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः।।१।।

श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान्।
श्रीवत्सवक्षा वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणहार[2]नूपुरः।।२।।

मधुव्रतव्रातविघुष्टया स्वया विराजितः[3] श्रीवनमालया हरिः।
प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन् कण्ठनिविष्टकौस्तुभः।।३।।

दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः
द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः संजहृषुर्नगाश्च।।४।।

श्रोणायां[4] भाद्रद्वादश्यां मुहूर्तेऽभिजिति प्रभुः।
सर्वे[5] नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम्।।५।।

द्वादश्यां सवितातिष्ठन्मध्यंदिनगतो[6]ऽहनि।
विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः।।६।।

शङ्खदुन्दुभयो नेदुः मृदङ्ग पणवानक
चित्रवादित्र तूर्याणां निर्घोषस्तुमुलोऽभवत्।।७।।

प्रीताश्चाप्सरसोऽनृत्यन्गान्धर्वप्रवरा[8] जगुः।
तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

ततस्त्वष्टादशे भूत्वा वामनः सत्कृतोऽखिलैः।[9] बलेर्यज्ञं गतस्तेन[-9] चोक्तो[10] वृणु वरानिति[-10]।।

**इत्थमिति।** इत्थं विरिञ्चेन स्तुतं कर्म देवकार्यलक्षणं वीर्यं च प्रभावो यस्य स हरिरदित्यां प्रादुर्बभूवेति त्रयाणामन्वयः। अमृतभूर्मृत्युजन्मशून्यः शङ्खगदाब्जचक्राण्यस्य सन्तीति तथा। अंशे आदित्वेन

1. M,Ma "ञ्चि" 2. A,B,G,J,M,Ma,T चार 3 M,Ma "त श्रीवं " 4. A,B,G,J,M,Ma,T श्रवण 5. W सर्वं 6. A,B,G,J,M,Ma,T "तो नप! 7.M,Ma भेयोम्" 8. M,Ma पतय:9- -9.A,B,J यज्ञं गततत" 10- -10.A,B,J सत्कृत्योक्तो वरान्, वृणु

मत्वर्थीयोऽच् प्रत्ययः। अविसर्गपाठे स चासौ पिशङ्गवासाश्च।।१।।

**श्यामेति**। [1-]श्यामावदातः श्यामेषु प्रवरः[-1]। झषराजो मकरस्तदाकारयोः कुण्डलयोस्त्विषा उल्लसन्ती श्रीर्वदनाम्बुजे यस्य। श्रीवक्षो वक्षसि यस्य। वलयैरङ्गदैश्च सहोल्लसन्ति किरीटादीनि यस्य।।२।।

**मधुव्रतेति**। श्रीमत्या वनमालया विराजितः। वेश्मगतं तमः।।३।।

**दिश इति**। अग्निजिह्वा देवाः। नगाः पर्वताः।।४।।

तत्प्रादुर्भावसमयमाह - **श्रोणायामिति**। भाद्रपदशुक्लद्वादशी श्रवणद्वादशीति प्रसिद्धा तस्याम्। तत्रापि श्रोणायां श्रवणस्थे चन्द्र इत्यर्थः। तत्रापि श्रवणस्य प्रथमांशेऽभिजिति नक्षत्रे तच्च श्रुत्या दर्शितम्। "अभिजिन्नाम नक्षत्र मुपरिष्टादाषाढानामधस्ताच्छ्रोणायाः" इति। एवं विशिष्टे मुहूर्ते [2]सुसमये प्रभुः प्रादुर्बभूवेत्यर्थः। किञ्च नक्षत्रण्यान्यश्विन्यदीनि ताराशब्देन [3]ताराः ग्रहाः गुरुशुक्रादयस्ते आद्या येषां ते सूर्यादयोऽपि सर्वे तस्य जन्मदक्षि[4]णमुदारं चक्रुः। जन्ममुहूर्ते गुणा बहवो बभूवुरित्यर्थः।।५।।

विशेषान्तरमाह - **द्वादश्यामिति**। यस्यां द्वादश्यां हरेर्जन्म तत्तस्यामहन्येव विदुः। [5]तस्य मध्यन्दिन गतः सविताऽतिष्ठत्। [6-]अनेन अभिजिन्मुहूर्ते जन्म उक्तं[-6] सा च द्वादशी विजया नाम प्रोक्तेत्यन्वयः।।६।।

**शङ्खेति**। शङ्खादयो [7]येषामन्येषां च चित्रतूर्याणां निर्घोषोऽभवत्।।७।।

**प्रीता इति**। देवा मनव इत्यादीनां कुसुमैः समवाकिरन्निति तृतीयेनान्वयः।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं ब्रह्मणा समीडितो भगवानवततारेत्याह मुनिः - **इत्थमिति**। इत्थं विरिञ्चेन स्तुतं कर्म देवकार्य लक्षणं वीर्यम् उरुक्रमत्वादिप्रभावश्च यस्य सोऽमृतभूः कर्मायत्तमरणोत्पत्तिरहितः मोक्षप्रदो वा भगवान् अदित्यामाविर्बभूव, कथम्भूतः? चत्वारो भुजा यस्य शङ्खादयो अस्य सन्तीति तथा अर्श आदित्वान्मत्वर्थीयोऽच्, पिशङ्गे वाससी यस्य नलिनवत् सुन्दरे आयते चेक्षणे नेत्रे यस्य।।१।।

श्यामश्चासाववदातो निर्मलः झषराजो मकरस्तदाकारयोः कुण्डलयोः त्विषा उल्लसन्ती श्रीर्वदनाम्बुजे यस्य श्रीवत्सो वक्षसि यस्य वलयैरङ्गदैश्च सहोल्लसन्ति किरीटादीनि यस्य।।२।।

---

1- -1. B,H,J,V Omit 2. B,H,J,V Omit सुसमये 3. A,B,J Omit ताराः 4 H,V "ण्ा" 5. A,B,J तदा च 6- -6 B,H,J,V Omit 7. A,B,J ये तेषां"

मधुव्रतानां भृङ्गानां समूहेन विघुष्टया स्वयाऽसाधारणया श्रीमत्या वनमालया विराजितः विभुः सर्वज्ञः प्रजापतेः कश्यपस्य वेश्मगतं तमः स्वकान्त्या विनाशयन्नपनुदन् कण्ठे निविष्टः धृतः कौस्तभो यस्य सः, आविर्बभूवेति पूर्वेणान्वयः।।२।।

तदा दिशः सलिलानि जनानामन्तःकरणानि च प्रसेदुः प्रसन्ना बभूवुः, प्रजाः प्रहृष्टाः ऋतवः प्रावृडादयः गुणान्विताः स्वस्वगुणयुक्ता बभूवुः तथा द्युप्रभृतयो, नगाः पर्वताश्च यथानुरूपं प्रसेदुः सञ्जहृषुः हर्षयुक्ताश्च बभूवुः। तत्र अग्निजिह्वा देवाः अग्नेर्जिह्वा शिखा वा।।४।।

प्रादुर्भावकालमाह - **श्रोणायामिति।** श्रवणद्वादशी भाद्रपदशुक्लद्वादशीति प्रसिद्धा तस्यामपि श्रोणायां श्रवणर्क्षस्थे सति चन्द इत्यर्थः। तत्रापि श्रवण[1]स्य प्रथमांशे अभिजिन्नामके मुहूर्ते मा[2]ध्यन्दिने। तच्च श्रुत्या दर्शितम् "अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामधस्ताच्छ्रोणायाः" इति। एवं विशिष्टे मुहूर्ते भगवान् प्रादुर्बूभूवेति पूर्वेणान्वयः। किञ्च नक्षत्राण्यश्विन्यादीनि, ताराः गुरुशुक्रादयः, आदिशब्देन चन्द्रसूर्यादयः ते सर्वे तस्य भगवतो जन्म दक्षिणमुदारं चक्रुः।।५।।

द्वादश्यां तस्यां तिथौ अहनि सुर्यो मध्यन्दिनगतो बभूव सा च द्वादशी विजयेति प्रसि[3]द्धाभूत्, का? यस्यां द्वादश्यो हरेर्जन्म विदु[4]रिति।।६।।

तदा शङ्खादयो मृदङ्गादयश्च नेदुः दध्वनुः तथा विचित्रवादित्रादीनां तुमुलो निर्घोषश्च अभवत्।।७।।

अप्सरसः प्रीता ननृतुः गन्धर्वश्रेष्ठाः जगुः, मुनिप्रभृतयो यथायोग्यं तुष्टुवुः जगुर्ननृतुश्च प्रशशंसुः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अमृतभूः मुक्ताश्रयो विष्णुः।।१।।

झषराजो मत्स्यश्रेष्ठः मकरः तदाकारकुण्डलत्विषा।।२।।

वेश्मतमः गुहान्धकारः।।३।।

सलिलाशयाः ह्रदाः अग्निजिह्वा देवाः।।४।।

श्रोणायां श्रावणे मासि अभिजिति मध्यन्दिने।।५।।

श्रवणद्वादश्यामतिष्ठत्तदा सा द्वादशी विजया नाम अनेन संज्ञान्तरं विधीयते।।६।।

शङ्खादयो, नेदुरिति शेषः।।७,८।।

1. A,B,T "ण प्र" 2. A,B,T म" 3. W Omits अभूत 4 Omits इति।

**सिद्धविद्याधरगणाः सकिम्पुरुषकिन्नराः।**
**चारणा यक्षरक्षांसि सुपर्ण[1]भुजगोत्तमाः।।९।।**

**गायन्तो[2]ऽतिप्रशंसन्तो नृत्यन्तो विबुधा[3]नुगाः।**
**अदित्या आश्रमपदं कुसुमैः समवाकिरन्।।१०।।**

**दृष्ट्वाऽदितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता।**
**गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः।।११**

**यत् तद्वपुर्भाति विभूषणायुधै रव्यक्तचिद्व्यक्तमधारयद्धरिः।**
**बभूव तेनैव स वामनो वटुः संपश्यतोर्दिव्यगतिर्यथा नटः।।१२।।**

**तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः।**
**कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम्।।१३।।**

**तस्योपनीयमानस्य सावित्रीं सविताब्रवीत्।**
**बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपो ददौ[4]।।१४।।**

**ददौ कृष्णाजिनं भूमिः दण्डं सोमो वनस्पतिः।**
**कौपीनाच्छादनं माता द्यौश्छत्रं जगतः[5] पतेः।।१५।।**

**कमण्डलुं वेदगर्भः कुशान्सप्तर्षयो ददुः।**
**अक्षमालां महाराज सरस्वत्यव्य[6]यात्मनः।।१६।।**

**श्रीध०** विस्मयान्तरमाह - **यत्तदिति**। यत्तद्वपुर्हरिरधारयत् प्रकटितवांस्तेनैव वपुषा मातापित्रोः सम्पश्यतोरेव वामनो वटुर्बभूव। दिव्यगतिरद्भुतचेष्टितः। स्वयं कथम्भूतः? अव्यक्तचिद्रूपः कथमधारयत् - भातिर्दीप्तिर्विभूषणानि च आयुधानि च तैर्व्यक्तं यथा भवति तथा।।९-१२।।

**तमिति**। कर्माणि जातकर्मादीनि।।१३,१४।।

**ददाविति**। वनस्पतिः वनानां पतिः सोमः।।१५,१६।।

**वीर०** अदित्या आश्रमपदं कुसुमैः अवाकिरंश्च।।९,१०।।

---

1. A,B,G,J,T °पर्णा भु° 2. H,M,Ma,V °तोऽभिप्रशंसन्तो: W °तः प्रशसंसुस्तं 3. M,Ma °धा:नरा: 4. A,B,G,J,T °अपोऽददात् 5. H,V ०ती पते।, W °ती पतेः। 6. M,Ma °क्ष°

तं परमपुरुषं निजगर्भसम्भूतं दृष्ट्वा अदितिः विस्मिता सती नितरां मुदमवाप तथा प्रजापतिः कश्यपश्च निजयोगमायया सहजशक्तियोगयुक्तसङ्कल्परूपज्ञानेन यद्वा, योग एव माया तया आश्चर्यरूपशक्ति योगेनेत्यर्थः। गृहीतो देहो दिव्यविग्रहो येन तं दृष्ट्वा प्रजापतिः ब्रह्मा जयेत्याह।।११।।

विस्मयान्तरमाह - **यत्तदिति**। विभूषणैः कौस्तुभादिभिः आयुधैः, शङ्खचक्रादिभिश्च युक्तमिति शेषः। एवम्भूतं यद्वपुः स्वासाधारणत्वेन प्रकाशते नित्यविभूत्यादौ तद्वपुरादौ अव्यक्तचिद्रूपः प्रकृतिपुरुषशरीरको भगवान् अधारयत् आविश्चकार। ततः तेनैव वपुषा पित्रोः सम्पश्यतोः सतोः स भगवान् दिव्यगतिरनितरसाधारणचेष्टो वामनो वटुर्बभूव। वटुसन्निवेशात् वामनशब्दवाच्यो बभूव। यथा नटः पूर्वपूर्ववेषं विहाय वेषान्तरमुपादत्ते तद्वदित्यर्थः[1]।।१२।।

तं भगवन्तं वामनशब्दवाच्यं वटुसन्निवेशं दृष्ट्वा महर्षयः संहृष्टास्सन्तः प्रजापतिं कश्यपं पुरस्कृत्य कर्माणि जातकर्मादीनि कारयामासुः।।१३।।

तस्य वामनस्योपनीयमानस्य उपनयनेन संस्क्रियमाणस्य सविता सावित्री मुपदिष्टवान् बृहस्पत्यादयो ब्रह्मसूत्रादीनि ददुः।।१४।।

तत्र [2-]भूमिर्भूम्यधिष्ठात्री देवता[-2] वनस्पतिः [3-]वनानां पतिः[-3] सोमश्चन्द्रः द्यौस्तदभिमानिनी देवता।।१५।।

हे महाराज! अव्ययात्मनः अपक्षयादिरहितस्वरूपस्य सरस्वती अक्षमालामदात्।।१६।।

**विज०** सुपर्णः[4] भुजगोत्तमश्च।।९-११।।

यस्त्वभावतो व्यक्तवदव्यक्तमेव तद्वपुरनुकम्पया विभूषणायुधैः व्यक्तं भाति हरिः तादृशं वपुरधारयत् यद्वपुरव्यक्तवद्भाति हरिः तद्वपुः विभूषणायुधैः व्यक्तमधारयदिति वा। स एव दिव्यगतिरनभिभूतज्ञानो हरिः तेन विभूषणायुधविशिष्टेन रूपेण पित्रोः सम्पश्यतोः सतोर्वामनो वटुः बभूवेत्यन्वयः। मूलरूपावताररूपयोरभेद ज्ञापनायैव मुच्यते यथा नट इति तदभिप्रायेण।।१२-१६।।

**तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात्।**
**भिक्षां भगवती साक्षात् उमादादम्बिका सती।।१७।।**

**स ब्रह्म वर्चसेनैवं[5] सभां सम्भावितो वटुः।**
**ब्रह्मर्षिगणसङ्घुष्टा[6]मत्यरोचत[7] मारिषः।।१८।।**

1. W Omits इत्यर्थः 2- -2. W Omits 3- -3. A.B.T Omit 4 A,B 'र्णा 5 M,Ma 'व 6. A,B,G,J,M,Ma,T 'ञ्ज' 7. M,Ma 'मन्व'

**समिद्धमाहितं वह्निं कृत्वा परि समूहनम्।**
**परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजाः[1]।।१९।।**

**श्रुत्वाऽश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः।**
**जगाम तत्राऽखिलसारसम्भृतो भारेण गां सन्नमयन् पदे पदे।।२०।।**

**तं नर्मदायास्तट उत्तरे बलेः य[2] ऋत्विजस्ते भृगुवत्स[3]संज्ञिके।**
**प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षताऽऽरादुदितं यथा रविम्।।२१।।**

**तं[4] ऋत्विजो यजमानः सदस्याः हत[5]त्विषो वामनतेजसा नृप।।**
**सूर्यः कि[6]लायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः।।२२।।**

**इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्य[7]माणो भगवान्स वामनः।**
**[8]सदण्डछत्रं सजलं कमण्डलुं विवेश बिभ्रद्धयमेधवाटम्।।२३।।**

**मौञ्ज्या मेखलया वीतमुपवीताजिनोत्तरम्।**
**जटिलं वामनं विप्रं मायामाणवकं हरिम्।।२४।।**

**प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः।**
**प्रत्यगृह्णन्समुत्थाय संक्षिप्तास्तस्य तेजसा।।२५।।**

**श्रीध तस्मा** इति। पात्रिकां भिक्षापात्रीम्।।१७।।

**स** इति। स एवं सम्भवितो मारिषः श्रेष्ठो वटुः ब्रह्मवर्चसेन ब्रह्मर्षिगण सं[9]जुष्टां तां सभामतिक्रम्यारोचत।।१८,१९।।

यदर्थं वटुर्बभूव तदाह [10-]**श्रुत्वेति** यावदध्यायपरिसमाप्ति[-10]। यजन्तं भृगूणां भृगुभिः उपकल्पितैः प्रवर्तितैः। अखिलेन सारेण बलेन सम्भृतः सम्पूर्णः।।२०।।

**तमिति**। नर्मदाया उत्तरे तटे भृगुवत्स[11]संज्ञके क्षेत्रे क्रतूत्तमं प्रवर्तयन्तो ये बलेः ऋत्विजो भृगवस्ते[12] तं व्यचक्षताऽपश्यन्। आरात्समीप एव उदितं रविमिव।।२१।।

**तमिति।** तम् [13-]आगच्छन्तम्[-13] ऋत्विगादयः सूर्यः किलेत्येवमादि, व्यतर्कयन्निति शेषः।।२२।।

1. A,B,G,J,M,Ma,T द्विज. 2. A,B,G,J,T ये ऋत्विजः; M,Ma "य ऋर्त्विज ० 3. A,B,G,J,T कच्छ संज्ञके 4. A,B,G,J,T त ऋत्विज , M,Ma तत्रर्त्विजो 5. M,Ma हत" 6. M,Ma किमाऽऽयात्यथ 7. W "तर्कमानेषु 8. A,B,G,J,T छत्रं सदण्डं 9. A,B,J सङ्घु" 10- -10. A,B,J "त्यादियावत्समाप्ति। 11. A,B,J कच्छ 12. H,V Omit ते 13- -13. A,B,J Omit

**इत्थमिति।** हयमेधवाटमश्वमेधमण्डपं विवेश।।२३।।

**मौञ्ज्येति।** उपवीताजिनमुपवीतवद्धृतमजिनमेव उत्तरमुत्तरीयं यस्य तम्।।२४।।

**प्रविष्टमिति।** संक्षिप्ता अभिभूताः सन्तः।।२५।।

**वीर०** इत्थमुपनीयमानाय वामनाय यक्षराट् वैश्रवणः पात्रिकां भिक्षापात्रमदात्। भवानी भिक्षामदात्।।१७।।

स एवं सम्भावितो मारिषः श्रेष्ठः पूज्यः वटुः ब्रह्मवर्चसेन युक्तः[1] तां[2] ब्रह्मर्षिगणेन[3] सङ्घुष्टां सभामर्यतिक्रम्य[4] सभाया निर्गतो व्यरोचतेत्यर्थः। यद्वा रुचिरत्र व्यर्थगर्भः सभामतीव व्यरोचयदित्यर्थः।।१८।।

विभुः कश्यपः समिद्धं ज्वलन्तं श्रेष्ठं[5] तं उपनयनाग्निं[6] परिसमूहनम् ऋजुं कृत्वा परिस्तीर्य सम्यगभ्यर्च्य च समिद्भिः हुतवान्।।१९।।

ततो भगवान् वामनो भृगूणां तैः उपकल्पितैः कारितैः अश्वमेधैः यजन्तमूर्जितं बलिं[7] वैरोचनिं श्रुत्वा तत्र जगाम। कथम्भूतः? अखिलेन सारेण बलेन सम्भृतः पूर्णः अत एव भारेण गां भूमिं प्रतिपदं सन्नमयन् नम्राङ्कुर्वन्[8]।।२०।।

नर्मदाया उत्तरे तटे भृगुवत्साख्ये[9] क्षेत्रे क्रतूत्तमं प्रवर्तयन्तो ते[10] बलेः, ऋत्विजो भृगवस्तं वामनं दूरात् व्यचक्षतापश्यन्। कथम्भूतम्? उदितं सूर्यमिव स्थितम् आरात् समीप एव उदितं रविमिवेति वा।।२२।।

हे नृप! वामनस्य तेजसा अपहततेजस्काः यजमानो बलिः सभ्या ऋत्विजश्च भृग्वादयः[11] सूर्यः किलाऽऽयातीत्येवमादि, व्यतर्कयन्निति शेषः। किं वा विभावसुरग्निरायातीति[12]। उत क्रतोर्दिदृक्षया सनत्कुमार आयातीति[13]।।२२।।

इतीत्थं सशिष्येषु स यजमानेषु भृगुषु वितर्कमाणेषु सत्सु[14] स भगवान् वामनः सदण्डं छत्रं जलपूर्णं कमण्डलुञ्च बिभ्रद्धयमेध[15]वाटमश्वमेध वाटिकां[-15] विवेश।।२३।।

मौञ्ज्या मेखलया वीतं[16] बद्धकटिमुपरिधृतोपवीताजिनमुपवीतोपरिधृतमजिनमुत्तरीयं[17] यस्येति वा। जटिलं सशिखं वामनाख्यमात्मीयसङ्कल्पोपात्तमाणवकसन्निवेशं हरिं [18-]प्रपन्नार्तिहरं वामनं दृष्ट्वेत्युत्तरेणान्वयः[-18]।।२४।।

1. W Omits युक्तः 2 A,B,T Omit ना 3 W "णम" 4 A,B,T "त्य" 5. W Omits श्रेष्ठ तं 6. A,B,T "याग्नि 7. A,B,T Omit बलि 8. A,B,T निम्रा 9 A,B,T कच्छा 10 A,B,T Omit ते 11 W Omits भृग्वादयः 12. W Omits इति 13. W. Omits इति 14 A,B,T Omit सत्सु 15- -15 W वाटिकां 16. W Omits वीतं 17. W आव" 18- -18. W Omits

एतं[1] यज्ञवाटे[2] प्रविष्टं दृष्ट्वा सयजमाना भृगवोऽग्निभिः सह वामनस्य तेजसा संक्षिप्ताः सङ्कुचित प्रकाशास्सन्तः समुत्थाय प्रत्यगृह्णन् सत्कृतवन्तः।।२५।।

**विज०** पात्रिकाम् भिक्षापात्रम् उमा उमेति सस्य विशेषव्यावृत्त्यर्थम् अम्बिकेति।।१७।।

सभां प्राप्यात्यरोचत सभामरोचयदिति वा। मारिषः पूज्यः।।१८-१९।।

भृगूणामुपकल्पितैः अश्वमेधैः यजमानं यष्टारं बलिं श्रुत्वा तत्र जगाम अखिलसारैर्गुणैः सम्भृतः पूर्णः भारेण गरिम्णा।।२०।।

भृगुवत्सेति संज्ञा यस्य स तथा तस्मिन्।।२१-२२।।

वाटं शालाम्।।२३।।

आवीतं परिवृतम्।।२४,२५।।

**यजमानः प्रमुदितो दर्शनीयं मनोरमम्।**
**रूपानुरूपावयवं तस्मा आसनमाहरत्।।२६।।**

**स्वगतेनाभिवन्द्याथ[3] पादौ भगवतो बलिः।**
**अवनिज्यार्चयामास मुक्तसङ्गं[4] मनोरमम्।।२७।।**

**तत्पादशौचं कलिकल्मषापहं[5] स धर्मविन्मूर्ध्न्यदधात् सुमङ्गलम्।**
**यद् देवदेवो गिरिशश्चन्द्रमौलिः दधार मूर्ध्ना परया च भक्त्या।।२८।।**

**बलिरुवाच**

**स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम[6] ते।**
**ब्रह्मर्षीणां तपस्साक्षात् मन्ये त्वाऽऽर्यवपुर्धरम्।।२९।।**

**अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम्।**
**अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान्।।३०।।**

**अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज! त्वच्चरणावनेजनैः।**
**हतांहसो वार्भिरियं च भूरभूत्[7] तथा पुनीता तनुभिः पदैस्तव।।३१।।**

---

1. W Omits एतं 2. A,B,T Omit यज्ञवाटे 3. A,B,G,J,M,Ma,T "न" 4. A,B,G,J,T,W "सङ्गम" 5. A,B,G,J,T जन 6. H,V "णि 7. A,B,G,J,T भूरहोतथा; M,Ma भूमिरद्धा

**[1-]यद्यद्भवान् वाञ्छति[-1] तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये।**
**गां काञ्चनं गुणवद्[2]धाऽथधाम मृष्टं तथान्[3]नमथवा विप्र कन्याम्।**
**ग्रामान् सम्मृद्धांस्तुरगान् गजान् वा [4-]रथोत्तमानर्हतम प्रतीच्छ मे[-4]।।३२।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यांअष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे अष्टादशोऽध्याय:।।१८।।

**श्रीध० यजमान** इति। रूपस्यानुरूपा अवयवा यस्य तम्, दृष्ट्वेति शेष:।।२६,२७।।

**तदिति।** चन्द्रमौलिश्चेत्यन्वय:। अप्यर्थे चकार:। चन्द्रमौलिरपि गङ्गारूपं **यन्मूर्ध्नि[5] दधारेत्यर्थ:**।।२८।।

**स्वागतमिति।** हे आर्य! त्वा त्वां साक्षात्प्रत्यक्षं ब्रह्मर्षीणां तप एव मन्ये। कथम्भूतं तप:? वपुर्धरं मूर्तिधारि।।२९,३०।।

**अद्येति।** [6-]हे द्विजात्मज[-6]! त्वच्चरणावने जनैर्वार्भिर्हतमंहो यस्य तस्य मे। पुनीता पवित्रीकृता।।३१।।

**यदिति।** मे मत्त: प्रतीच्छ गृहाण। हे अर्हत्तम[7]! पूज्यतम।।३२।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टादशोऽध्याय:।।१८।।

**वीर० तदेवाह - यजमान** इति। रूपस्यानुरूपा अवयवा यस्य तमत एव मनोरमं हृद्यमत एव दर्शनीयं वामनं, दृष्ट्वेति शेष:। यजमानो बलिस्तस्मै आसनं समर्पितवान्।।२६।।

अथ बलिस्तं स्वागतेनाभिनन्द्य स्वागतं पृष्ट्वा तस्य भगवत: पादादवनिज्य प्रक्षाल्य मुक्तसङ्गानां योगिनां मनस्सु क्रीडन्तं भगवन्तं तमर्चयामास।।२७।।

तत: स्वधर्मवित् स्वानुरूपधर्मज्ञो बलि: कलिकल्मषस्यापहन्तृ अत एव सुमङ्गलं तस्य भगवत: पादयो: सम्बन्धि शौचं पवित्रं प्रक्षालनोदकं मूर्ध्न्यदधात्। पादशौचं विशिनष्टि देवदेवो ब्रह्मा, चन्द्रमौलि: गिरिशो रुद्रश्च परया [8]उत्कृष्टया भक्त्या मूर्ध्ना यत् पादशौचं गङ्गारूपं दधार तत: तमुवाचेति शेष:।।२८।।

**तदेवाह - स्वागतमिति** [9-]सार्द्धैश्चतुर्भि[-9]:। हे ब्रह्मन्! ते त्वया स्वागतं, तुभ्यं नम:। ते किङ्करवाम?

1- -1. A,B,G,J,T,M,Ma,T यद् यद् वटो वांछसि 2 A,B,G,J,T "वद्धाम 3 A,B,G,J,T "न्नपयमुत. M,Ma "न्नमुत वा
4- -4. A,B,G,J,M,Ma,T रथांस्तथार्हत्तम सम्प्रतीच्छ 5 A B.J "र्ध्नि 6- -6 A,B,J Omit , 7 A,B,J "त्त" 8 W Omits उत्कृष्टया
9- -9. W Omits

किङ्करा वयमित्यर्थः, आर्यवपुर्धरं श्रेष्ठवपुर्धरं[1] त्वा[2] त्वां[3] साक्षात् प्रत्यक्षं ब्रह्मर्षीणां तपो मन्ये तप एव मूर्तीभूतं[4] मन्ये।।२९।।

यत् यस्मात् भवानस्माकं गृहानागतस्ततोऽस्माकं पितरस्तृप्ता बभूवुः, कुलं च पवित्रमभूत्, अयं क्रतुश्च यथावदनुष्ठितो बभूव।।३०।।

अद्य मे अग्नयश्च यथाविधि सुहुता सुष्ठुहुता बभूवुः। हे द्विजात्मज! त्वच्चरणावने जनैर्वार्भिः जलैर्हतमंहः पापं यस्य तस्य मम सम्बन्धिनी इयं भूर्भूमि[5]स्तनुभिस्तनुभिरस्मच्छरीरैस्सह तव[6] पदैः पादविन्यासैः[7] पुनीता पवित्रीकृताऽऽसीत्।।३१।।

हे विप्रसुत! त्वामर्थिनं याचितारमनुतर्कये आलक्षये अतो हे वटो! वामन[8]! यद्यद्वाञ्छसि कामयसे तत्तन्मे मत्तः प्रतीच्छ प्रतिगृहाण[9] यद्वाञ्छसीति यच्छब्दाभिप्रेतानेव कांश्चिद्दर्शयति - **गामिति**। गां[10] भूमिं धेनुं वा[11], गुणवद्भोग्यभोगोपकरणादिसमृद्धिमत् धाम गृहं तथा, मृष्टमन्नं वा हे विप्र अथो[12] वा अथवा हे अर्हत्तम[13]! गवादीनन्यद्वा[14] यत्किञ्चित् कामयसे तन्मत्तः प्रतिगृहाण।।३२।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टादशोऽध्यायः।।१८।।

**विज०** तनुभिः रेणुभिः कोमलै र्वा।।२६-३१।।

प्रतीच्छ गृहाण।।३२।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीविजयध्वजतीर्थरचितायां पदरत्नावल्यां
टीकायां अष्टादशोऽध्यायः।।१८।।

1. A,B,T दहधरं 2. W Omits त्वा 3. A,B,T Omit त्वा 4. A,B,T "र्ति 5. W Omits भूः 6. A,B,T Omit तव 7. A,B,T Omit वि 8. W Omits वामन 9 A,B,T add इत्यर्थः। यद्यदिति। 10. A,B,T Omit गा 11. A,B,T Omit वा 12 A,B,T उत वा 13. A "त्तम 14. A,B,T "दिभ्योऽन्य"

oooOooo

# एकोनविंशोऽध्यायः

श्रीशुक उवाच

इति वैरोचनेर्वाक्यं धर्मयुक्तं स[1]सूनृतम्।
निशम्य भगवान्प्रीतः प्रतिनन्द्येदमब्रवीत्।।१।।

श्रीभगवानुवाच

वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम्।
यस्य प्रमाणं भृगवः साम्पराये पितामहः कुलवृद्धः प्रशान्तः।।२।।

न ह्येतस्मिन्कुले कश्चिन्निस्सत्त्वः कृपणः पुमान्।
प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये।।३।।

न सन्ति तीर्थे युधि [2]चार्थिनार्थिताः पराङ्मुखा ये त्वमनस्विनो [3]नृप!।
युष्मत्कुले यद्यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे।।४।।

यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम्।
प्रतिवीरं दिग्विजये नाविन्दत गदायुधः।।५।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनविंशे तु हरिणा याचिते च पदत्रये। प्रतिश्रुते च बलिना जानन्भृगुरवारयत्।। यद्वा -

स्तुत्वार्थितो भगवता स बलिस्त्रिपदीमिताम्। वामनायोनविंशे क्ष्मां दास्यन् शुक्रेण वार्यते।।

दातुः स्तुतिः स्वयं तुष्टिरित्यादि प्रस्तुतोचितं। वक्तव्यमिति भिक्षु[4]श्च शिक्षयन्नाह वामनः [5]वच इत्यारभ्य

षोडशभिः[-5] श्लोकैः - **वच** इति। हे जनदेव! साम्पराये पारलौकिके धर्मे पितामहश्च प्रह्लादः प्रमाणं,

[6]दृष्टान्तरूपेण वर्तत इत्यर्थः[-6]।।१,२।।

**न हीति** । निस्सत्त्वस्य लक्षणं यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्ता। कृपणस्य

लक्षणं प्रथमं प्रतिश्रुत्य यो प[7]श्चात् न दातेति।।३।।

**नेति**। तीर्थे दानावसरे। यद्यस्मिन्युष्मत्कुले।।४।।

[8]**यत** इति। यतो यस्मिञ्जातः[-8]।।५।।

1. H,V,W सु" 2. A,B,G,J,,T चा" 3. A,B,G,J,T नृपा. 4. A,B,J "स्तु 5- -5. A,B,G,J वचस्तवैतदिति षोडशभिः।
6- -6. A,B,J Omit 7. A,B,J चा 8- -8. H,V Omit

## श्रीवीराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं याच्ञायै चोदितो भगवान् स्व[1]पदत्रयपरिमितां भूमिं यियाचिषुस्तदप्रत्याख्यानाय प्रतिश्रुतं दृढीकर्तुं बलिं प्रशंसन्नाहेत्याह, मुनिः। इत्युक्तविधं धर्मयुक्तं सूनृतं सत्यं मधुरं च बलेर्वचः आ[2]कर्ण्य प्रीतस्तं प्रतिनन्द्येदं वक्ष्यमाणमुवाच।।१।।

तदेवाह - **वच** इत्यादिना यावदर्थपरिग्रह इत्यन्तेन। हे जनदेव! तव वचः सूनृतत्वादि गु[3]णयुक्तं युक्तं च एतत्कुतः, यतः यस्य भगवतः साम्पराये परलोकसाधनधर्मनिर्णये तव पितामहः कुलवृद्धः प्रशान्तश्च प्रह्लाद एव प्रमाणं, तद्वृत्त्यैव तत्सन्तानरूपाणां भवतामपि वृत्तिः तादृश्येवेत्यनुमीयत इति भावः।।२।।

तदेव विशदयति **न हीति**। अस्मिंस्त्वदीये कुले कश्चिदपि पुमान् निस्सत्त्वः कृपणश्च न हि, न जातः न जनिष्यते नाऽधुना वर्तते च। तत्र निस्सत्त्वस्य लक्षणं यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्तेति, कृपणस्य लक्षणं प्रथमं प्रतिश्रुत्य यो वाऽदातेति।।३।।

हे नृप! तीर्थे दानावसरे सति अर्थिना याचकेन अर्थिता याचितास्तथा युद्धे पराङ्मुखा ये चामनस्विनोऽस्वतन्त्राश्च अस्मिन् कुले त्रिपुरुषं न सन्त्येव, तीर्थे याच्ञां अ[4]न्तरेणापि ददातीत्यर्थः। यत् यस्मिन् कुले खे आकाशे चन्द्र इवाऽमलेन यशसा प्रह्लादः उद्भाति नितरां चकास्ति।।४।।

युधि पराङ्मुखा न सन्तीत्येतदुपपादयति **यत** इत्यादिना। यतो यस्मिन् कुले जातो हिरण्याक्षः एकोऽसहायो दिग्विजये निमित्ते इमां कृत्स्नां महीं चरन् गदैवायुधं यस्य तादृशः प्रतिपक्षं वीरं न लेभे।।५।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अनेनाध्यायद्वयेन बलेर्भक्तिविशेषं दर्शयति - **इतीति**। इतिशब्देन हरेर्माहात्म्यसूचकं वाक्यमुक्तमिति सूचयति।।१।।

जनदेव! नृप! साम्पराये पितामहः प्रमाणम्।।२।।

सर्वे स्तुति प्रसन्ना एव अभीष्टं कुर्वन्तीत्यतस्तत्सिद्धिप्रकारं वचनं वक्ति **न हीति**। यः पुमानिति प्रत्येकमभिसम्बद्ध्यते। प्रत्याख्याता नास्तीति वक्ता अदाता।।३।।

तीर्थे पात्रे अर्थिना धनं युद्धं चार्थयमानेन पराङ्मुखा अमनस्विन इत्येतद्विशेषणद्वयं यथायोग्यं

1. W Omits स्व 2. A,B,T श्रुत्वा 3. A,B,T Omit गुण 4. A,B,T विनापि

सम्बन्धितव्यम्, अमनस्विनो हीनमनस्का यद्यस्मात् उद्भाति उत्कृष्टतया द्योतते। उडुपश्चन्द्रः ।।४,५।।

यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम्[1]।
नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन्।।६।।

निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा।
हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः।।७।।

[2]तमापतन्तमालोक्य शूलपाणिं कृतान्तवत्।
चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः।।८।।

यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव।
अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः।।९।।

एवं स निश्चित्य रिपोः शरीर[3] आधावतो निर्विविशेऽसुरेन्द्र।
श्वासानिलान्तर्हितसूक्ष्मदेहः [4]तद्घ्राणरन्ध्रेण विविग्नचेताः।।१०।।

**श्रीध० यमिति।** क्ष्मोद्धारे भूम्या उद्धरणे।।६-८।।

**यत इति।** पराग्दृशो बहिर्दृष्टेः।।९।।

**एवमिति।** अतो हृदये स्थितं मां न ज्ञास्यतीत्येवं [5]सः निश्चित्य श्वासानिलेऽन्तर्हितः सूक्ष्मो देहो यस्य। विविग्नम् अतिकम्पितं चेतो यस्य। अकम्पितचित्त इति वास्तवोऽर्थः।।१०।।

**वीर०** क्ष्मोद्धारे भूम्यु[6]द्धरणे। विष्णुर्वराहरूपो यं हिरण्याक्षं कृच्छ्रेण अतिप्रयासेन विनिर्जित्य हत्वा जयिनमात्मानममन्यत। अतस्तस्य हिरण्याक्षस्य वीर्यं भूरि अनवधिकं इत्यनुस्मर अभिजानीहि।।६।।

तथा तस्य हिरण्याक्षस्य वधं श्रुत्वा तस्य भ्राता हिरण्यकशिपुः पुरा क्रुद्धो भ्रातुर्हन्तारं विष्णुं हन्तुं हरेर्निलयं स्थानं जगाम।।७।।

शूलपाणिं मृत्युवदापतन्तं तं हिरण्यकशिपुं विज्ञाय, दुर्जयं ज्ञात्वा मायाविनां श्रेष्ठः तत्तत्कालप्रयोजना[7]ऽभिज्ञो विष्णुः इत्थं चिन्तयामास।।८।।

---

1. H,V "तः; M,Ma "ते 2. A,B,G,J,M,Ma,T तमायान्तं समा" 3. A,B,G,J,M,Ma,T "रमा" 4. A,B,G,J,T तत्प्राण"
5. A,B,J Omit सः 6. W "द्धारे 7. A,B,T "नकर्तव्याऽभि

तत्कृतां चिन्तामेव दर्शयति-यत्र यत्र अहं गमिष्यामि तत्र तत्र सर्वत्राऽसौ हिरण्यकशिपुः प्राणभृतां मृत्युरिवावतिष्ठतेऽतोऽधुना पराग्दृशः बहिर्दृश्यमानोऽहमस्य दैत्यस्य हृदयमेव प्रवेक्ष्यामि।।९।।

इतीत्थं स विष्णुः विनिश्चित्य, हे असुरेन्द्र! आधावतः तदर्थं तत्र सञ्चरतो रिपोः हिरण्यकशिपोः शरीरं निर्विविशे प्रविवेश। तत्रापि हृदये प्रविष्टं मा ज्ञास्यतीति, एवं निश्चित्य श्वासानिलेऽन्तर्हितः सूक्ष्मदेहो यस्य, तस्य घ्राणरन्ध्रेण विविग्नमतिकम्पितं चेतो यस्य, तादृशो बभूव। तत्रापि प्रविष्टं ज्ञास्यतीति विनिश्चित्य घ्राणरन्ध्रसञ्चारिश्वासवायुना[1] सह चञ्चलः तदविभक्तो बभूवेत्यर्थः।।१०।।

**विज०** कृच्छ्रेणेति मोहवचनं कृतः कृतिनस्तान् श्रयते यत्तेन पराक्रमेणेत्यर्थ इति वा, क्ष्मायाः भूमेः उद्धारे उद्धरणकाले कृच्छ्रेणागते प्राप्ते सति भूरि तस्य वीर्यं पराक्रममनुस्मरन्नपि आत्मानं जयिनं तदानीमेवात्मजयं न मेने, किन्तु नित्यजयिनं मेने इत्यर्थः। यद्वा क्ष्माया उद्धारो येन स तथा स विष्णुना परमपुरुषोयं विनिर्जित्य तत्स्वकीयं वीर्यं तद्भूर्यनन्तमनुस्मरन्नात्मानं जयिनं जयशीलोपेतं मेन इति।।६,७।।

मायाविनां ज्ञानिनां वरः मोक्षादिवरदाता।।८।।

पराग्दृशः बाह्यदृष्टेः "पराञ्चिखानि व्यवृणोत्" (कठ.उ.4-1) इति श्रुतेः। परं दूरमञ्चतीति पराग्दूरस्थं वस्तु पश्यति इति पराग्दृक् तस्य दूरस्थवस्तुदर्शिन इत्यर्थ इति वा।।९।।

तद्घ्राणरन्ध्रेण तस्य घ्राणद्वारेण।।१०।।

**स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद।**
**क्ष्मां द्यां[2] दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन्न ददर्श वीरः।।११।।**

**अपश्यन्निति होवाच मयान्विष्टमिदं जगत्।**
**भ्रातृहा मे गतो नूनं यतो नाऽवर्तते पुमान्।।१२।।**

**वैरानुबन्ध एतावानामृत्योरिह देहिनाम्।**
**अज्ञानप्रभवो मन्युरहम्मानोपबृंहितः।।१३।।**

**पिता प्रह्लादपुत्रस्ते तद्विद्वान्विष्णुतत्परः।[3]**
**स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात्स याचितः।।१४।।**

---

1. A,B,T श्वसने वा 2. W गां 3. A,B,G,J,M,Ma,T द्विजवत्सलः

**भवानाचरि[1]तान्धर्मानास्थितो गृहमेधिभिः।**
**ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः।।१५।।**

**श्रीध० स** इति। न ददर्श, अन्तःप्रविष्टत्वात्।।११।।

**अपश्यन्निति**। पुमान्यतः सकाशान्नावर्तते तद्ब्रह्मैव नूनं गतो नित्य[2]मुक्तित्वादिति वास्तवोऽर्थः।।१२।।

[3-]एवं मृत्युपर्यन्तमखण्डं विष्णौ वैरं यत्कृतवान्, तदुचितमेव तस्याप्रतिद्वन्द्वमहाबलपराक्रमस्य शूराहंमान विजृम्भितक्रोधानुबन्धस्य[-3] [4]अस्य कथं नामासौ शूरशिरोमणिर्जीवन्नेव कातरवद्वैरमुपेक्षितवानित्या[5]शयेनाऽऽह - **वैरानुबन्ध** इति। वैरानुबन्ध एतावान्[6]मृत्योर्भवति। देहिनां देहे निगूढाभिमानवतां शूराणां तथाऽहम्मानेनोपबृंहितो मन्युश्च भवत्येव। यतोऽज्ञानप्रभवः अज्ञाननिवृत्तेः प्राक् पौरुषत्यागो मान्द्यमेवेत्यर्थः।।१३।।

तदेवं पूर्वजान्स्तुत्वा तत्पितरं स्तौति - **पितेति**। द्विजवेषधारिणो [7-]मद्वैरिणो[-7] देवा एते न तु द्विजा इति तद्विद्वानपि स याचितस्सन् स्वीयमायुर्देवे[8-]भ्योऽपि वैरिभ्यो ददौ[-8]।।१४,१५।।

**वीर०** ततः स दैत्यस्तन्निलयं शून्यं परितोऽन्विष्य तमपश्यमानः कुपितो ननाद, जितं मयेति सिंहनादं कृतवान्, ततः पुनः क्ष्मां पृथिवीं गां दिवं दिशः खमन्तरिक्षं विवरमतलादिकं समुद्रांश्च विचिन्वन् वीरो दैत्यो विष्णुं न ददर्श।।११।।

अपश्यन्नित्थमुवाच तदेवाह - इदं कृत्स्नं जगत् मयान्विष्टमन्वेषितं मम भ्रातृहन्ता तु क्वापि न दृश्यते, स तु यतः [9]यं प्राप्य न पुनरावर्तते तत्र नूनं गतः। तस्याभिप्रायेण तु मृताऽभवदिति भावः।।१२।।

अधुना न मद्विषयवैरानुबन्ध तस्यास्तीत्याहेत्याह - **वैरानुबन्ध** इति। इह लोके देहिनां वैरानुबन्ध एतावानेव, कियान्? [10]यः आमृत्योः मरणपर्यन्तं इत्येतावानेव। कुतः? यतो मन्युः क्रोधोऽज्ञानप्रभवः देहविलक्षणात्मस्वरूपाज्ञानजः स देहात्माभिमानेषु उपबृंहितः प्रकटीकृतो भवति। देहे विनष्टे सति मन्युरपि प्रशाम्यतीति मृत्युपर्यन्त एव वैरानुबन्धस्ततः स उपेक्षणीय इति भावः।।१३।।

एवं पितामहप्रपितामहयोः तीर्थादौ अर्थितत्वापराङ्मुखत्वादि गुणयोगमभिधाय अथ पितुर्गुणानाह - **पितेति**। प्रह्लादस्य पुत्रस्तव पिता विरोचनस्तु, तद्विद्वान् पितृपितामहयोर्वृत्तिं विद्वांस्तद्वृत्त्यभिज्ञः, किं च

---

1. M,Ma "ता ध" 2. A,B,J "मुक्त" , B "मुक्त" 3- -3. B Omits 4. A,B,J Omit अस्य 5. A,B,J "शङ्कयाऽऽह" 6. A,B,J "न्ना" 7- -7. H,V Omit 8- -8. B,H,J,V "भ्यो ददौ 9. W Omits य 10 A,B,T यत·

द्विजवत्सलः द्विजरूपधारिषु देवेषु वत्सलः, अत एव द्विजलिङ्गेभ्यः द्विजवेषधारिभ्यो देवेभ्यः[1] याचकेभ्यः स्वकीयमायुः समाहितो ददौ, यद्वा द्विजरूपधारिणो देवा एते न तु द्विजा इति तद्विद्वानपि स याचितः सन् स्वीयमायुर्देवेभ्यो ददौ इत्यन्वयः ।।१४।।

[2]तदेवं पित्रादीन् स्तुत्वाऽथ तं प्रशंसति **भवानिति**। गृहमेधिभिः ब्राह्मणै भृगुप्रभृतिभिस्तथा पूर्वजैः विरोचनादिभिः विपुलकीर्तिभिः शूरैश्चाचरितानुष्ठितान् धर्मान् भवानास्थितः ।।१५।।

**विज०** निकेतं जगतामिति शेषः। तस्य हरेर्वैकुण्ठं परिमृश्येति वा ।।११।।

यतो गत स्ततः ।।१२।।

क्रोधहेतुको वैरानुबन्ध इत्याह - अज्ञानेति ।।१३।।

प्रह्लादस्य यः पुत्रः स तव पिता विरोचनः तान् द्विजरूपिणो देवान्विद्वान् द्विजानां लिङ्गं वेषो येषां ते, तथा तेभ्यो देवेभ्यः स्वमायुरदादित्यन्वयः ।।१४।।

किञ्च यद्ब्राह्मणैरनुष्ठितं तन्ममाभीष्टमिति प्रकटनाय भवानप्याचरतीत्याह - **भवानिति**। आचरिताऽनुष्ठाता अन्यै राजादिभिः ।।१५।।

**तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात्[3]।**
**पदानि त्रीणि दैत्येन्द्र सम्मितानि पदा मम ।।१६।।**

**[4]नान्यत्ते कामये राजन्वदान्याज्जगदीश्वरात्।**
**[5]नैनः प्राप्नोति वै विद्वान्यावदर्थप्रति[6]ग्रहः[7] ।।१७।। ***

**बलिरुवाच**

**अहो ब्राह्मणदायाद वाचस्ते[8] वृद्धसम्मताः।**
**त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ।।१८।।**

**मां वचोभिः समाराध्य लोकानामेकमीश्वरम्।**
**पदत्रयं वृणीते[9] योऽ[10-]बुद्धिमान्द्वीपदाशुषम्[-10] ।।१९।।**

---

1. A,T Omit देवभ्यः 2. A,B,T Omit तत् 3. M,Ma °भ! 4. M,Ma नान्यन्ते 5. H,V नैव 6. A,G,J,M,Ma,T प्रति 7. M,Ma °हात् *An additional half verse is found in H,V only. अधिकं योऽधिकाद्वेत स स्तेनो दण्डमर्हति। 8. M,Ma तेऽवृ° 9. H,V,W यो वृणीते 10- -10. H,V बुद्धिमान्द्विपदाशिषम्; M,Ma बुद्धिमानिवदाशुषम्; W बुद्धिमन्द्विपदाशुषम्

**न पुमान्मामनुव्रज्य[1] भूयो याचितुमर्हति।**
**तस्माद्वृत्तिकरीं भूमिं वटो कामं प्रतीच्छ मे।।२०।।**

**श्रीध० तस्मादिति।** मम पदा सम्मितानीति त्रिविक्रमपदाभिप्रायेण। न चानृतवादः, तत्रापि स्वपदत्वानपायात्[2]।।१६।।

**नान्यदिति।** यावदर्थमेव प्रतिग्रहो[3] यस्य सः।।१७।।

ईश्वरस्यापि याच्ञाप्रकारं चोक्त्वा बलेर्बन्धनप्रश्नोत्तरत्वेन तस्य गर्वातिरेकेण अधिक्षेपप्रकारमाह - **अहो** इति त्रिभिः। ते तव[4] वाचो वृद्धानां सम्मतास्त्वं तु बालो[5] बालिशमतिश्च बालिशानामज्ञानामिव मतिर्यस्य। अत एव स्वार्थं प्रति यथावदबुधः। वस्तुतस्तु बाल इवाबालिशमतिश्चेति पदच्छेदः[6]। स्वार्थं प्रत्यबुधः[7] भक्तानामेवार्थं बुध्यसे न स्वार्थम्। परिपूर्णस्य तव तद्व्यतिरेकेण स्वार्थाभावादित्यर्थः।।१८।।

अबुधत्वमेवाह - **मामिति।** दीपस्य दाशिषं दाश्वांसं[8] दातारम्। अबुद्धिमान् वस्तुतस्तु बुद्धिमानित्येव पदच्छेदः[9]।।१९।।

**नेति।** कामं यथेच्छं सम्यक् पादप्रसारणेनेत्यर्थः। अत एव तथा करिष्यति[10]।।२०।।

**वीर० तदेवं** प्रतिश्रुताऽप्रत्याख्यानाय पित्रादिभिः सह तं स्तुत्वाऽथ याचते - **तस्मादिति।** तस्मात्तवैताद्दशकुलप्रसूतत्वादुक्तगुणात् वरदश्रेष्ठा त्ते त्वत्तोऽहं ईषन्मही पृथ्वीं वृणे याचे। कियतीमित्यत्राह। पदानि त्रीणि त्रिपदपरिमितामित्यर्थः, कस्य त्रिपदपरिमितां इत्यत्राह - हे दैत्येन्द्र! मम पदा पादेन सम्मितानि परिच्छिन्नानि इति, इदं त्रिविक्रमपदाभिप्रायेण, न चायमनृतवादः, तत्रापि स्वपदत्वाऽनपायात्।।१६।।

एतदेव नान्यद् वृणे इत्याह - **नान्यदिति।** हे राजन्! जगदीश्वरादपि तत्रापि वदान्यादपि त्वत्त एतावदेव वृणे नान्यत् कामये। यावदर्थस्यैवापेक्षितार्थस्यैव उपयुक्तार्थस्यैव प्रतिग्रहो यस्य, वरिग्रह इति पाठेऽपि स एवार्थः, विद्वान् एनः पापं न प्राप्नोति अधिकार्थलिप्सुस्तु पापी भवतीति भावः।।१७।।

एवं याचितः तदभिप्रायानभिज्ञ आह - बलिः **अहो** इति त्रिभिः। हे ब्राह्मणदायाद! ब्राह्मणसुत! तव वाचस्तु वृद्धानां सम्मताः। अथापि त्वं बालः हेतुगर्भमिदम्। अत एव बालिशमतिः बालिशाना मज्ञानामिव मतिः यस्य सः, अत एव स्वार्थं प्रति यथावदबुधः।।१८।।

1. A,B,G,J,T °मुप 2. A,B,J °नपगमात् 3. B परि 4 B,H,J,V Omit तव 5 A Omits बालः 6. A,B,J Omit पद°
7. A,B,J add इति च 8. A,B,J Omit दाश्वांसं 9. A,B,J Omit पद 10. B adds इति

अबुधत्वमेवाह - **मामिति**। लोकानामेकमद्वितीयं ईश्वरं मां वचोभिः वृद्धसम्मतैराराध्य प्रसाद्य यो भवान् पदत्रयमत्यल्पस्त्रकीयपदत्रयपरिमितं भूभागं वृणीते, द्वीपस्य जम्ब्वादेर्दाशुषं दातारं माम्, अविद्वान् अतो बालिशमतिर्भवानित्यर्थः।।१९।।

मामुपव्रज्य मां याचित्वा पुमान् कश्चित् भूयोऽन्यं याचितुं नार्हति, तस्मात् हे वटो! कामं यथेच्छं वृत्तिकरीं विपुलां भूमिं मे मत्तः प्रतीच्छ प्रतिगृहाण।।२०।।

**विज०** यस्मात्त्वं पुण्यवतां कुले जातो धर्मकर्त्ता तस्मात्। पदानीति बहुवचनोक्त्या भीतिर्माभूदित्याह - **त्रीणीति**। तेषां च महत्त्वेन भयशङ्का, तदवस्थेति तत्राह, सम्मितानीति।।१६।।

इतोपि महत्तरं कामं वदस्व दास्यामीति तत्राह - **नेति**। वदान्याद्दानशीलात्। राजप्रतिग्रहात्तव दोषो न स्यात्किम्? नेत्याह - नेति। यावता प्रतिग्रहणे स्वप्रयोजनं सिद्ध्यति तावतः प्रतिग्रहात् आदानात् "अजीविष्यान्निमान्नखादन्" इति श्रुतेः। विद्वान् प्रतिग्रहदोषदहनपटुज्ञानवान्।।१७।।

अवृद्धसम्मताः कुतोऽत्राह - **त्वमिति**। बुद्धिवैशद्ये बाल्यत्वमप्रयोजकमत्राह -*बालिशेति। जडमतिः स्वप्रयोजनं ज्ञातुं न शक्यत इत्यर्थः।।१८।।

कथमेतदवगतमत्राह-**मां वचोभिरिति**। अबुद्धिमान् दाशुषं दानशीलं, बुद्धिमानिति व्यतिरेको वा।।१९।।

कुतो मामपहससीति तत्राह - **न पुमानिति**।।२०।।

**[1-]श्री भगवानुवाच[-1]**

**यावन्तो विषयाः [2]श्रेष्ठास्त्रिलोक्यामजितेन्द्रि[3]यम्।**
**न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप।।२१।।**

**त्रिभिः क्रमैरसन्तुष्टो द्वीपेनापि न पूर्यते।**
**नववर्ष समेतेन सप्तद्वीप[4]वरेच्छया।।२२।।**

**सप्तद्वीपाधिपतयो नृपा वैन्य[5]गयादयः।**
**अर्थैः कामैर्गता नान्तं तृष्णाया इति नश्श्रुतम्।।२३।।**

**यदृच्छयोपपन्नेन सन्तुष्टो वर्तते सुखम्।**
**नासन्तुष्टस्त्रिभिर्लोकै रजितात्मोपसादितैः।।२४।।**

---

1--1. H,V Omit 2. A,B,G,J,M,Ma,T प्रे" 3. W "यान् 4. M,Ma ध" 5. H.V सृगा", M,Ma गदा"

**पुंसोऽयं संसृतेर्हेतु रसन्तोषोऽर्थकामयोः।**
**यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः।।२५।।**

**श्रीध०** पुनरपि निस्पृहत्वमेवाविष्कुर्वन्नाह - **यावन्त** इत्यादिना[1] सप्तभिः।।२१।।

**त्रिभिरिति**। नववर्षसमेतेन द्वीपेनापि। सप्तानां द्वीपवराणामिच्छया।।२२।।

**सप्तेति**। तृष्णाया अन्तं न गता इत्यस्माभिः श्रुतम्।।२३।।

**यदृच्छयेति**। असन्तुष्टस्तु प्राप्तैस्त्रिभिर्लोकैरपि न सुखं वर्तते।।२४,२५।।

**वीर०** पुनर्याचिताधिकनिस्स्पृहत्वमेवाविष्कुर्वन्नाह वामनः[2] - **यावन्त** इति सप्तभिः। हे नृप! त्रिलोक्यां यावन्तो विषया देशास्ते सर्वेऽपि प्रतिगृह्यमाणाः सन्तोऽजितेन्द्रियान् पूरयितुं नालं, ऋद्धिमतः कर्तुं न शक्नुवन्ति।।२१।।

यदुक्तं द्वीपदाशुषमविद्वानित्यत्राह त्रिभिः, क्रमैः पादैः असन्तुष्टः पुमान्नवखण्डयुक्तेन जम्बूद्वीपेनापि न पूर्यते। अपूर्तौ हेतुमाह। सप्तद्वीपवरेच्छया सप्तानां द्वीपवराणामिच्छया हेतुना द्वीपेनापि न पूर्यते।।२२।।

तर्हि सप्तद्वीपां महीं दास्ये[3] प्रतीच्छेत्यत्राह - **सप्तेति**। वैन्यः पृथुः गयश्चादिः येषां ते नृपाः सप्तानां द्वीपानां मधिपतयोऽपि अर्थैः कामैश्च तृष्णाया अन्तं न गताः अर्थकामतृष्णाया अन्तमवधिं न प्राप्ताः इति नोऽस्माभिः श्रुतम् उत्तरोत्तरमसन्तुष्टस्यार्थकामतृष्णाया अनुवृत्तेरिति भावः।।२३।।

एवमसन्तुष्टस्य सुखं च नास्तीति वक्तुं तावत् सन्तुष्टस्य सुखमस्तीत्याह - **यदृच्छयेति**। दैवाल्लब्धेन सन्तुष्टस्तु सुखं [4]वर्तते सुखं[-4] यथा तथाऽऽस्ते अजितात्माऽजितेन्द्रिय अत एवोपसादितैः प्राप्तैस्त्रिभिर्लोकैः असन्तुष्टस्तु न सुखं वर्तते।।२४।।

सन्तोषासन्तोषौ न केवलं सुखदुःखमात्रहेतू अपि तु संसृतिर्मुक्तिहेतू[5] अपीत्याह **पुंस** इति। अर्थकामयोर्विषययो योऽसन्तोषः स पुंसः संसारस्य हेतुः यश्च दैवाल्लब्धेन सन्तोषः स मुक्तये स्मृतः हेतुः इत्यनुषङ्गः[6]।।२५।।

**विज०** युदुक्तं वृत्तिकरीं भूमिं प्रतिगृहाणेति तदजितेन्द्रियं प्रति व्यर्थमित्याशयेनाह - श्रीभगवानिति। अजितेन्द्रियमलम्बुद्धिरहितं पुरुषमिति शेषः।।२१।।

एतदेवोपपादयति - **त्रिभिरिति**। न नदीद्वीपोऽत्र कथ्यत इत्याह, नवेति, कुतोऽत्राह - सप्तेति।।२२।।

**नैतावतापि पूर्तिरित्याह - सप्तेति**। अन्तमवसानम् अर्थैः कामैः अर्थसम्पादितकामैर्वा।।२३।।

---

1. A,B,J Omit आदिना 2. W भगवान् 3 W Omits दास्ये 4- -4. A,B,J Omit 5 A,B,T मुक्त्या र्गो" 6 A,B,T इत्यर्थः

सन्तोषशब्दाभिप्रायं वदन्नलम्बुद्धिरेव सुखसाधनमित्याह - **यदृच्छयेति**। व्यतिरेकमाह नासन्तुष्ट इति। उपसादितैरवाप्तैः सुखं न वर्तत इति पूर्वेणान्वयः।।२४।।

इतोऽपि सन्तोष एवापाद्यः सुखहेतुत्वादन्यस्यानर्थहेतुत्वाच्चेत्याह - **पुंस** इति। अर्थकामयोरसन्तोषः।।२५।।

**यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते।**
**तत्प्रशाम्यत्यसन्तोषादम्भसेवाऽऽशुशुक्षणिः।।२६।।**

**तस्मात्त्रीणि पदान्येव वृणे त्वां[1] वरदर्षभ!।**
**एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम्।।२७।।**

**श्रीशुक उवाच**

**इत्युक्तः प्रहसन्नाह[2] वाञ्छितं[3] प्रतिगृह्यताम्।**
**वामनाय महीं दातुं जग्राह जलभाजनम्।।२८।।**

**विष्णवे क्ष्मां प्रदास्यन्तमुशना ह्यसुरेश्वरम्[4]।**
**जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां वरः।।२९।।**

**शुक्र[5] उवाच**

**एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः।**
**कश्यपाददितेर्जातो देवानां कार्यसाधकः।।३०।।**

**श्रीध० यदृच्छेति**। आशुशुक्षणिरग्निः।।२६।।

**तस्मादिति**। सिद्धोऽहं कृतार्थः एतावतैव सर्वस्वापहारसिद्धेरिति गूढोऽभिप्रायः। तदेवाहावित्तं हि यावत्प्रयोजनमेव सुखम्। अधिकस्य क्लेशावहत्वादित्यर्थः।।२७-३०।।

**वीर०** किञ्च, दैवाल्लब्धेन तुष्टस्य विप्रस्य तेजो वर्धते, असन्तोषात्तु तत्तेजः प्रशाम्यति नश्यति। यथा जलेन आशुशुक्षणिः अग्निः तद्वत्।।२६।।

तस्मात् सन्तोषस्यैव श्रेयस्करत्वात्। हे नृपोत्तम! त्रीण्येव पदानि त्वां वृणे याचे एतावतैवाहं सिद्धः कृतार्थः। वित्तं हि यावत्प्रयोजनमेव, सुखदं इति शेषः। अधिकं तु दुःखदमिति भावः।।२७।।

---

1 A,B,G,J,M,Ma,T त्वद्वरदर्षभात् 2. A,B,G,T M,Ma,T स ह" 3. A,B,G,J,T वाञ्छातः 4. A,B,G,J,M,Ma,T अ"
5. M,Ma उशना

इति इत्थमुक्तो बलिः प्रहसंस्तर्हि प्रतिगृह्यतामित्याह - एवमुक्त्वा वामनाय भूमिं दातुं जलभाजनं[1] गृहीतवान्।।२८।।

तदा वामनाय पृथिवीं दास्यन्तं दातुमुद्युक्तमसुरेश्वरं शिष्यं बलिं[2] विष्णोः चिकीर्षितं [3]कर्तुमिष्टं[-3] जानन् उशनाः शुक्रो विदां कालत्रयविदां श्रेष्ठः प्राह[4]।।२९।।

तदेवाऽऽह यावदध्याय समाप्ति - एष इति। हे वैरोचने! एष वामनः साक्षाद्भगवानव्ययो विष्णुरेव, देवानां कार्यसाधकः कार्यं साधितु मित्यर्थः। कश्यपात् प्रजापते रदितेरवतीर्णः[5] पदत्रयव्याजेन लोकत्रयं प्रतिगृह्य देवेभ्यो दातुमवतीर्णः इति भावः।।३०।।

**विज०** तेजो बलादिकम् "तेजो बले प्रभावे(च)ऽग्ने ज्योतिष्यर्चिषि रेतसि। नवनीतेऽनले धर्मे दाने हस्तिमदेऽपि च" ( वैज.को.6-3-14,15 ) इति। तत्तेजः आशुशुक्षणिः अग्निः "आशुशुक्षणिरर्केऽग्नौ (यज्वन्यप्यासु तीवलः)" (वैज.को.8-1-50) इति।।२६।।

यतः सन्तुष्टोऽहं तस्माद्यावत्प्रयोजनं वित्तं स्वीकुर्यादिति, शेषः।।२७-२८।।

उशना विदुषा गुरुणा शिष्याय हितोपदेशः कर्तव्य इति शिक्षयन्नाह - **विष्णव** इति।।२९-३०।।

**प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता।**
**न साधुमन्ये दैत्यानां महानुपगतोऽनयः।।३१।।**

**एष ते स्थानमैश्वर्यं श्रियं तेजो यशस्ततम्[6]।**
**दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः।।३२।।**

**त्रिभिः क्रमैरिमांल्लोकान्विश्वकायः क्रमिष्यति।**
**सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम्।।३३।।**

**क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः।**
**खं च कायेन महता तार्तीयस्य कुतो गतिः।।३४।।**

**निष्ठां ते[7] नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम्।**
**प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान्।।३५।।**

---

1. A,B,T पात्रं 2. W Omits बलिं 3- -3. W Omits 4. A,B,T उवाच 5. W Omits अदितेः 6. A,B,G,J,M,Ma,T यशश्रुतम्
7. M,Ma तं नरकं

**श्रीध० प्रतिश्रुतमिति।** अनयोऽन्याय:।।३१।।

अन्यायमेवाह - **एष** इति।।३२।।

ननु मया पदत्रयमेव प्रतिश्रुतं नाधिकं तत्राह - **त्रिभिरिति।** क्रमतामिति चेत्तत्राह- [1]सर्वस्वमिति[1]।।३३।।

तथापि प्रतिश्रुतं सम्पादनीयमेवेति[2] चेत्तत्राह **क्रमत** इति द्वाभ्याम्। एकेन पदा पादन्यासेन भूमिं क्रममाणस्येत्यर्थ:। तार्तीयस्य तृतीयपादन्यासस्य।।३४,३५।।

**वीर०** एवं विधाय तस्मै स्वानर्थ मजानता त्वया यत् प्रतिश्रुतं तत् साधु न मन्ये। कुत:? यतो दैत्यानां महाननयोऽन्याय उपगत: उपस्थित:।।३१।।

अन्यायमेवाह - **एष** इति। एष मायामाणवक: आत्मसङ्कल्पोपात्तमाणवक सन्निवेशो हरिर्वामनस्तव स्थानादिकं विपुलं यशश्च आच्छिद्य अपनीय इन्द्राय दास्यति।।३२।।

ननु मया पदत्रयमेव प्रतिश्रुतं नाधिकं तत्राह - **त्रिभिरिति।** विश्वकायो विश्वरूपो भूत्वेत्यर्थ:। त्रिभि: पादविन्यासै: इमांस्त्रीन् लोकान् क्रमिष्यते परिच्छिद्य ग्रहीष्यतीत्यर्थ:। क्रमतामिति चेत् तत्राह - सर्वस्वमिति। हे मूढ! सर्वस्वं विष्णवे वामनरूपायास्मै दत्वा कथं वर्तिष्यसे? तव स्थितिरपि दुर्लभेति भाव:।।३३।।

तथापि प्रतिश्रुतं सम्पादनीयमेवेत्यत्राह **क्रमत** इति द्वाभ्याम्। एकेन पदा पादविन्यासेन गां भूमिं द्वितीयेन दिवं, हे विभो! महता कायेन ख मन्तरिक्षं च क्रमत: क्रममाणस्य भगवत: तृतीयस्य[3] पादविन्यासस्य का गति:? तृतीयपादस्याऽस्पदाभावात्, तथापि प्रतिश्रुतं न सम्पादितमेव स्यादित्यर्थ:।।३४।।

अत एव प्रतिश्रुतमप्रदातु: तव नरके निष्ठां अवस्थितिं मन्ये, कुत:? यो भवान् प्रतिश्रुतस्य प्रतिश्रुतं पूरयितुमसमर्थ:।।३५।।

**विज०** बन्धनाद्यनर्थमजानता त्वया एतस्मै वामनाय प्रतिज्ञातं यत्तत्साधु न मन्य इत्यन्वय:। कुतोऽत्राहदैत्यानामिति। अनयो: दु:खहेतुरनीति:।।३१।।

तदुपपादयति - **एष** इति। विश्वकाय:।।३२,३३।।

त्रिपदक्रमणप्रकारं स्पष्टयति - **क्रमत** इति। तार्तीयस्य तृतीयपदस्य।।३४।।

---

1--1. A,B,T Omit 2. H,V 'मिति 3. A,B,T 'यपा'

प्रतिश्रुतमदातुः निष्ठान्तं प्रतिश्रुतदानपर्यन्तं नरकं दुःखं मन्ये नरकमेवोपपादयति - प्रतिश्रुतस्येति।।३५।।

न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते।
दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः।।३६।।

धर्माय यशसेऽर्थाय कामाय स्वजनाय च।
पञ्चधा विभजन्वित्तमिहामुत्र च मोदते।।३७।।

अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम।
सत्यमोमिति यत्प्रोक्तं यन्नेत्याहानृतं हि तत्।।३८।।

सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते।
वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः।।३९।।

तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात्।
एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः।।४०।।

**श्रीध०** तथापि सर्वस्वदानात्कीर्तिस्तावद्भविष्यतीति चेत्तत्राह - **न तद्दानमिति**। तपः चित्तैकाग्र्यम्। कर्म पूर्तम्, ननु तर्हि प्रतिश्रुत्य नेति कथमनृतं वाच्यं तत्राह - [5]दानमित्यादि[5] सार्धैः षड्भिः।।३६,३७।।

**अत्रापीति**। अत्रापि सत्यानृतव्यवस्थायाम् [6]बह्वृचै ऋग्वेदिभिः[6]। बह्वृचश्रुत्या हि प्रथमम् - "ओमिति सत्यं नेत्यनृतम्" इत्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिन्दाभ्यां सत्यं विहितमनृतं च निषिद्धम्। अनन्तरं च 'पराग्वा एतद्रिक्तमक्षरम्' इत्यादिना सत्ये दोषान् अनृते च गुणानुक्त्वा - "तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति" इत्युपसंहारेण वृत्तिसङ्कटादिष्वनृतमप्यनुज्ञातम्, तमिमं श्रुत्यर्थं दर्शयन्नाह - ओमित्यङ्गीकारेण यत्प्रोक्तं तत्सत्यम्। नेति यदाह तदेवानृतम् ।।३८।।

तत्तु सत्यमीषदनृतं विना न सिध्यतीत्याशयेनाह - **सत्यमिति**। सत्यं पुष्पफलं विद्याज्जानीयात्। आत्मवृक्षस्य देहरूपस्य वृक्षस्य। [7]कुतः। गीयते श्रुत्योच्यते इत्यर्थः। [8]आत्मवृक्षस्य जीवितः इति[8] पाठान्तरन्तु[9] सुगमम्। यद्यपि श्रुत्या - "वाचः सत्यं पुष्पफलं च" इत्युक्तम्। तथापि वाचो देहनिर्वाहाधीनत्वा-दात्मवृक्षस्येति प्रस्तुतानुसारेणोक्तम्। भवतु पुष्पफलस्थानीयं सत्यं, ततः किमत आह वृक्षे

1. M,Ma "कवृ" 2. M,Ma "ष्वासुर" 3.M,Ma जीवन 4 M,Ma नत्र 5- -5 A,B,J Omit 6- -6. B,H,J,V Omit
7. H,V Omit कुतः 8- -8. B,H,J,V Omit 9. H,V "र मु"

देहे अजीवति सति[1] तत् पुष्पफलं न स्यात्। 'सा न स्यात्' इति पाठे श्रुत्युक्ताया वाचः परामर्शः। अतः[2] देहश्चानृतेन रक्षणीय इत्याह - अनृतं त्वात्मनो देहस्य मूलम्।।३९।।

एतदेव दृष्टान्तेन स्पष्टयति - तदिति। तद्यथा वृक्ष उत्पाटितमूलः शुष्यत्यचिरादेवोद्वर्तते पतति च, एवं नष्टमनृतं यस्य स आत्मा देहः शुष्येत्। यद्यपि च श्रुत्या - "इदमेवानृतं[3] वदन्नात्मानमाविर्मूलं करोति" इत्येवं निन्दयाऽनृतं निषिद्धं, तथाप्युपसंहारानुसारेण तत्केवलानृतविषयमित्यभिप्रेत्यैवं व्याख्यातम्। 'दयेत्तत्वेतेन'[4] इति च तत्रैवोक्तेः[5]। तथा च श्रुतिः - " ओमिति सत्यं नेत्यनृतं तदेतत्पुष्पं फलं वाचो यत्सत्यं स हीश्वरो[6] यशस्वी कल्याणकीर्तिर्भविता पुष्पं हि फलं वाचः सत्यं वदन्त्येतन्मूलं[7] वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेद्दयेत्तत्वेतेन[8] " इति येनानेन[9] त्वनृतेन दयेत्[10] संकटेष्वात्मानं रक्षेदिति श्रुत्यर्थः।।४०।।

**वीर०** तथापि सर्वस्वदानात् कीर्तिः तावद्भविष्यतीत्यत्राह - **नेति**। येन दानेन वृत्तिर्जीविका विपद्यते विप्लुता भवति तद्दानं न प्रशंसन्ति आर्याः, कुतः? यतो लोके वृत्तिमतः जीविकावत एव[11] पुंसः सम्बन्धीन्येव दानादीनि धर्मादिहेतवः जीविकाविपत्तिकरदानादिभिः धर्मादयः प्रत्युत नश्यन्तीत्यर्थः।।३६।।

अतो विद्वान् वित्तं पञ्चधा तत्र स्वजनाय स्वजनपुष्टये[12] धर्मादि पञ्चकार्थतया विभजन्नेव इहामुत्र च लोके मोदते।।३७।।

ननु तर्हि प्रतिश्रुत्य नेति कथमनृतं वाच्यम्? तत्राह सार्धैः षड्भिः। अत्रापि सत्यानृतव्यवस्थायां बह्वृचैर्गीतं यत् तत् कथयतो मत्तः श्रुणु। बह्वृचश्रुत्या हि प्रथमम् "ओमिति सत्यं नेत्यनृतं तदेतत् पुष्पं फलं वाचो यत् सत्यं स हीश्वरो यशस्वी कल्याणकीर्तिः भवतोरीश्वरः" इत्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिन्दाभ्यां सत्यं विहितं अनृतं च निषिद्धम्। अनन्तरं "परागवा एतद्रिक्तमक्षरम्" इत्यादिना सत्ये दोषाननृते च गुणानुक्त्वा "तस्मात् काल एव दद्यात् काले न दद्यात् सत्यानृते मिथुनीकरोति" इत्युपसंहारेण वृत्तिसङ्कटादिषु अनृतमप्यनुज्ञातम्। तमिमं श्रुत्यर्थं दर्शयन्नाह - सत्यमिति। ओमित्यङ्गीकारेण यत् प्रोक्तं तत् सत्यं नेति यदाह तदेवानृतम्।।३८।।

तत् सत्यमीषदनृतं विना न सिध्यतीत्याशयेनाह - सत्यं पुष्पफलं विद्यात् जानीयात् आत्मवृक्षस्य

1. A,B,T Omit सति 2. B,H,J,V Omit अतः 3. A,B,T एव 4. A,B,T त त्वे" 5. A,B,J तथैवो" 6. A,B,J "है" 7. A,B,J वदत्यथैतन्मूलं 8. A,B,J त त्वे 9. A,B,J एतेना" 10. A,B,J "त 11. W Omits एव 12. A,B,T तुष्टये

देहरूपस्य वृक्षस्य, कुतः, गीयते श्रुत्या उच्यते इत्यर्थः, जीवतः इति पाठान्तरं तु सुगमं, यद्यपि श्रुत्या " वाचः सत्यं पुष्पं फलं च " इत्युक्तम्। तथापि वाचो देहनिर्वाहाधीनत्वात् आत्मवृक्षस्येति प्रस्तुतानुसारेणोक्तं भवति। पुष्पफलस्थानीयं सत्यं, ततः किमत आह - वृक्षे देहे अजीवति तत् पुष्पफलं न स्यात्। सा न स्यादिति पाठे श्रुत्युक्ताया वाचः परामर्शः। देहश्चानृतेन रक्षणीय इत्याह, अनृतं तु आत्मनो देहस्य मूलम्, तथा च श्रुतिः - "दयेत त्वेनेन" इति एनेन[1] त्वनृतेन दयेत सङ्कटेष्वात्मानं रक्षेदित्यर्थः।।३९।।

एतदेव दृष्टान्तेन[2] स्फुटयति - तद्यथा वृक्षः उत्खातमूलः शुष्यति, अचिरादेव उद्वर्तते पतति च, एव नष्ट मनृतं यस्य स आत्मा देहः शुष्येत् सर्वस्वदाने देहः शुष्येदिति भावः।।४०।।

**विज०** तस्य तव दानं कुतो न प्रशंसन्तीति तत्राह - येनेति। वृत्तिर्जीवनं विपद्यते नश्यतीति येन तस्मादिति शेषः। " सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते " (भ.गी.2-34) इति, स्मृतेर्वृत्तिः जीवनसाधनं वा नष्टं स्यात्। तन्नाशे किञ्छिन्नम्? अत्राह, दानमिति।।३६।।

अर्थाय कोशवृद्धये क्रियादिव्यवहाराय वा।।३७।।

किमन्यत्त्वदुक्तेः प्रमाणमित्याशङ्क्य बह्वृचां वाक्यं प्रमाणमित्याह अत्रापीति। बह्वृचैः ऋग्वेदिभिः किन्तद्गीतमित्यर्थतः प्रतीकयति - सत्यमिति। ओमिति यत्प्रोक्तं अर्थिनं प्रति तत्सत्यं तथेति संवेदनीयमित्यर्थः। नेति यदाह अर्थिनं प्रति तदनृतं, हिशब्द उभयो विरोधमाह।।३८।।

कुतोऽत्राह - **सत्यमिति**। पुष्पमेव फलं यस्य, तत्पुष्पफलं जीवतः प्राणधारकस्य आत्माख्यवृक्षस्य सत्यं पुष्पफलं विन्द्यात् पुष्पञ्च फलञ्च पुष्पफलमिति वा यथाऽशुष्कस्य वृक्षस्य पुष्पफले स्यातां तथात्मनः सत्यलक्षणे पुष्पफले विन्द्यादित्यर्थः। तदुक्तं " पुष्पं हि फलं वाचः सत्यं वदति " इति आत्मवृक्षेऽजीवति शुष्कलक्षणमरणे सति तत्सत्यलक्षणं पुष्पफलं न स्यात्। आत्मनः आत्मवृक्षस्य अनृतं सर्वस्वादानलक्षणं मूलं स्थितिकारणं "अथैतन्मूलं वाचो यदनृतम्" इति च।।३९।।

विपक्षे बाधकमाह - **तद्यथेति**। तद्यथा तथोदाहरिष्यामः उन्मूलः उत्खातशिफः वृक्षः शुष्यति अचिरादुद्वर्तते नश्यति च, एवं नष्टानृतः नष्टमूलः, सद्यस्तत्क्षणमेव शुष्येत्, शुष्यति नश्यति, तद्यथा वृक्ष आविर्मूलः शुष्यति, स उद्वर्तत, एवमेवानृतं[3] वदन्नाविर्मूलमात्मानं करोति स शुष्यति "स उद्वर्तते तस्मादनृतं[-3] न वदेत्" इति च।।४०।।

1. A,B,T एतेन 2. A,B,T "न्तः 3- -3. A Omits

**पराग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति।**
**तद्यत्किञ्चोमिति[1] ब्रूयात्[2] तेन[3] रिच्येत वै पुमान्।।**
**भिक्षवे सर्वमोङ्कुर्वन्नाऽलं कामेभ्य[4] आत्मने।।४१।।**

**अथैतत्पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः।**
**सर्वं नेत्यतिथिं[6] ब्रूयात्स दुष्कीर्तिः[7] श्वसन्मृतः।।४२।।**

**स्त्रीषु नर्मविवाहे[8] च वृत्त्यर्थे प्राणसंकटे।**
**गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम्।।४३।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे उत्तरार्धे वामनप्रादुर्भावो नाम एकोनविंशोऽध्यायः।।१९।।

**श्रीध॰[9]** सर्वदा स्त्यवचनेन देहो[10] न निर्वहेर्दति स्फुटीकर्तुं सत्यस्य दोषान् अनृतस्य गुणानाह - **परागिति** द्वाभ्याम्। यदोमित्यक्षरं तत्पराक् पराञ्चति[11-] दूरेऽर्थं गृहीत्वा व्रजतीति[-11] पराक्, रिक्तमिति श्रुतिपदस्य[12] व्याख्यानमपूर्णं वै इति। तत्तस्मादर्थिने यत्किञ्चिदोमिति दास्यामीति[13] ब्रूयात्तेन रिच्येत शून्यो[14] भवेत्। किञ्च भिक्षवे सर्वमोङ्कुर्वन्दास्यामीत्यङ्गीकुर्वन्नात्मने कामाय[15] नालं पर्याप्तो न भवति। तस्य भोगो न सिध्यतीत्यर्थः। तथा च श्रुतिः "पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत्किञ्चोमित्याहात्रैवास्मै तद्रिच्यते स यत्ससर्वमोङ्कुर्यात् रिच्यादात्मानं स कामेभ्यो नालं स्यात्" इति।।४१।।

**अथैतदिति।** नेति यदनृतं वच एतत्पूर्णमर्थव्ययाभावात्। अभ्यात्मं[16] चेति चकारस्यान्वयः[17]। आत्मनोऽभिमुखमन्यस्यार्थं माकर्षतीत्यभ्यात्मम्[18]। यो हि नित्यं मम किञ्चिदपि नास्ति इति[19-] न किमपि दास्यामि इति ब्रूते[-19] स हि तेनानृतेन परेषामर्थानाकर्षतीति प्रसिद्धम्। ननु तर्हीदमनृतमेव[20] सर्वदा सेव्यं स्यान्नेत्याहसर्वमिति। तथा च श्रुतिः- "अथैतत्पूर्णमभ्यात्मं[21] यन्नेति स यत्सर्वं नेति ब्रूयात्पापिकाऽस्य कीर्तिर्जायेत[22] सैनं तत्रैव हन्यात्" इति।।४२।।

अतो वृत्तिसङ्कटादिष्वनृतं न दोषायेत्युपसंहरति **स्त्रीष्विति।** स्त्रीषु प्रोत्साहनेन वशीकरणे[23], नर्मणि

1. A,B,G,J,T यत्किञ्चिदों 2. H,V स न ; M,Ma न स 3 M,Ma रिच्येत 4 A,B,G,J,T " न चा" 5. H,V "ध्यात्मं 6. A,B,G,J,T "त्यनृतः M,Ma "त्यर्थिनं 7. M,Ma "तिश्च सन्मृतः 8. M,Ma नर्मे 9 A B.J "धा 10. H,V देहेन 11- -11 B,H,V दूरेऽर्थं गृहीत्वाऽञ्चतीति 12. H,V "दव्या" 13. A Omits दास्यामीति 14. A,B,J न्यूनो 15. A,B,J कामेन 16. H,V अध्या॰ 17. A,B,J "रान्व" 18 H,V "त्यध्या" 19- -19. A,B,J सीदामीति ब्रूते 20. H,V "मिव 21. H,V "मध्या" 22. H,V जायते 23. H,V "कारेण

परिहासे, विवाहे च वरादिस्तुतौ, गवां ब्राह्मणानां च हितार्थम्, हिंसायां च कस्यचित्प्राप्तायाम्। तथा च याज्ञवल्क्यः "वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्" (याज्ञ.स्मृ. 5-83) इति। तथा च श्रुतिः - "तस्मात्काल[1] एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति" इति।।४३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां एकोनविंशोऽध्यायः।।१९।।

**वीर०** सर्वदा सत्यं वदतो देहो न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषान् अनृतस्य गुणांश्चाह - **परागिति** द्वाभ्याम्। यदोमित्यक्षरं सर्वस्वं दास्यामीत्यङ्गीकारार्थकमक्षरं, तत्पराक् पराक्शब्दव्याख्यानं रिक्तमिति तस्यापि व्याख्यानमपूर्णमिति। तथा च श्रुतिः "पराग्वा एतद्रिक्तमक्षरं यदेतदोम् " इति सर्वस्वदाने कृते वृत्त्यभावेन देहस्यापि विनाशात् दातुर्विपत्त्या दानसाद्गुण्याभावात् ओमित्यक्षरं असाद्गुण्यवत् दानप्रतिज्ञापरत्वेन अपरिपूर्णं स्यादित्यर्थः। किञ्चिदोमिति ब्रूयात्। किञ्चिद्दास्यामीति यद्वाक्यं, तेन वाक्येन पुमान् दाता रिच्येत, अवशिष्येतेत्यर्थः। दत्तावशिष्टे नात्मनो वृत्तिं कल्पयन् जीवेत्। अतस्तद्वाक्यं साद्गुण्यवद्दानप्रतिश्रुतिपरत्वेन परिपूर्णं स्यादिति भावः। तथा च श्रुतिः - "न यत्सर्वं मोङ्कुर्यात् रिक्तं चात्मानं स कामेभ्यो नालं स्यात्" इति। यः सर्वमोंकुर्यात् स आत्मानं रिक्तं कुर्यादित्यर्थः। स कामेभ्यो नालं स्यादित्यस्य अर्थमाह - भिक्षव इति। भिक्षवे याचकाय सर्वं स्वं[2] ओं कुर्वन् दास्यामीति प्रतिश्रृण्वन् पुमानात्मने कामेन, काम्यत इति कामो जीवनम्, अध्ययनेन वसतीतिवत्, हेत्वर्थे तृतीया, तस्मै नालं न समर्थः स्यादित्यर्थः, अतः किञ्चिदेव देयमिति भावः "अथैतत्पूर्णमभ्यात्मं[3] यन्नेति यत्सर्वं नेति ब्रूयाद्वा पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्" इति श्रुत्यर्थमाह अथेति। नेति यदनृतं वचः एतत्पूर्णं अर्थव्ययाभावात्, अभ्यात्मं चेति चकारस्यान्वयः। आत्मनोऽभिमुखमन्यस्यार्थमाकर्षतीत्यभ्यात्मं, यो हि नित्यं मम किञ्चिदपि नास्ति सीदामीमि ब्रूते, स हि तेनानृतेन परेषामर्थानामाकर्षतीति प्रसिद्धम्। तर्हि इदमनृतं अमृतमित्र सर्वदा सेव्यं स्यात् नेत्याह - सर्वमिति। सर्वं नेति यो ब्रूयात् स दुष्कीर्तिः अतः किञ्चिद्देयमित्यर्थः। यद्वा किञ्चिद्दास्यामीति प्रतिश्रवणादपि किञ्चिदपि न दस्यामीत्येतदेव, तर्हि ज्यायः सुतरामर्थव्ययाभावादिति परिचोद्य तत्प्रतिक्षिपति - अथैतदिति। अथ नन्वभ्यात्मं याचकाभिमुखं यन्नेति किञ्चिदपि नेत्यनृतं, यद्वचस्तदेतत् पूर्णं[4] सति वित्ते नेति वचसो

1. H.V. त्काले 2. A,B,T Omit स्वं 3. A,B,T ध्या 4. A,T पूर्णं

मिथ्यार्थपरत्वात् अनृतमित्युक्तं, तदनूद्य प्रतिक्षिपति - यदिति। यत् सर्वं नेति, किञ्चिदपि नेति ब्रूयात्, स दुष्टा कीर्तिर्यस्य तादृशः स्यात्, श्रुतौ वाशब्दः पक्षविपरिवृत्त्यर्थकः, भवत्वित्यत्राह - श्वसन् मृतः स जीवन्नपि[1] मृतप्राय इत्यर्थः। अनेन " सैनं तत्रैव हन्यात् " इति वाक्यविशेषो व्याख्यातः। सा दुष्टा कीर्तिरेनं सति वित्ते किञ्चिदपि नेति, याचकं प्रति, वक्तारं, तत्रैव जीवद्दशायामेव हन्यादिति तदर्थः।।४१-४२।।

अतो वृत्तिसङ्कटादिषु अनृतं न दोषायेत्युपसंहरति - स्त्रीष्विति। स्त्रीषु प्रोत्साहनेन वशीकारे। नर्मकर्मणि परिहासे विवाहे वरादिस्तुतौ वृत्त्यर्थे जीविकार्थे, गवां ब्राह्मणानां च हितार्थे, हिंसायां कस्यचित् प्राप्तायां अनृतं न निन्दितं भवेदित्यर्थः। तथा च याज्ञवल्क्यः - " वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् " इति। तथा च श्रुतिः "तस्मात् काल एव दद्यात् सत्यानृते मिथुनीकरोति" इति।।४३।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकोनविंशोऽध्यायः।।१९।।

**विज०** यत्तदोमित्यक्षरमेतदपूर्णं सर्वस्वं पराक्परविषयं रिक्तं पृथक्कृतं अर्थिनं सर्वस्वं दत्तमित्यर्थस्य वाचकं वदेदित्यर्थः। "परागवा एतद्रिक्तमक्षरं यदेतदोम्" इति च। फलितमाह - तदिति। तत्तस्मात्पुमान्यत्किञ्च स्वजीवनातिरिक्तं धनं ओं दास्यामीति ब्रूयात्, ब्रवीति स न रिच्येत वै न नश्यतीत्यन्वयः। तद्यत्किञ्चोमित्याहात्रैवास्मै, तद्रिच्यत इति रिच्यते सम्पन्नो भवतीत्यर्थः। तात्पर्यादुक्तं बाधकान्तरेण द्रढयति, भिक्षव इति। भिक्षवे याचमानाय सर्वमोङ्कुर्वन् सर्वस्वं ददत् कामेभ्यो विषयाणां दत्तत्वादात्मने नालम्, आत्मनो भोज्यभावेन पर्याप्तो न भवति नष्टो भवतीत्यर्थः।।४१।।

अथ तस्मान्नेत्यनृतं यद्वच एतदध्यात्मम् आत्मानं प्रति पूर्णं सर्वस्वदाने स्वजीवनं सम्पन्नं भवतीत्यर्थः। अतिथिं प्रति सर्वं न दास्यामीति ब्रूयात्तर्हि आत्मानं पूर्णं सर्वस्वं जीवनं समृद्धं भवतीति पूर्वेण सम्बन्धः। पूर्णं सम्पन्नं, किञ्च नेत्यतिथिं प्रति ब्रूयात् इति, योगविभागः कर्तव्यः। तथाहि अतिथिं प्रति किञ्चन न दास्यामीति ब्रूयात् तर्हि स दुष्कीर्तिश्च सन्मृतो जीवन्मृतश्च भवति। एतदुक्तं भवति, याचकाय सर्वस्वदाने स्वजीवन नाशः किञ्चिदप्यादाने च अदृष्टविरोधेन दुष्कीर्त्या जीवन्मृतत्वं स्यात्तस्माद्यावद्विहितं कर्तव्यमिति। "स यत्सर्वमोङ्कुर्याद्रिच्यादात्मानं स कामेभ्यो नालं स्यादथैतत्पूर्णमभ्यात्मं, यन्नेति ब्रूयात्पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्तस्मात्काल एव दद्यात् काले न दद्यात्तत्सत्यानृते मिथुनीकरोति तयोर्मिथुनात्प्रजायते भूयान्भवति

1. A,B,T 'वद्दशायामेव

यो वै तां वाचं वेद " इति आत्मानं रिच्यात् शून्यं कुर्यात्।।४२।।

ननु प्रतिश्रुताऽप्रदाने महान्दोषः स्यादित्याशङ्क्य एष न स्यादित्याह - स्त्रीष्विति। नर्मे नर्मणि हिंसायां त्रैवर्णिकविषयायाम्। "न स्त्रीषु राजन्न विवाहकाले प्राणात्यये सर्वधनापहारे" इत्यादि सिद्धमेतत्।।४३।।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीविजयध्वजतीर्थकृत पदरत्नावल्यां
टीकायां एकोनविंशोऽध्यायः।।१९।।

०००0०००

# विंशोऽध्यायः

## श्रीशुक उवाच

बलिरेवं गृहपतिः कुलाचार्येण भाषितः।
तूष्णीं भूत्वा क्षणं राजन् उवाचावहितो गुरुम्।।१।।

## बलिरुवाच

सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम्।
अर्थं कामं यशो [1]वृत्तिं यो न बाधेत कर्हिचित्।।२।।

स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम्।
प्रति[2]श्रुतं ददामीति प्राह्लादिः कितवो यथा।।३।।

न[3]ह्यसत्यात् [4]परोऽधर्म इति होवाच भूरियम्।
सर्वं [5]वोढु[6]महं [7]मन्ये ऋतेऽलीकपरं नरम्।।४।।

नाहं बिभेमि निरयात् नाधन्यादसुखार्णवात्।
न स्थानच्यवनान्मृत्योर्यथा विप्र[8]प्रलोभनात्।।५।।

यद्यद्धास्यति लोकेऽस्मिन् सम्परे[9]तं [10]धरादिकम्।
[11]तस्य त्या[12]गनिमित्तं किं विप्रस्तुष्ये[13]न्न तेन चेत्।।६।।

श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः।
दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु।।७।।

यैरियं [14]बुभुजे [15]युद्धे दैत्येन्द्रैरनिवर्तिभिः।
तेषां कालोऽग्रसील्लोकान् न यशोऽधिगतं भुवि।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

विंशे गुरूक्ति मुल्लङ्घ्य दत्तां क्ष्मां बलिना हरिः। प्रतिगृह्याखिलान्लोकान् विश्वरूपो विचक्रमे।।

यद्वा-

विंशे त्वनृतभीतोऽसौ ज्ञात्वाऽपि कपटं हरेः। ददौ पृथ्वीं [16-]तदा[-16] विष्णुः सहसाऽवर्धताद्भुतम्।।

1. H,V,W वृत्तीः; M,Ma वृत्तं 2. A,B,G,J,M,Ma,T "त्य 3. H,V हि स" 4. H,V परां धर्मः 5. A,B,G,J,T सोढु" 6. A,B,G,J,M,Ma,T "लं 7. W मेने 8. A,B,G,J,T प्रलम्भ" 9. M,Ma "तो 10. A,B,G,J,T धना" 11. M,Ma तस्यात्या" 12. A,B,G,J,M,Ma,T "गे 13. M,Ma "त 14. M,Ma भुज्यते 15. A,B,G,J,M,Ma,T ब्रह्मन् ! 16- -16.A,B,J ददावेव ततो

**सत्यमिति**। भगवता त्वया प्रोक्तं सत्यम्, किं तत्? योऽर्थकामादिकं न बाधेत [1-]सोऽयं[-1] हि गृहमेधिनां धर्म इति।।१,२।।

**सेति**। कथं प्रत्याचक्षे निराकरोमि।।३,४।।

नन्वप्रत्याख्याने दोषा उक्तास्तत्राह - **नाहमिति**। अधन्याद्दारिद्र्यात् मृत्योरपि।।५।।
[2]किञ्च यद्यद्ध[3]रादिकं तत्सर्वं सम्परेतं मृतं पुरुषं हास्यति त्यक्ष्यत्येव। [4]एतत्किमिति जीवतैव स्वयं न देयमिति भावः। तथापि तावत् वृत्तिसङ्कटपरिहारार्थमर्थः [5]देय इति चेत्, तत्राह - तस्येति। विप्रश्चेत्तेनार्थेन दत्तेनापि न तुष्येत्तर्हि तस्यार्थस्य त्यागे दाने किं निमित्तं न किञ्चित्। याचितादल्पस्य दाने विप्रस्यासन्तोषेण दानं व्यर्थमेव स्यात्, अतस्तद्याचितं सर्वं देयं न किञ्चिदिति भावः [6-]पाठान्तरे यद्यद्दास्यति तस्य अत्यागे किं निमित्तं, तेन चेत् विप्रः तुष्यतीत्यर्थः[-6]।।६।।

[7-]ननु विप्रो यदि न तुष्येत्[-7] तर्हि न देयमेवेति चेत् तत्राह - **श्रेय** इति। दुस्त्यजैरसुभिरपि। को विकल्पो विचारः।।७।।

**यैरिति**। यैः दैत्येन्द्रैः युद्धेऽनिवर्तिभिरियं भूर्बुभुजे उपभुक्ता, तेषां इहलोकान् परलोकांश्च भोगानिति वा कालोऽग्रसीत् संहृतवान्, न तु भुवि तैरधिगतं प्राप्तं यशोऽग्रसीत्। अतः कीर्तिरेव साध्या नान्यदिति भावः।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवमुशनसोक्तो बलिस्तमुवाचेत्याह - मुनिः - **बलिरिति**। कुलाचार्येण शुक्रेणेत्थमुक्तः गृहपतिः यजमानो बलिः क्षणं तूष्णीमवस्थाय, हे राजन्। अवहितः प्रकृतमध्यवस्यन् गुरुमुशनसमाह।।१।।

तदेवाह - **सत्यमिति**। भगवता त्वया यदुक्तं तत् सत्यम्, सोऽयं गृहस्थानां धर्मः, यः त्वदुक्तो धर्मः कर्हिचिदपि गृहमेधिनामर्थादीन् न बाधेत, न विहन्ति, अतः सत्यं गृहमेधिनां धर्मः।।२।।

तथापि [8]सः गृहस्थोऽप्यहं [9]प्रह्लादपौत्रः ददामीति प्रतिश्रुत्य अधुना [10]धूर्तवत् वित्तलोभेन द्विजं कथं [11]प्रत्याचक्ष्ये निराकरोमि।।३।।

ननु अप्रत्याख्याने दोषाः उक्तास्तत्राह - **न हीति**।असत्यात्[12]परो अन्योऽधर्मो नास्तीति इयं भूमिराह हि।

---

1- -1. B,J, स हि; H,V सः 2. B,J Omit किञ्च 3. A,B,J "ना" 4. A,B,J तत्कि" 5. A,B,J दीयतामिति 6- -6. A,B,J, Omits 7- -7. A,B,J Omit 8. A,B,T Omit सः 9. W Omits प्रह्लादपौत्र. 10. W Omits धूर्तवत् 11. A,B,T Omit प्रत्याचक्ष्ये 12. W Omits परः

किं तथाविधं भूमेर्वचस्त्वयोपलब्धम्? इत्यत्राह - सर्वमिति। यत इयं भूरलीकपरमनृतपरम्[1] अनृतवादिनमृते विना सर्वं मेरुमन्दरादिकमपि वोढुं धर्त्तुं अलं[2] समर्थमात्मानं मेने अमन्यत। साक्षात्तस्याः तथाविधोक्त्यभावेप्यलोकपरो नरस्तस्या दुर्भरत्वेनानुमत इति भावः। मन्ये इति पाठान्तरम्[3]। तदा[4] अलीकपरं नरं विनाऽहं सर्वं वोढुं सोढुं[5] अलं मन्ये, अलीकपरन्तु न सहे कथमहं तत्सहे इत्यर्थः। सोढुमिति पाठस्तु[6] सुगमः।।४।।

किञ्च, यथा विप्रप्रलोभनात्[7] विप्रविषयेऽनृतवदनाद्यथाहं बिभेमि तथा निरयादिभ्यो न बिभेमि। तत्राधन्यं दारिद्र्यम्।।५।।

किञ्च यद्यद्धरादिकं[8] तत्सर्वं सम्परेतं मृतं पुरुषमस्मिन्नेव[9] लोके हास्यति त्यक्ष्यति, तत्किमिति जीवतैव स्वयं[10] न देयमिति भावः। तथापि तावद्वृत्तिसङ्कटपरिहारार्थं किञ्चिद्दीयतामित्यत्राह - तस्येति। येनार्थेन दत्तेनापि न तुष्येद्विप्रस्तर्हि तस्यार्थस्य त्यागे दाने [11-]किं निमित्तं[-11], न किञ्चित्, याचितादन्यस्य दाने विप्रस्यासन्तोषात् तद्दानं व्यर्थमेव स्यात्, अतस्तद्याचितं सर्वं देयं न किञ्चिदिति भावः।।६।।

ननु, यदि किञ्चिद्दत्तेन न तुष्येद्विप्रः तर्हि न देयमेवेत्यत्राह - श्रेय इति। साधवः परोपकार-[12]प्रसाधनस्वभावाः दध्यङ्ङादयः दुस्त्यजैः असुभिः प्राणैरपि भूतानां श्रेयः प्रकुर्वन्ति धरादिषु को विकल्पः को विचारः?।।७।।

सर्वथा कीर्तिरेव सम्पादनीयेत्यभिप्रायेणाह यैरिति। हे ब्रह्मन् यैर्दैत्येन्द्रैः अस्मत्प्रपितामहादिभिः युद्धेष्वनिवर्तिभिः इयं भूमिः बुभुजे उपभुक्ता, तेषां लोकान् भोगान् कालोऽग्रसीत् संहृतवान्, तैर्भुव्यधिगतं लब्धं यशः कीर्तिन्तु नाग्रसीत् सा[13] तु अधुनात्यनुवर्तते इति भावः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भक्तिविधानार्थं त्रिविक्रमावतारमाहात्म्यं वक्ति अस्मिन्नध्याये, तत्राऽदौ बलेः सत्यसन्ध निश्चयमाह - **बलिरिति** ।।१।।

यो दानादि धर्मार्थादिकं स्वजीवनसाधनं न बाधेत न नश्यति[14]। सोऽयं गृहस्थानां धर्म इति यदुक्तं तत्सत्यम् अबाधितमित्यन्वयः।।२।।

1. W Omits अनृतपरं 2. A,B,T Omit अलं 3. A,B,T पाठे 4 A,B,T Omit तदा 5. A,B,T Omit सुढुं 6. A,B,T पाठः 7. A,B,T प्रलम्भ" 8. A,B,T "ना 9. A,B,T Omit एव 10. A,B,T Omit स्वयं 11- -11. W Omits 12. A,B,T Omit प्र 13. W Omits सा तु 14. A,B नाशयेत्

तथैवानुष्ठेयो धर्म इति नेत्याह - **स इति**। यो ददामीति प्रतिज्ञाय स्थित: सोऽयं प्रत्याचक्षे न दास्यामीति निषेधं करोमीति कुत: प्राह्लादि: कितवो धूर्त:।।३-५।।

ननु वित्तलोभाभावे स्वजीवनहानि: स्यात् इत्याशङ्क्य दानेन विप्रालम्बुद्धिरेव प्रयोजिका नान्येत्याशयेनाह - **तस्येति**। यत्प्रतिश्रुतं तेन वित्तेन विप्रो यदि तुष्येत तर्हि तस्य वित्तस्यात्यागे अदाने निमित्तं कारणं किं, न किमपि।।६।।

स्वजीवनं कारणञ्चेन्नेत्याह - **श्रेय इति**। के ते साधव इति तत्राह - दध्यङ्डिति। दध्याङ्ङाथर्वणो देवेभ्य: स्वदेहं, शिबि: कपोताय, तत: प्रकृते, किन्तत्राह - को विकल्प: इति। दित्सितेषु धरादिषु विकल्प: दास्यामि न वेति संशय: क: ? न कोऽपीत्यर्थ:।।७।।

सति विभवेऽर्थिनि च प्राप्ते लोभा ददातृणामैहिकामुष्मिक सुखं न सेत्स्यतीत्याशयेनाह - **यैरियमिति** अनिवर्तिभि: युद्ध इति शेष:। काले यम: स्वर्गादिलोकानग्रसीत् ग्रस्तवान् " ये लोका दानशीलानां स तानाप्नोति पुष्कलान् (याज्ञ.स्मृ. 9-213) इति स्मृतिसिद्धलोका न सन्तीत्यर्थ:।।८।।

**सुलभा युधि विप्रर्षे! ह्यनिवृत्तास्तनुत्यज:।**
**न तथा तीर्थ आयाते श्रद्धया ये धनत्यज:।।९।।**

**मनस्विन: कारुणिकस्य शोभनम् यदर्थिकामोपनयेन[1] दुर्गति:।**
**कुत: पुनर्ब्रह्मविदां भवादृशां ततो वटोरस्य ददामि वाञ्छितम्।।१०।।**

**यजन्ति यज्ञक्रतुभिर्यमादृता भवन्त आम्नाय विधानकोविदा:।**
**स एष[2] विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने।।११।।**

**यद्यप्य[3]सावधर्मेण मां बध्नीयादनागसम्।**
**तथाप्येनं न हिंसिष्ये धृतब्रह्मतनुं[4] रिपुम्।।१२।।**

**एष एव उत्तमश्लोके न जिहासति यद्यश:।**
**हत्वा मैनां हरेद्युद्धे शयीत निहतो मम[5]।।१३।।**

1. M,Ma 'र्थं ' 2. A,B,G,J,T एव 3. A,B,G,J,T यद' 4. A,B,G,J,T मीत; M,Ma तीनं 5. A,B,G,J,T,M,Ma,T मया

**श्रीशुक उवाच**

**एवमश्रद्धितं शिष्यमनादेशकरं गुरुः।**
**शशाप दैवप्रहितः सत्यसन्धं मनस्विनम्॥१४॥**

**[1-]शुक्र उवाच[-1]**

**दृढं पण्डितमान्यज्ञः स्तब्धोऽस्य[2]स्मदुपेक्षया।**
**मच्छासनातिगो यस्त्वमचिराद्भ्रश्यसे श्रियः॥१५॥**

**[3-]श्रीशुक उवाच[-3]**

**एवं शप्तस्स्वगुरुणा सत्यान्न चलितो महान्।**
**वामनाय ददावेनामर्चित्वोदक[4]पूर्वकम्॥१६॥**

**श्रीध०** देहत्यागादपि धनत्यागे कीर्तिर्भवतीत्याह - **सुलभा** इति। तनुं त्यजन्तीति [5]तनुत्यजः तथा। तीर्थे पात्रे अतोऽतिदुष्करो धनत्याग एव मया कार्य इति भावः॥९॥

तर्हि निर्धनत्वेन दैन्यं स्यादिति चेत् तत्राह - **मनस्विन** इति। यादृशतादृशानामप्यर्थिनां कामोपनयेन कामपूरणेन दुर्गतिर्दैन्यमिति यत्तत् शोभनं भद्रमेव भवादृशानां तु कामोपनयेन दुर्गतिः, शोभनमिति किम्पुनर्वक्त[6]व्यमित्यर्थः॥१०॥

ननु नायं वटुः किन्तु विष्णुस्तव शत्रुरित्युक्तं तर्हि, सुतरामेव दास्यामीत्याह - **यजन्तीति।** परः शत्रुर्वाऽस्तु॥११,१२॥

**एष** इति। [7]यद्यदि यशो न जिहासति तर्हि युद्धे[8]ऽयं [9]मा मां हत्वैनां भूमिं हरेच्छयीत वा। सम्यक् ज्ञातःसन् मर्मचित्ते शयीतेति वास्तवोऽर्थः॥१३॥

**एवमिति**। अश्रद्धितमजातश्रद्धम्॥१४-१६॥

**वीर०** देहादपि प्रियस्य धनस्य त्यागादेव कीर्तिर्भवतीत्याह - **सुलभा** इति। हे विप्रर्षे! [10]युधि [11]युद्धे तनुं देहं त्यजन्तीति तथा तादृशाः सुलभाः बहवः अनुवृत्ताः जात बभूवुरित्यर्थः। तथा तीर्थे सत्पात्रे श्रद्धया ये सर्वस्वं [12]त्यजन्ति [13]ते नाऽनुवृत्ताः। अतोऽतिदुष्करो धनत्याग एव मया कार्य इति भावः। [14-]अतिवृत्ता इत्यपि पाठः[-14]॥९॥

---

1- -1. A,B,G,J,M,Ma,T Omit 2. H,V "प्य" 3- -3. A,B,G,J,M,Ma,T Omit 4. W पूर्विकाम् 5. H,V Omit तनुत्यजः 6. H,V "मितिभावः 7. H,V Omit यत् 8. H,V Omit अयं 9. B,H,J,V Omit मा 10. A,B,T Omit युधि 11. W Omits युद्धे 12. W "न्तः 13. W Omits ते 14- -14. W Omits

तर्हि निर्धनत्वेन दैन्यं स्यादित्यत्राह मनस्विन इति। अर्थिनां कामपूरणेन दुर्गतिर्दैन्यमिति यत्तन्मनस्विनो विवेकिनः कारुणिकस्य शोभनं भद्रमेव किं पुनर्भवादृशां[1] ब्रह्मविदां तद्भद्रमेवेति वक्तव्यं ततोऽस्य वटोर्वाञ्छितं ददामि[2]।।१०।।

ननु नायं वटुः किन्तु विष्णुस्तव शत्रुः इत्युक्तं[3] तर्हि तु[4] सुतरामेव दास्यामीत्याह यजन्तीति। वेदोक्तयज्ञाद्यनुष्ठानकुशलाः भवन्तः आदृतास्सन्तः क्रतुभिर्यज्ञैश्च ससोमकैरसोमकैश्च यागैर्यं विष्णुं यजन्ति आराधयन्ति स एष वटुवेषो विष्णुरधुना मम वरदो वा परः शत्रुर्वाऽस्तु सर्वथाऽस्मै भूमिं ईप्सितां हे मुने! दास्याम्येव।।११।।

तर्हि तृतीयपादस्याऽऽस्पदाभावेन हेतुना त्वां बध्नीयात् असौ[5] अत आह **यदीति**। अनागसं सर्वस्वसमर्पणेन निरपराधिनं[6] मामसावधर्मेण यदि बध्नीयात्तथाप्येनं [7-]धृतब्राह्मणशरीरं[-7] न हिंसिष्ये न हनिष्यामि बन्धनमप्यनुमन्ये नाहं बिभेमीति पूर्वमेवोक्तत्वादिति भावः।।१२।।

किञ्चैष यद्युत्तमश्लोकः विष्णुस्तर्हि यशः कीर्तिं[8] न जिहासति त्यक्तुं नेच्छति सर्वस्वं प्रतिगृह्य मां बध्वा स्वकीयं विपुलं यशः न विहन्तीति भावः। किन्तु मां युद्धे हत्वा एनां भूमिं हरेत् मां हन्तुमसमर्थश्चेत् मया निहतो युद्धे शयीत वा [9-]इति तु नार्थः। किन्तु शयीत इति काकुः किं शयीत न शयीत एवेति दिक्[-9]।।१३।।

इत्थमश्रद्धितं श्रद्धाऽस्य [10-]सञ्जातेति श्रद्धितः, तारकादित्वात् इतच्, न श्रद्धितः[-10] अश्रद्धितः तं स्वस्याऽऽज्ञामस्वीकुर्वाणं[11] शिष्यं बलिं [12-]गुरुः उशना[-12] शुक्रो[13] दैवचोदितः शशाप। शापानर्हत्वं सूचयन्विशिनष्टि सत्ये सन्धा अभिसन्धिः यस्य तं प्रशस्तमनस्कम्।।१४।।

शापमेव दर्शयति **दृढमिति**। त्वं दृढं नूनं पण्डितमात्मानं मन्यसे इति तथा। वस्तुतस्तु अज्ञः, अत एव स्तब्धः सर्वस्वनाशप्रसक्तावाप्यलं[14] पटुरस्मीति[15] [16-]गर्वयुक्तस्त्वं[-16] मच्छासनमतिक्रान्तवान् अतस्त्वं मम गुरोरुपेक्षायाऽचिरादेव श्रियस्त्रैलोक्याधिपत्याद्भ्रश्यसि।।१५।।

इति इत्थं स्वगुरुणा[17] शप्तोऽपि सत्यात् न चलितो महान् दृढसङ्कल्पो बलिर्वामनाय अर्चित्वो[18]दकपूर्विकामेनां[19] भूमिं ददौ।।१६।।

1. W शानां 2. W 'नि 3. A,B,T Omit इत्युक्तं 4. W Omits तु 5. W Omits असौ 6. W 'धं 7- -7. W विप्रतनु 8. A Omits कीर्तिं 9- -9. W Omits 10- -10. A,B,T न सञ्जातेति 11. W स्वाम्या' 12- -12. A,B,T Omit 13. W Omits शुक्रः 14. W अलम्पटोऽसि 15. W Omits इति 16- -16. W मतस्त्वं 17 A,B,T Omit स्व 18. W 'दपू' 19. W 'मिमां

**विज०** पात्राभावान्न दास्यन्ति तस्मिन् सति दातारः सुलभा इति तत्राह - **युधीति**। यथा युधि युद्धा दनिवृत्तास्तनुत्यजः शरीरत्यागिनः सुलभास्तथा तीर्थे पात्रे प्राप्ते श्रद्धया धनत्यजः धनदातारो न सुलभा इत्यन्वयः। "तीर्थं मन्त्राद्युपाध्याये शास्त्रेष्वम्भसि पावने। पात्रोपायावतारेषु स्त्री पुष्पे योनियज्ञयोः" (वैज.को.6-3-13,14) इति यादवः।" पराचिच्छीर्षावनृजुस्त इन्द्रावज्वानो यज्वभिः स्पर्धमानाः " इति।।९।।

ननु सर्वस्व दाने स्वजीवनहानि लक्षणक्लेशः स्यादिति यदुक्तं तत्राह - **मनस्विन इति**। अर्थकामाय याचमानाय कामितार्थदानेनोपनयो गृहम्प्रति प्रस्थापनं यत्तेन दुर्गतिः दारिद्र्यलक्षणनाशो भवतीति यत्तत् कारुणिकस्य मनस्विन उदारस्य शोभनमिहामुत्रसुखसाधनं स्यात् भवादृशां ब्रह्मविदां सर्वस्वदानात् क्लेशः सुखहेतुरिति किम्पुनः किमु वक्तव्यम्। फलितमाह तत इति।।१०।।

अयं वटुरपि यः कश्चन न भवतीति दर्शयन् स्वस्य हरिविषयं ज्ञानं सूचयन्नाह - **यजन्तीति**। क्रतुभिः सङ्कल्पैः सप्ततन्तुसंज्ञैर्वा।।११।।

ब्रह्मतनुं ब्राह्मणं वटुम्।।१२।।

जिहासति त्यक्तुमिच्छति मा मां एनां गाम्।।१३।।

अश्रद्धितं अश्रद्धयोपेतं प्रहितः प्रेरितः, सत्यसन्धं सत्यप्रतिज्ञम्।।१४-१६।।

**विन्ध्यावलिस्तदाऽऽगत्य पत्नी जालकमालिनी।**
**आनिन्ये कलशं हैममवनेजन्यपां भृतम्।।१७।।**

**यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा।**
**अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः।।१८।।**

**तदाऽसुरेन्द्रं दिवि[1] देवतागणा गन्धर्वविद्याधरसिद्धचारणाः।**
**तत्कर्म सर्वेऽभिगृणन्त आर्जवं[2] प्रसूनवर्षैर्ववृषुर्मुदान्विताः।।१९।।**

**नेदुर्मुहुर्दुन्दुभयस्सहस्रशो गन्धर्वकिम्पूरुषकिन्नरा जगुः।**
**मनस्विनानेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयम्।।२०।।**

**तद्वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम्।**
**भूः खं दिशो द्यौर्विवराः पयोधयः तिर्यङ्नृदेवा मुनयो[3] यदासत[4]।।२१।।**

---

1. A,B,G,J,T °पि 2. H,V अस्तुवन् ; W आदरात् ; M,Ma आर्थ 3. A,B,G,J,M,Ma,T ऋषयो 4. M,Ma °सन्

**काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्य सदस्य एतत्।**
**ददर्श विश्वं त्रिगुणं गुणात्मके भूतेन्द्रियार्थाशयजीवयुक्तम्।।२२।।**

**रसामचष्टाङ्घ्रितलेऽथ पादयोः महीं महीधान्पुरुषस्य जङ्घयोः।**
**पतत्रिणो जानुनि विश्वमूर्ते रूर्वोर्गणं[1] मारुतमिन्द्रसेनः।।२३।।**

**सन्ध्यां विभोर्वाससि गुह्य ऐक्षत् प्रजापतीञ्जघने आत्म[2]मु[3]ख्यान्।**
**नाभ्यां नभः कुक्षिषु सप्तसिन्धून् उरुक्रमस्योरसि [4]चर्क्षमालाम्।।२४।।**

**श्रीध०** **विन्ध्यावलिरिति।** जालकं मुक्ताभरणविशेषस्तन्मालावती। अवनेजनीनामपां कलशम्। [5-]भृतं पूर्णम्[-5]।।१७-२०।।

**तदिति।** अवर्धत "[6-]यद्यद्भवान् वाञ्छति तत्प्रतीच्छ मे[-6]" (भाग:8.18-32) इति बलिना पूर्वमुक्तत्वात्। गुणत्रयमात्मनि यस्य तत् अत एव भूः खमित्यादयो यद्यस्मिन् आसत स्थितवन्तः।।२१।।

**काये इति।** ऋत्विगादि सहितो बलिस्तस्य हरेः काये एतद्विश्वं ददर्श।।२२।।

तदेव प्रपञ्चयति **रसामित्यादि**[7] पादोनैः सप्तभिः। [8-]रसामधस्तलम्[-8] मारुतं गणं वायुसङ्घम्। इन्द्रस्य सेनेव सेना यस्य सः। इन्द्रपदे स्थितत्वात्। [9-]अचष्ट ऐक्षत[-9]।।२३।।

सन्ध्यामिति। [10-]ऐक्षत् ऐक्षत[-10] आत्मा स्वयं बलिर्मुख्यो येषां तानसुरान्। ऋक्षमालां नक्षत्रपङ्क्तिम्।।२४।।

**वीर०** तदेव प्रपञ्चयति - **विन्ध्यावलिरिति।** बलेः पत्नी विन्ध्यावलिरिति प्रसिद्धा सा[11] जालकमालिनी जालकं मुक्ताभरणविशेषः, तन्मालिनी तदा आगत्यावनेजनीनां पादप्रक्षालनार्थानामपामद्भिः भृतं पूर्णं हैमं कलशमानिन्ये आनीतवती।।१७।।

ततो यजमानो बलिः तस्य भगवतो वामनस्य श्रीमत्पादद्वन्द्वं मुदा प्रक्षाल्य तदपः प्रक्षालनीः अपः विश्वपावनीर्मूर्ध्न्यवहत्।।१८।।

तदा दिवि स्थिता देवगणाः गन्धर्वादयश्च निर्भयास्सन्तः सर्वे तस्य बलेर्दानरूपं कर्माभितः प्रशंसन्तः आदरादसुरेन्द्रं बलिं[12] प्रसूनवर्षै मुदा युक्तास्सन्तो ववृषुः।।१९।।

दुन्दुभयः सहस्रशो नेदुः गन्धर्वादयो जगुः गानप्रकारमेव दर्शयति मनस्विनाऽनेन बलिना

1. M,Ma मरुता° 2. H,M,Ma,V स्वा° 3. M,Ma मुख्यम् 4. M,Ma ऋक्ष° 5- -5. H,V Omit 6- -6. A,B,J वाञ्छतः प्रतिगृह्यताम् 7. A,B,J °मिति 8- -8. B,H,J,V Omit 9- -9. H,V Omit 10- -10. A,B,J, Omit 11. W Omits सा 12. A,B,T Omit बलिं

कृतमितरैर्दुष्करं हि यतोऽयं विद्वान् त्रिपदे पादत्रयाय त्रिविक्रमाय वा जगत्रयमदात्।।२०।।

इत्येवं सर्वेष्वभिगृणत्सु सत्सु तत्,[1] यद्धरेरनन्तस्य वामनं रूपं तदद्भुतं यथा तथा अवर्द्धत वाच्छितं प्रतिगृह्यताम् इति बलिना पूर्वमुक्तत्त्वाल्लोकत्रयमपि वाच्छितं प्रतिग्रहीतुमवर्द्धतेति भावः। तदेधितं रूपं विशिनष्टि, गुणत्रयं गुणत्रयात्मकं जगदात्मनि स्वस्मिन्यस्य तत् अत एव भूः खमित्यादयो यस्मिन्नासत स्थिताः।।२१।।

तदा ऋत्विगादि सहितो बलिर्महाविभूतेस्तस्य भगवतः काये गुणत्रयपरिणामात्मक जगदाश्रयभूते भूतपञ्चकादियुक्तमेतत्कृत्स्नं विश्वं ददर्श।।२२।।

तदेव प्रपञ्चयति - **रसामिति** पादोनैः सप्तभिः पादतले रसां रसातलमधोलोकमचष्टापश्यत् तथा पादयोः महीं पुरुषस्य भगवतो जङ्घयोर्महीध्रान् पर्वतान् जानुनि पतत्रिणः विश्वमूर्तेर्भगवतः ऊर्वोर्मारुतं गणं वायुसङ्घमिन्द्रसेनो बलिः इन्द्रस्य सेनेव सेना यस्य स इन्द्रपुरे स्थितत्त्वादचष्टेत्यनुषङ्गः। ऐक्षदित्यपकर्षो वा।।२३।।

विभोर्वाससि वस्त्रे सन्ध्यां जघने आत्मा स्वयं बलिर्मुख्यो येषां तान् प्रजापतीनसुरान् नाभ्यां नभोऽन्तरिक्षं कुक्षिषु सप्तसिन्धून् समुद्रान् उरुक्रमस्य भगवतः उरसि नक्षत्रपङ्क्तिम्।।२४।।

**विज०** जालकैः कुड्मलैः कृता मालऽस्या अस्तीति जालकमालिनी "कोरक जालक कलिका कुड्मलम्मुकुलानि तुल्यानि" (हला.को.2-31) इति हलायुधः अपां भृतं पूर्णजलं अवनेजनी प्रक्षालनमिच्छन्ती।।१७,१८।।

आर्यं ज्ञानिनम् असुरेन्द्रम्।।१९।।

विद्वान्दानफलं शत्रुरिति वा स्वजातिरिपवे वामनाय जगत् त्रयमदादिति यत्तस्मादनेन मनस्विना बलिना सुदुष्करं कृतमित्युक्त्वा जगुः।।२०।।

भूखादयो यस्मिन् रूपे आसन् सावकाशं स्थिताः तद्वामनमणुतरं रूपमवर्धतेत्यन्वयः। गुणत्रयस्यात्माकृतिर्येन तत्तथा तत् " आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि। यत्नेऽर्केऽग्नौ मतौ वातेऽप्याखुः सूकरमूषिकौ " (वैज.को.6-1-6,7) इति यादवः।।२१।।

अर्थाः शब्दादयः आशयो[2] मनो बुद्धिर्वा।।२२।।

महीध्रान् पर्वतान्। इन्द्रसेनो बलिः।।२३।।

1. A,B,T Omit यत् 2. A,B, Omit मनः

स्वात्ममुख्यं भृत्येषु मुख्यं ऋक्षमालां नक्षत्रपङ्क्तिम्।।२४।।

हृद्यङ्ग! धर्मं स्तनयोर्मुरारेः ऋतं च सत्यञ्च मनस्यथेन्दुम्।
श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामादि[1] समस्तरेफान्[2]।।२५।।

इन्द्रप्रधानानमराम्भुजेषु तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि।
केशेषु मेघाञ्छ्वसनं नासिकायां अक्ष्णोश्च सूर्यं वदने च वह्निम्।।२६।।

वाण्याञ्च छन्दांसि रसे जलेशं भ्रुवोर्निषेधञ्च विधिञ्च पक्ष्मसु।
अहश्च रात्रिञ्च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम्।।२७।।

स्पर्शे च कामं नृप रेतसो[3]ऽम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम्।
छायासु मृत्युं हसिते च मायां तनूरुहेष्वोषधिजातयश्च[4]।।२८।।

नदीश्च[5] नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च।
प्राणेषु गात्रे स्थिरजङ्गमानि सर्वाणि[6] भूतानि ददर्श वीरः।।२९।।

**श्रीध० हृदीति।** अङ्ग हे राजन्! समस्तान् वेदान्[7] शब्दान्।।२५।।

**इन्द्रेति।** द्यौश्च द्याञ्च।।२६।।

**वाण्यामिति।** रसे रसने।।२७।।

**स्पर्श इति।** रेतसा[8] रेतसि। क्रमणेषु पादन्यासेषु ओषधिजातयः ओषधजातीश्च।।२८।।

**नदीरिति।** प्राणेष्विन्द्रियेषु।।२९।।

**वीर०** अङ्ग ! हे राजन्! हृदि धर्मं मुरारेः स्तनयोः। ऋतञ्च सत्यञ्च शब्दसत्यमर्थसत्यञ्च तदभिमानि देवतामित्यर्थः[9]। अथ मनसि चन्द्रमसं, वक्षस्यरविन्दं हस्ते यस्यास्तां श्रियं लक्ष्मीं, कण्ठे सामानि समस्तान् रेफांश्च शब्ददीन्।।२५।।

भुजेषु इन्द्रः प्रधानो मुख्यो येषां तान् सुरान् तस्य भगवतः कर्णयोः ककुभः दिशः मूर्ध्नि द्यौः द्याञ्च केशेषु मेघान् नासिकायां श्वशनं श्वासात्मकं वायुं, बाह्यवायोरुक्तत्वादक्ष्णोर्नेत्रयोः सूर्यं, वदने मुखे वह्निम्।।२६।।

1. A,B,G,J,M,Ma,T °नि 2. H,V वेदान् 3. H,V °तसा 4. M,Ma °ष्वोषधिवीरुधश्च 5. M,Ma °दा° 6. H,V,W हरेरनन्तस्य विलक्षणानि; M,Ma क्षणार्धमात्रेण विवृद्धमूर्तेः 7. A,B,J रेफाश्च 8. A,B,J °तसो 9. W °मितिभावः

वाण्यान्तु च्छन्दांसि वेदान्, रसने रसनेन्द्रिये, जलेशं वरुणं, भ्रुवोर्निषेधं निवृत्यात्मकं शास्त्रार्थं विधिं प्रवृत्त्यात्मकं शास्त्रार्थं च पक्ष्मसु अहश्च रात्रिञ्च परमपुरुषस्य ल्लाटे मन्युं अधरोष्टे लोभम्।।२७।।

स्पर्शे त्वगिन्द्रिये कामं, रेतसि जलं, पृष्टे त्वधर्मं, क्रमणेषु पादन्यासेषु यज्ञं, छायासुमृत्यु मन्तकं, हसिते मायां तनूरुहेषु लोमसु ओषधीजातीः।।२८।।

नाडीषु नदीः, नखेषु शिलाः बुद्धौ अजं बह्माणं देवगणानृषींश्च, प्राणेषु इन्द्रियेषु गात्रे चराचरात्मकानि भूतानि, [1]सर्वाणि परस्परविलक्षणान्यपश्यत्।।२९।।

**विज०** समस्तरेफान् सर्वशब्दान्।।२५,२६।।

रसे रसनायां मन्युं क्रोधाभिमानिनं देवम्।।२७।।

रेतस उद्भूतम्।।२८,२९।।

**सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग।**
**सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नु घोषम्।।३०।।**

**पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी।**
**[2]विद्याधरोऽसिः शतचन्द्रयुक्तः तूणोत्तमावक्षयसायकौ च।।३१।।**

**सुनन्दमुख्या उपतस्थुरीशं [3]स्वपार्षदमुख्याः सहलोक[4]पालैः।**
**स्फुरत्किरीटाङ्गदमीनकुण्डल श्रीवत्सरत्नोत्तममेखलाम्बरैः।।३२।।**

**मधुव्रतस्रग्वनमालया वृतो रराज राजन्भगवानुरुक्रमः। ***
**क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः।।३३।।**

**पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै [5]तृतीयाय तदीयमण्वपि।**
**उरुक्रमस्याङ्घ्रिरुपर्युप[6]र्यथो महर्जनाभ्यां तपसः परं गतः।।३४।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे विंशोऽध्यायः।।२०।।

**श्रीध० सर्वेति।** सर्वात्मनीत्यादिवाक्यान्तरम्। सुदर्शनमित्यादीनाम् ईशमुपतस्थुः इत्युत्तरेणान्वयः।।३०।।
**पर्जन्येति।** विद्याधर संज्ञोऽसिः [7-]शतचन्द्रं वर्म ते[-7]न युक्तः।।३१।।

1. W Omits सर्वाणि 2. M,Ma वै" 3. A,B,G,J,M,Ma,T Omit स्व 4. A,B,G,J,M,Ma,T पालाः। *An additional Indf half verse is found bracketed in H,V edns(शतह्रदायुक्तमहाघनो यथा)5.M,Ma यस्य 6.M,Ma" र्यथोदिवो 7- -7.A,B,J Omit

**सुनन्देति।** [1-]सुनन्दमुख्याः सुनन्दादयश्च ते एव पार्षदमुख्याः[-1] मीनकुण्डले मकरकुण्डले। स्फुरन्ति किराटादीनि यस्य सः।।३२।।

**मधुव्रतेति।** मधुव्रतानां स्रजो यस्यां तथा वनमालया श्रीवत्सादिभिश्चावृतो व्याप्तः। उरुक्रमत्वमेवाह - क्षितिमिति ।।३३।।

**पदमिति।** द्वितीयं पदं क्रमतो विक्षिपतस्त्रिविष्टपं तदीयं किञ्चिन्मात्रं जातम्। तृतीयाय तु न किञ्चिदपि। तत्र हेतुः - उरुक्रमस्याङ्घ्रिस्त्रिविष्टपात् उपर्युपरि गच्छन् महर्जन[2]लोकाभ्यां तपसश्च परं गतः सत्यलोकं गत इति।।३४।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
टीकायां विंशोऽध्यायः।।२०।।

**वीर०** इत्थं सर्वात्मनि कृत्स्नजगदाश्रयभूते भगवतीदं भुवनं विश्वं निरीक्ष्य अङ्ग हे राजन् सर्वेऽसुराः कश्मलं किमेतदित्याश्चर्यं दुःखं वा प्रापुः। [3]सुदर्शनचक्रमित्यादीनामीशं भगवन्तम् उपतस्थुरित्युत्तरेणान्वयः। चक्रं विशिनष्टि सुदर्शनाभिधं असह्यं तेजो यस्य धनुर्विशिनष्टि - शार्ङ्गाभिधं स्तनयित्नोरिव घोषो यस्य तत्।।३०।।

जलजं शङ्खं विशिनष्टि - पाञ्चजन्याभिधः पर्जन्यस्येव घोषो यस्य सः, गदां विशिनष्टि कौमोदक्यभिधा तरस्विनी बलवती। असिं खड्गं विशिनष्टि विद्याया आधारः विद्याधराभिधो वा तस्यैव नन्दक इति नामान्तरञ्च तं चन्द्राकाराणि मण्डलानि यस्य तेन चर्मणा खेटाख्येन युक्तः तूणोत्तमौ तूणश्रेष्ठौ विशिनष्टि- अक्षयसायकाभिधौ इदमन्वर्थं नाम।।३१।।

सुनन्दनः मुख्यः आदिर्येषां ते हरेः पार्षदाश्च लोकपालैः सहिता ईशमुपतस्थुः, ईशस्य समीपे स्व स्वस्थानेषु स्थितवन्त इत्यर्थः। तदा हे राजन्! उरुक्रमो भगवान् स्फुरद्भिः किरीटादिभिः मधुव्रतानां स्रक् पङ्क्तिः यस्यां तया वनमालया च आवृतो व्याप्तोऽलङ्कृत इति यावत्, रराज तत्र मीनाकारे कुण्डले रत्नोत्तमः कौस्तुभः, कुण्डलेत्यन्तस्य पृथक् पदत्वे, स्फुरन्ति किरीटादीनि यस्य सः श्रीवत्सादिभिः वनमालया च आवृतो रराजेत्यर्थः।।३२।।

उरुक्रमत्वमेवाह - बलेः सम्बन्धिनीं क्षितिं [4]भूमिं एकेन पदा शरीरेण नभोऽन्तरिक्षं बाहुभिर्दिशः विचक्रमे आक्रान्तवान्।।३३।।

1- -1. A,B,J Omit 2. B,H,J,V "नाभ्यां 3. W Omits सुदर्शन 4. A,B,T Omit

एवमाक्रम्य द्वितीयं पदं त्रिविष्टपं क्रमतः हरेः तृतीयाय पादाय तदीयं बलेः सम्बन्ध्यण्वपि वस्तु नासीत्। तत्र हेतुः त्रिविक्रमस्य अङ्घ्रिः द्वितीयः[1] त्रिविष्टपादुपर्युपरि गच्छन् महर्जनाभ्यां तपसश्च परं सत्यलोकं गत इति।।३४।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां विंशोऽध्यायः।।२०।।

**विज०** वैद्याधरो विद्याधरसम्बन्धी।।३०-३२।।

कियत्पर्यन्तं अवर्धत इति तत्राह - क्षितिमिति।।३३,३४।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे विंशोऽध्यायः।।२०।।

1. A,B,T Omit द्वितीयः

०००0०००

# एकविंशोऽध्यायः

## श्रीशुक उवाच

**[1]सत्यं समीक्ष्याब्जभवो नखेन्दुभिः हतस्वधामद्युतिरावृतोऽभ्यगात्।**
**मरीचिमिश्रा ऋषयो बृहद्व्रताः सनन्दनाद्या नरदेव योगिनः॥१॥**

**वेदोपवेदानियमा[2]न्यान्विताः तर्केतिहासाङ्गपुराणसंहिताः।**
**ये [3]चापरे योगसमीरदीपितज्ञानाग्निना रन्धितकर्मकल्मषाः॥२॥**

**ववन्दिरे यत्स्मरणानुभावतः स्वायम्भुवं धाम गता अकर्मकम्।**
**अथाङ्घ्रये प्रोन्नमिताय विष्णोः उपाहरत्पद्मभवोऽर्हणो[4]दकम्॥**
**समर्च्य भक्त्याऽभ्यगुणाच्छुचिश्रवा यन्नाभिपङ्केरुहसम्भवः स्वयम्॥३॥**

**धातुः कमण्डलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेन्द्र।**
**स्वर्धुन्यभून्नभसि [5]सा पतती निमार्ष्टि लोकत्रयं भगवतो विशदेवकीर्तिः॥४॥**

## श्रीश्रीधरस्वामिविरचिता भावर्थदीपिका

एकविंशे पदापूर्तिमिषेण बलिबन्धनम्। विष्णुना कृतमुत्कर्षं तस्य ख्यापयितुं जने॥

उरुक्रमस्याङ्घ्रिस्तपसः परं गत इत्युक्तं, ततः किं वृत्तं तदाह - **सत्यमिति**। सत्यं सत्यलोकं प्राप्तं तमङ्घ्रिं समीक्ष्याब्जभवोऽभ्यगात्। [6]तथा मरीचिमि[7]श्राः ऋषयश्चेति द्वयोरन्वयः। कथम्भूतोऽब्जभवः? हरेरङ्घ्रेर्नखा एवेन्दवस्तैर्हता स्वधाम्नो द्युतिर्यस्य तं, [8]तस्य लोकं[-8], स्वयञ्च तैरावृतश्छन्नः। हे नरदेव! बृहद्व्रता योगिनश्च॥१॥

**वेदेति**। अङ्गानि शिक्षादीनि। पुराणानि तत्संहिताश्च। योग एव समीरस्तेन दीपितं ज्ञानमेवाग्निस्तेन रन्धितं दग्धं कर्मकल्मषं कर्ममलं येषाम् ते॥२॥

**ववन्दिरे** इति। ते च सर्वे तमङ्घ्रिं ववन्दिरे। यस्याङ्घ्रेः स्मरणानुभावतः। अकर्मकं कर्मभिरप्राप्यम्। विष्णोरङ्घ्रये स्वयं यस्य नाभिपङ्केरुह सम्भवस्तस्य विष्णोरङ्घ्रिं [9]सम्यगभ्यर्च्य॥३॥

**धातुरिति**। लोकत्रयं [10]निमार्ष्टि पवित्रयति॥४॥

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

त्रिविक्रमस्याङ्घ्रिस्तपसः परङ्गत इत्युक्तम्। ततः किं वृत्तं तदाह - **सत्यमित्यादिना**। सत्यं सत्यलोकं

1. M,Ma स तं 2. A,B,G,J,T "मान्विताः यमाः तर्के" M,Ma मान्विताः तर्के" 3. M,Ma वा" 4. M,Ma "णादिकम् ।
5. H,V सम्प्रतिनिर्ममार्ष्टि 6. H,V तदा 7. A,B,J "श्रादयश्चेति 8- -8. A,B,J Omit 9. A,B,J समर्च्य 10. H,V निर्ममार्ष्टि

गतवन्तमङ्घ्रिं समीक्ष्य अब्जभवो ब्रह्मा तदङ्घ्रेः नखेन्दुभिः हता स्वधाम्नो द्युतिर्यस्य तादृशः आदरयुक्तोऽभ्यगात्। तथा मरीच्यादयः ऋषयः। हे नरदेव! ब्रह्मनिष्ठाः सनन्दनादयो योगिनश्च।।१।।

वेदादयः तदभिमानिदेवताः अन्ये च तल्लोकवासिनः योग एव समीरो वायुस्तेन दीपितेन ज्ञानाग्निना रन्धितं दग्धं कर्म पुण्यपापरूपं कर्म तदेव कल्मषं येषां ते तत्र नयान्विताः मीमांसन्यायोपेताः वेदोपवेदरूपा निगमाः, तत्र ऋगादयो वेदाः, आयुर्वेदादयः उपवेदाः, अङ्गानि शिक्षादीनि, पुराणानि [1]ब्राह्मादीनि, संहिता पाञ्चरात्रादयः, त एते तत्तदभिमानिनो देवगणाः मरीच्यादयश्च ये च अकर्मकं ज्ञानयोगप्रचुरं स्वायम्भुवं धाम सत्यलोकं गताः, तत्रोषितवन्तः, ते सर्वे ववन्दिरे, तमङ्घ्रिमिति शेषः। यत्स्मरणप्रभावतः यस्य भगवदङ्घ्रेः स्मरणप्रभावात् स्वायम्भुवं धाम गताः इत्यनेन विच्छिन्नभगवद्भक्तियोगानां केषाञ्चित् तन्निष्पत्तये प्राक्तनारब्धयोगप्रभावात् चतुर्मुखलोकप्राप्तिरित्यभिप्रेतम्। नत्विदं क्रममुक्त्यभिप्रायकं, तस्या अप्रामाणिकत्वादि[2]ति भावः। अथ शुचिश्रवाः विमलकीर्तिः पद्मभवो ब्रह्मा [3]स्वयं यस्य नाभिकमल[4]सम्भवः तस्य, विष्णोरङ्घ्रये प्रोन्नमिताय प्रकृष्टमूर्ध्वं प्रसृताय अर्हणादिक मर्घ्यादिकम् उपाहरत् समर्पितवान्। एवं सम्यगभ्यर्च्य भक्त्याऽभ्यगुणादस्तौत्।।२,३।।

तदा हे नरेन्द्र! धातुः पद्मजस्य कमण्डलुजलं तद्भगवत्पादयोः प्रक्षालनार्थं निक्षिप्तं सत् उरुक्रमस्य पादयोरवनेजनेन प्रक्षालनेन निमित्तेन पवित्रतया स्वर्धुनी द्युनदी अभूत्। सा स्वर्धुनी भगवतः कीर्तिरिव विशदा निर्मला नभसि ध्रुवमण्डले पतती, नभसोऽधः स्रवन्ती, लोकत्रयंनिमार्ष्टि पवित्रीकरोति।।४।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

सर्वस्वापहरणेपि भगवद्भक्तस्याण्वपि मनोदुःखं न स्यादिति दर्शयितुमुत्तराध्यायारम्भः, तत्रादौ ब्रह्मणोऽतिथेरागमने पादार्चनादिगार्हस्थ्य - धर्मप्रदर्शनप्रकारं वक्ति - **सत्यमिति**। हता स्वधाम्नः सत्यनाम्नो द्युतिर्यस्य स तथा, नखेन्दुभिः हरेरिति शेषः। आवृतः, परिवारैरिति शेषः। अभ्यगात्पाददेशमिति शेषः।।१,२।।

यस्य हरेः स्मरणाऽनुभावः निरन्तरोपास्तिप्रभावस्तस्मात् "अनुभावः प्रभावे स्यान्निश्चये भावसूचके" इति यादवः, स्वायम्भुवं स्वयम्भुवो ब्रह्मणो विद्यमानं धाम गृहं सत्यलोकं गताः मरीचिप्रधानास्तस्य अकर्मणा

1. W Omits ब्राह्मादीनि 2. W Omits इति भावः 3. A Omits स्वयं 4. A,B,T 'लादुत्पत्तिः

ज्ञानेन प्राप्यं यत्तत्पदं ववन्दिरे इत्यन्वयः। यस्य हरेस्तस्य विष्णोस्तत्कमण्डलुजलं स्वर्धुनी स्वर्गङ्गा नदी अभूत्। निमार्ष्टि शुद्धं करोति।।३,४।।

**ब्रह्मादयो लोकनाथाः स्वनाथाय समाहृताः।**
**सानुगा बलिमाजह्रुः [1-]संक्षिप्तात्मविभूतये[-1]।।५।।**

**तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः।**
**[2-]धूपदीपैः[-2]सुरभिभिर्लाजाक्षतफलो[3]त्तमैः।।६।।**

**स्तवनैर्जयशब्दैश्च [4-]तद्वीर्यमहिमा[-4]ङ्कितैः।**
**[5]नृत्तवादित्रगीतैश्च शङ्खदुन्दुभिनिस्स्वनैः।।७।।**

**जाम्बवा[6]नृक्षराजस्तु भेरीशब्दैर्मनोजवः।**
**विजयं दिक्षु सर्वासु महोत्सवमघोषयत्।।८।।**

**महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाच्ञया।**
**ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः।।९।।**

**[7-]दैत्या ऊचुः[-7]**

**न वा अयं ब्रह्मबन्धुः विष्णुर्मायाविनां वरः।**
**द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति।।१०।।**

**श्रीध०** **ब्रह्मादय** इति। संक्षिप्ता उपसंहृता आत्मविभूतिः स्वविस्तारो येन तस्मै। यथापूर्वं वामनरूपेण स्थितायेत्यर्थः।।५-८।।

[8-]**महीमति**। त्रिपदव्याजयाच्ञया[-8] त्रिपदविषया या [9-]व्याजयाच्ञा कपटयाच्ञा[-9] तया स्वभर्तुर्बलेर्महीं हृतां [10-]दृष्ट्वा अत्यमर्षितास्सन्तः[-10] ऊचुः।।९।।

किमूचुस्तदाह - **न वै** इति। सार्धैस्त्रिभिः।।१०।।

**वीर०** ततः संक्षिप्ता उपसंहृता आत्मविभूतिः स्वदेहविस्तारो येन तस्मै यथापूर्वं वामनरूपेण स्थिताय स्वनाथाय भगवते, लोकानां नाथाः सानुगाः ब्रह्मादयः बलिं पूजां तोयादिभिः [11]समाजह्रुः कृतवन्तः।।५।।

1- -1. M,Ma असंक्षिप्तात्मभूतये 2- -2. A,B,G,J,M,Ma,T धूपैर्दीपैः सु" 3. A,B,G,J,M,Ma,T फलाङ्कुरैः। 4- -4. M,Ma कीर्तिभिर्नियमा" 5. A,B,G,J,T नृत्य" 6. H,V,W "नृक्षाधिपतिः 7- -7. A,G,J,M,Ma,T Omit 8- -8. B,H,J,V Omit 9- -9. H,V याच्ञा 10- -10. H,V Omit 11. W. Omits समाजह्रुः

तत्र समर्हणैः तोयैः अर्घ्यादिजलैः सुरभिभिरिति स्रगादीनां विशेषणम्। * उत्कराः अङ्कुराः तैः।।६।।

स्तवनैः स्तोत्रैः [1-]भगवद्वीर्यमहिमाङ्कितैः[-1]।।७।।

[2]तदा ऋक्षाणामधिपतिः जाम्बवान् [3]मनोजवः [4]मनोवेगः आगत्य भेरीशब्दैः सर्वासु दिक्षु विजयसूचकं महोत्सवरूपं घोषं कारयामास।।८।।

त्रिपदविषया व्याजयाच्ञा कपटयाच्ञा तया हृतामपहृतां सर्वां भूमिं दृष्ट्वा सर्वे दैत्या दीक्षितस्य स्वभर्तुः [5]बलेः अग्र इति शेषः। ऊचुः स्वभर्तुर्मही हृतां दृष्ट्वेति वाऽन्वयः।।९।।

[6]तेषामुक्तिमेवाऽऽह - **न वा** इति [7-]सार्धैस्त्रिभिः[-7]। अयं वामनो ब्रह्मबन्धुर्द्विजो न भवति किन्तु मायाविनां श्रेष्ठो विष्णुरेव द्विजरूपेण तिरोधापितस्वरूपस्सन् देवानां कार्यं कर्तुमिच्छति।।१०।।

**विज०** असंक्षिप्ता सङ्कोचरहिता अपरिमितात्मभूतिः स्वरूपश्रीर्येन स तथा तस्मै। "भूतिः श्रीर्जन्म भस्मनि " इति च।। ५-९।।

अयं ब्रह्मबन्धुः न वै किंस्विद्विष्णुः।।१०।।

**अनेन याचमानेन शत्रुणा वटुरूपिणा।**
**सर्वस्वं नो हृतं भर्तुर्न्यस्तदण्डस्य बर्हिषि।।११।।**

**सत्यव्रतस्य सततं दीक्षितस्य विशेषतः।**
**नानृतं भाषितुं शक्यं [8]ब्रह्मण्यस्य दयावतः।।१२।।**

**तस्मादस्य वधो [9]धर्मो भर्तुः शुश्रूषणं [10]च नः।**
**[11-]श्रीशुक उवाच[-11]**
**इत्यायुधानि जगृहुर्बलेरनुचराऽसुराः।।१३।।**

**ते सर्वे वामनं हन्तुं [12]शूलपट्टिशपाणयः।**
**[13-]अनिच्छन्तो बलेराज्ञां[-13] प्राद्रवञ्जातमन्यवः।।१४।।**

**तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप।**
**प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः।।१५।।**

*फलोत्करैः इति वीरराघवसम्मतः पाठ इति लक्ष्यते। 1- -1. W Omits 2. A,B,T Omit तदा 3. A,B,T Omit मनोजवः 4. W Omits मनोवेगः 5. A,B,T Omit बलेः 6. A,B,T "माऽऽह 7- -7. W Omits 8. H,V ब्राह्मणस्य 9. H,V धर्म्यो 10. H,V परम् 11- -11. A,B,G,J,M,Ma,T Omit 12. H,V,W "ट्ट" 13- -13. A,B,G,J,M,Ma,T अनिच्छतो बले राजन्

**श्रीध०** **तस्मादिति**। अनुचराश्च ते असुराश्च।।११-१५।।

**वीर०** याचमानेन वटुरूपिणा अनेन विष्णुना बर्हिषि यज्ञे निमित्ते न्यस्तः त्यक्तो दण्डः दुरात्मविषयो येन तस्य नोऽस्माकं भर्तुः सर्वस्वमपहृतम्।।११।।

नेदमस्मद्भर्तुरनुचितं कृत्यं किन्तु वामनस्यैवेत्यभिप्रायेणाहुः सततं सत्यव्रतस्य तत्रापि विशेषतो दीक्षितस्य यज्ञदीक्षायां स्थितस्य ब्रह्मण्यस्य दयावतश्च भर्तुस्तेनानृतं भाषितुं न शक्यम्।।१२।।

तस्मादस्य वामनस्यैवानुचितकारित्वादस्य वध एव न्याय्यस्तदेवास्मद्भर्तुः परमधिकं शुश्रूषणम्। इतीत्थं वदन्तो बलेर्भृत्याः दैत्या आयुधानि गृहीतवन्तः ।।१३।।

सर्वे तेऽसुराः शूलादयः पाणिषु येषां ते बलेराज्ञामप्यनिच्छन्तो, जात उत्पन्नो मन्युरेषां ते वामनं हन्तुं प्राद्रवन् प्रदुद्रुवुः।।१४।।

हे नृप! तान् वामनस्याभिमुखमागच्छतः दैत्यान् दृष्ट्वा नन्दादयो विष्णोः पार्षदाः उत् उद्यतानि आयुधानि यैस्ते, प्रहस्य [1-]अहो, अस्मै पराक्रमं कर्तुमिच्छन्तीति परिहासं कृत्वेत्यर्थः[-1]। प्रत्यषेधन् निवारयामासुः।।१५।।

**विज०** ।।११-१५।।

**नन्दः सुनन्दोऽथ जयो विजयः प्रबलो[2]ऽबलौ।**
**कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट्।।१६।।**

**जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः।**
**सर्वे नागायुतप्राणाः [3]चमूस्ते जघ्नुरा[4]सुरीः।।१७।।**

**हन्यमानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः।**
**वारयामास संरब्धान्काव्यशापमनुस्मरन्।।१८।।**

**[5-]बलिरुवाच[-5]**

**हे विप्रचित्ते! हे राहो! हे [6]हेते श्रूयतां वचः।**
**मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत्।।१९।।**

1- -1. W Omits 2. A,B,G,J,M,Ma,T बलः 3. A,B,G,J,T चमूं ते; M,Ma स्वां स्वां ते 4. A,B,G,J,M,Ma,T °सुरीम्।
5- -5. A,B,G,J,M,Ma,T Omit 6. A,B,G,J,T नेमे

**यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये।**
**तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान्।।२०।।**

**श्रीध० हे विप्रचित्ते** इति। अर्थकृदनुकूलः।।१६-१९।।

**य** इति। पौरुषैस्तं कालमतिवर्तितुं पुमानीश्वरः समर्थो न भवति।।२०।।

**वीर०** सर्वे चैते नन्दादयो गजायुतबलाः नागायुतप्राणाः इति बलस्य न्यूनतानिवृत्तौ तात्पर्यम्। अतिशयित[1] बला इति भावः। [2-]नन्दादयः विष्णुपार्षदाः[-2] नागायुतप्राणा इति चमूविशेषणं वा। आसुरीः [3]सेनाः [4]जघ्नुर्हतवन्तः।।१६,१७।।

परमपुरुषपार्षदैः हन्यमानान् स्वकीयान् दैत्यान् दृष्ट्वा बलिः शुक्रस्य शापं " अचिरात् भ्रश्यसे श्रियः " (भाग. 8-20-15) इत्युक्तविधमनुस्मरन् अतीवक्रुद्धान् दैत्यान्[5] [6]वारयामास।।१८।।

वारणप्रकारमेवाऽऽह - **हे विप्रचित्ते** इति षड्भिः। हे विप्रचित्त्यादयः! मद्वचः श्रूयतां, युष्माभिरिति शेषः। किं तत्? युद्धं न कुरुत किन्तु ततो निवर्तध्वं नोऽस्माकं अयं कालोऽर्थकृदनुकूलो न भवति।।१९।।

हे दैत्याः! यः कालरूपो भगवान् सर्वभूतानां प्रभुः यदा दुःखदस्तदा तदुपपत्तये आनुकूल्याय सुखाय निमित्ताय चेति यावत्। पुमान् कालवश्यः पौरुषैः स्वकीयबलपराक्रमादिभिः अतिवर्तितुं नेश्वरो न समर्थः।।२०।।

**विज०** स्वां स्वां स्वस्य प्राप्तां असुरसेनाम्।।१६-१९।।

पौरुषैः पुरुषकारैः।।२०।।

**यो नो भवाय प्रागासीदभवाय दिवौकसाम्।**
**स [7]एष भगवानद्य वर्तते तद्विपर्ययम्[8]।।२१।।**

**बलेन सचिवैर्बुध्या [9]दुर्गैर्मन्त्रौषधादिभिः।**
**सामादिभिरुपायैश्च कालं नात्येति वै जनः।।२२।।**

**भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः।**
**[10]दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदन्ति नः।।२३।।**

1. A,B,T 'शयब" 2- -2. W Omits 3. A,B,T चमूः 4. A,B,T समाजघ्नुः 5. A,B,T Omit दैत्यान् 6. A,B,T add अपि
7. A,B,G,J,M,Ma,T एव 8. M,Ma यः। 9. M,Ma दुर्गम" 10. दैवेनेद्धैः; M,Ma दैवरुद्धा" ; W दैवोत्रद्धै"

**एतान्वयं विजेष्यामो यदि दैवं प्रसीदति।**
**तस्मात्कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते।।२४।।**

**श्रीशुक उवाच**

**पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः।**
**रसां निविविशू[1] राजन्विष्णुपा[2]रिषदार्दिताः।।२५।।**

**श्रीध० भवद्भिरिति।** हरेरनुचरा देवाः दैवेन इं[3]द्धैः समृद्धैर्भवद्भिः।।२१-२३।।

**एतानिति।** अर्थत्वायाऽऽनुकूल्याय।।२४,२५।।

**वीर०** यः कालरूपो भगवान् पूर्वमस्माकं भवाय सुखायासीत्। स एवाधुना तद्विपर्ययमस्माकं दुःखदो भूत्वा दिवौकसां देवानां भवाय वर्तते।।२१।।

अतो जनो बलादिभिः उपायैः कालात्मकमीश्वरं नात्येति नातिक्रामति। सचिवा मन्त्रिणस्तत्कर्मभिरिति भावः।।२२।।

कालप्रभावं पश्यतेत्याह - **भवद्भिरिति।** दैवेनोन्नद्धैः भवद्भिरेते हरे र्भगवत इन्द्रस्य वाऽनुचराः देवाः प्रायशो निर्जिताः त एवाधुना नोऽस्मान् युद्धे जित्वा नदन्ति सिंहनादान् कुर्वन्ति नन्दन्ति वा, धातूनामनेकार्थत्वात्।।२३।।

यदि दैवमस्माकं अनुकूलं भवति तर्हि तान् वयं विजेष्यामः, तस्मात् कालं प्रतीक्षध्वं, कम्? यः कालो नोऽस्माकमर्थत्वायानुकूल्याय भवति तं कालं प्रतीक्षध्वम्।।२४।।

एवं पत्युर्बलेर्निगदितं श्रुत्वा विष्णुपा[4]रिषदैः पीडिताः दैत्याः हे राजन्! रसां रसातलं निर्विविशुः।।२५।।

**विज०** रसां रसातलम् ।।२१-२५।।

**अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्र[5]भुचिकीर्षितम्।**
**बबन्ध वारुणैः पाशैर्बलिं सौ[6]त्येऽहनि क्र[7]तौ।।२६।।**

**हाहाकरो महानासीद्रोदस्योः सर्वतोदिशम्।**
**गृ[8]ह्यमाणेऽ[9]सुरपतौ विष्णुना प्रभविष्णुना।।२७।।**

1. M,Ma निर्वि" 2. A,B,G,J,M,Ma,T पार्षदताडिता 3. A,B,J ऋद्धैः 4. A,B,T पार्षदैः 5. M,Ma विभु 6. H,V सु° 7. B,M,Ma क्रतोः 8. H,V निगृह्य" 9. W दैत्यपतौ

**तं बद्धं वारुणैः पाशैर्भगवानाह वामनः।**
**नष्टश्रियं स्थिरं[1] प्राज्ञमुदारयशसं नृप।।२८।।**

**पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर।**
**द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय।।२९।।**

**यावत्तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः।**
**यावद्[2]वर्षति पर्जन्यः तावती भूरियं तव।।३०।।**

**श्रीध०** **अथेति।** विषु पक्षिषु राजत इति विराट्। प्रभोश्चिकीर्षितं ज्ञात्वा। अयमर्थः - अस्य सर्वस्वापहारेण ममेत्यभिमानं सन्त्याज्य[3] इदानीं देहस्वीकारेणाहङ्कारमपि त्याजयित्वा परमानुग्रहं कर्तुमिच्छति न चानेन तुल्योऽन्यः कोऽपि सत्यसन्धो धीरो वाऽस्तीति तद्यशःप्रख्यापनार्थं किञ्चित्[4]पातयितुमिच्छतीति प्रभोरभिप्रायं ज्ञात्वा तं बबन्धेति। सौत्येऽहनि सोमाभिषवदिने।।२६।।

**हाहाकार** इति। रोदस्योः द्यावापृथिव्योः ।।२७-२९।।

**यावदिति।** असौ सूर्यः।।३०।।

**वीर०** अथ विभोः वामनस्य चिकीर्षितं ज्ञात्वा विराट्विशेषेण राजत इति तथा, तार्क्ष्यसुतो गरुडः सौत्येऽहनि सोमाभिषवदिने वारुणैः पाशैः बलिं बबन्ध। विभोश्चिकीर्षितं ज्ञात्वा इत्यस्य अयमर्थः। अस्य सर्वस्वापहारेण ममेत्यभिमानं सन्त्याज्य इदानीं देहस्वीकारेण अहङ्कारमपि त्याजयित्वा परमानुग्रहं कर्तुमिच्छति न चानेन तुल्योऽन्यःकोऽपि सत्यसन्धो वीरो वाऽऽस्तीति तद्यशःप्रख्यापनाय किञ्चिद्यातयितुमपीच्छतीति प्रभोरभिप्रायं ज्ञात्वा तं बबन्धेति।।२६।।

प्रभविष्णुना सर्वशक्तिना विष्णुना दैत्यानां पत्यौ बलौ[5] गृह्यमाणे बध्यमाने सति रोदस्योः द्यावापृथिव्योः सर्वदिक्षु महान् हाहाकार आसीत्।।२७।।

अथ भगवान् वामनस्तं वारुणैः पाशैर्बद्धं[6] बलिं[7] उवाच। कथम्भूतम्? नष्टा श्रीः यस्य तं स्थिरचित्तं प्राज्ञं विवेकिनं उदारं विपुलं यशो यस्य तम्।।२८।।

उक्तिमेवाह - पदानी[8]त्यादिना यावदध्यायसमाप्ति। हे असुर! त्वया भूमे त्रीणि पदानि मह्यं दत्तानि

1. A,B,G,J,M,Ma,T "रप्रज्ञ" 2. A,B,G,J,M,Ma,T "द्वर्षति 3. H,V "जित 4. H,V "द्या" 5. A,B,T add नि
6. A,B,T Omit बलिं 7. A,B,T इत्युवाच। 8. A,B,T "ति या"

दास्यामीति प्रतिश्रुतानि, तत्र द्वाभ्यां पदाभ्यां सर्वा द्युलोकादिसहिता भूमिः क्रान्ता परिच्छिद्य[1] प्रतिगृहीता। अधुना तृतीयं पदं उपकल्पय देहि।।२९।।

यावदसौ सूर्यः किरणैस्तपति तथेन्दुर्यावदुडुभिः नक्षत्रैस्सह प्रकाशते तथा [2-]सपर्जन्यो अग्निः यावदास्ते[-2] तावत्येव हि त्वत्सम्बन्धिनीयं भूमिः।।३०।।

**विज०** विराट् पक्षिराट् क्रतोस्सौत्येऽहनि क्रतोः सोमपानदिवसे।।२६-२९।।

पदत्रयमितं भूरमिता अतः कथम्? तृतीयमुपकल्पय इत्युच्यते इति तत्राह - यावदिति।।३०।।

**पदैकेन मया क्रान्तो [3-]भूर्लोकः खं दिशस्तनोः[-3]।**
**स्वर्लोकस्तु द्वितीयेन पश्यतस्ते [4]स्वमात्मना।।३१।।**

**प्रतिश्रुतमदातुस्ते निरये वास इष्यते।**
**विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः।।३२।।**

**वृथा मनोरथस्तस्य [5]दूरः स्वर्गः पतत्यधः।**
**[6-]योऽर्थिनेऽर्थं प्रतिश्रुत्य नाऽलं तदुपपादने[-6]।।३३।।**

**विप्रलब्धो [7]ददानीति त्वयाऽहं चाढ्यमानिना।**
**[8]तदलीकफलं भुङ्क्ष्व [9]निरयं कतिचित्समाः।।३४।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे बलिनिग्रहो नाम एकविंशोऽध्यायः।।२१।।

**श्रीध० पदेति।** मया आत्मनेत्यन्वयः। व्यापिनेत्यर्थः। खं च दिशश्च तनोः तन्वा। ते खं त्वदीयं सर्वस्वम्।।३१।।

**प्रतिश्रुतमिति।** गुरुणा शुक्रेणानुमोदितस्सन्।।३२।।

एवमुक्तेऽपि निरयपरिहारार्थं [10]स्वर्गभ्रंशपरिहारार्थं च मनोरथं कुर्वन्तं प्रत्याह - वृथेति। यः [11]प्रतिश्रुतस्याप्रदानेन याचकं विप्रलम्भते तस्य मनोरथो वृथैव, स्वर्गश्च तस्य [12]दूरत एव, स चाधः पतत्येव।।३३।।

---

1. A,B,T परि 2- -2. A,B,T पर्जन्यो मेघो यावद्वर्षति 3- -3. M,Ma के विवरैःसह 4. M,Ma मयात्म 5. A,B,G,J,T दूरे; M,Ma दूरं 6- -6. A,B,G,J,T प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते।; M,Ma विप्रायप्रतियोश्रुत्य न तदर्पयते कथित्। M,Ma प्रकाशयोः अत्र श्लोके पूर्वार्ध उत्तरार्धयोः व्यत्ययो वर्तते। 7. A,B,G,J,M,Ma,T दामी" 8. A,B,G,J,M,MaT तद्व° 9. H,V "ये 10. H,V स्वर्गात् 11. A,B,J "स्याऽदा" 12. A,B,J दूर

**विप्रलब्ध** इति। त्वया चाहं विप्रलब्धः तस्मात् [1] व्यलीकस्यानृतस्य फलं [2] निरये भुङ्क्ष्वेत्यर्थः।।३४।।

इति श्रीमद्भागवते महापुराणे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
अष्टमस्कन्धे एकविंशोऽध्यायः।।२१।।

**वीर०** सोऽयं कृत्स्नो भूर्लोकः [3] मया आत्मनैकेनैव पदेन क्रान्तः खं दिशश्च तनोः तन्वा क्रान्ताः तथा ते तव पश्यतस्सत एव [4] स्वं स्वकीयः स्वर्लोकस्तु द्वितीयेन पदेन क्रान्तः।।३१।।

प्रतिश्रुतं तृतीयं पदमदातुस्तव नरके एव निवास इष्यते तस्मात् प्रतिश्रुताऽदानात् गुरुणा शक्रेणाऽनुमोदितश्च च शब्दो हेत्वर्थः। गुरुणा शप्तत्वात् चेत्यर्थः। [5] निरयं [6] नरकं प्रविश।।३२।।

एवमुक्तेऽपि निरयपरिहारार्थं स्वर्गात् भ्रंशपरिहारार्थं च मनोरथं कुर्वन्तं प्रत्याऽऽह - **वृथेति**। यः पुमान् प्रतिश्रुत्य तदर्पितं प्रतिश्रुतं नार्पयते न ददाति तस्य मनोरथः प्रायशो व्यर्थ एव स्वर्गश्च तस्य दूर एव स चाधःपतत्येव।।३३।।

त्वया च आढ्यमात्मानं मन्यत इति तादृशः तेनाधुना ददामीत्येवं प्रति श्रुतवताऽहं विप्रलब्धो वञ्चितः [7] तस्माद्व्यलीकफलमनृतफलरूपं नरकं कतिचित्समाः संवत्सरान् भुङ्क्ष्व।।३४।।

इति श्रीमद्भागवते महापुराणे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
अष्टमस्कन्धे एकविंशोऽध्यायः।।२१।।

**विज०** अस्तु भूमेरियत्ता, तथापि लक्षणशास्त्रैर्लक्षितपदस्याणुत्वेन तन्मितत्वेन किमनुपपन्नमित्या शङ्क्येदं पदमलौकिकमित्याशयेनापूर्तिमाह - **पदेति**।।३१।।

आत्मना प्रतिश्रुतं स्ववित्तमदातुस्तव यतो नष्टप्रतिज्ञस्तस्मात्।।३२।।

किञ्च, यः प्रतिश्रुतं न पूरयति तस्य स्वर्गमाप्नुवानीति मनोरथो मृषा भवति। प्रतिश्रुतैकदेशदानेनापि मनोरथः स्यादिति चेत्सत्यं, तत्फलं स्वर्गं प्राप्नोति पुनस्ततोऽदानदोषेण निकृष्टां तिरश्चां योनिमाप्नोतीत्याह - दूरमिति। अधःपतित्वा दूरं यातीत्यर्थः।।३३।।

---

1. H,V अलीकफलं 2. A,B,J निरयं 3. A,B,T add सः 4 A,B,T स्वः 5. A,B,T Omit निरयं 6. W Omits नरकं 7. A तस्मा वञ्च°

प्रतिश्रुतैकदेशदानात्फलप्राप्तिः स्यादित्यभ्युपगम्य चेदमुक्तं तव तदपि न स्यात्किन्तु निरयनिवास एव विप्रलम्भदोषादित्याह - विप्रलब्ध इति। तत्तस्माद्व्यलीकफलमनृतफलम्।।३४।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे एकविंशोऽध्यायः।।२१।।

oooOooo

# द्वाविंशोऽध्यायः

**श्रीशुक उवाच**

**एवं विप्रकृतो राजन्! बलिर्भगवताऽसुरः।**
**भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाऽविक्लबं वचः।।१।।**

**बलिरुवाच**

**यद्युत्तमश्लोक! भवान्ममेरितं वचो[1] व्यलीकं[2] सुरवर्य! मन्यते[3]।**
**करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम्।।२।।**

**बिभेमि नाहं निरयात्पदच्युतो न पाशबन्धाद्व्यसनाद्दुरत्ययात्।**
**नैवार्थकृच्छ्राद्भवतो विनिग्रहात् असाधुवादाद्भृशमुद्विजे यथा।।३।।**

**पुंसां श्लाघ्यतमं[4] मन्ये दण्डमर्हत्तमार्पितम्।**
**यं न माता पिता भ्राता सुहृदश्चाऽऽ[5]दिशन्ति हि।।४।।**

**त्वं नूनमसुराणां नः पारोक्ष्यः[6] परमो गुरुः।**
**यो नोऽनेकमदान्धानां विभ्रंशं[7] चक्षुरादिशत्[8]।।५।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वाविंशे तु प्रसन्नस्सन् प्रस्थाप्य सुतलं बलिम्। दत्त्वा वरान्हरि नूनं[9] गत्वा[10] तद्द्वारपोऽभवत्।।

समर्पिततनूवित्तनिर्मलाचलभक्तिभिः[11]। चलितो[12] बलिनाचित्रं स्वमेवार्पयदच्युतः।।

**एवमिति**। विप्रकृतोऽपकृतः। भिद्यमानः सत्याच्चाल्यमानोऽपि[13][14] निश्चलचित्तो बलिः।।१।।

**यदीति**। हे उत्तमश्लोकेति [15-]कटाक्षप्रार्थनासूचकः[-15] मम वच ईरितं प्रतिश्रुतं न तावदलीकम्[16]। त्वया कपटेन वामनतया भिक्षित्वा रूपान्तरस्याविष्कृतत्वात्। एवमपि यदि भवान् अलीकम्[17] अनृतं[18] मन्यते तथापि ऋतमेवाहं करोमि। मदुक्तं विप्रलम्भनं न भवतु। मे शीर्ष्णि निजं तृतीयं पदं कुरु, न च द्वाभ्यां विश्वं क्रान्तवतो, मे तव शिरः पदपर्याप्तं[19] न भवतीति मन्येथाः। वित्तेन चेत् पदद्वयं जातं तर्हीदमधिकमेव स्यात्। वित्तादपि वित्तवतोऽधिकत्वादिति भावः।। २।।

---

1. A,B,G,J,M,Ma,T ब्य" 2. M,Ma सुरर्षभ! 3. M,Ma से 4. A,B,G,J,M,Ma,T तमं 5. M,Ma "श्च दि" 6. M,Ma "क्ष्यं 7. M,Ma तद्भ्रंशं 8. M,Ma "श: 9. A,B,J न्यून 10. A,B,J मत्वा 11. A,B,J "त: 12. A,B,J छलि" 13. B,J सत्वा 14. A,B,J मान: ।।१।। 15- -15. A,B,J कटाक्ष: 16. A,B,J "द्य" 17. A,B,J "व्य" 18. A,B,J Omit अनृतं 19. A,B,J पाद

ननु च " आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि। आत्मानं सततं रक्ष्ये द्वारैरपि धनैरपि (मनुस्मृ.7-213) इत्यादिवचनात् आत्मभयपरिहाराय सर्वस्वं त्यज्यते, त्वं तु कुतो भीतस्सन् आत्मानं न[1] पासि अत आह - **बिभेमीति**। [2-]पदच्युतः स्थानभ्रष्टः[-2] असाधुवादादपकीर्तेर्यथाऽहं भृशमुद्विजे निरयादिभ्यो, न तथा बिभेमि। [3-]व्यसनात् दुःखात् अर्थकृच्छ्रात् दारिद्र्यात् निग्रहात् दण्डादपि[-3]।।३।।

ननु मया [4-]कृतात् निग्रहात्[-4] तव अपकीर्तिर्जातैव, नैवेत्याह - **पुंसामिति**। अर्हत्तमैः अर्पितम्, यं[5] दण्डं मात्रादयोऽपि न ह्यादिशन्ति नैवार्पयन्ति। हितैषिणा त्वया निगृहीतोऽहं श्लाघ्य एवास्मीति भावः।।४।।

नन्वहं देवानां हितैषी न असुराणाम्, तत्राह - त्वं नूनमिति। पारोक्ष्यः शत्रुच्छलेन वर्तमानः ।।५।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं भगवतोपालब्धो बलिः तं उवाचेत्याह मुनिः - **एवमिति**। हे राजन्! इत्थं भगवता विप्रकृतः विप्रलब्धः भिद्यमानः सत्याच्चाल्यमानोऽपि बलिरभिन्नमचलितं मनो यस्य सः, अविक्लवमदीनं गम्भीरं [6-]वचो भगवन्तं प्रत्याह[-6]।।१।।

वच एवाह - **यद्युत्तमश्लोकेत्यादिभिः** दशभिः। हे उत्तमश्लोक? मे मयोक्तं वचो यदि यद्यपि भवान् व्यलीकमनृतं मन्यते तथापि हे सुरर्षभ! तत्सत्यमेवाहं करोमि तदुक्तं प्रलम्भनं न भवतु मम शीर्ष्णि तृतीयं निजं पदं निधेहि।।२।।

सर्वतो रक्षणीयमात्मानं मह्यं समर्पयन् न बिभेषि किमित्यत आह - **बिभेमीति**। निरयादिभ्यो नाहं तथा बिभेमि, कथम्? यथा असाधुवादादनृतवदनादपकीर्तेर्वा भृशमुद्विजे तत्र पदच्युतिः स्थानभ्रंशः दुरत्ययादनतिक्रमणीयात् व्यसनात् दुःखात् अर्थकृच्छ्रात् अर्थव्ययात्।।३।।

ननु, मया निगृहीतस्य तवाकीर्तिरेव नेत्याह - **पुंसामिति**। योग्यतमेन अर्पितं कारितं दण्डमहं पुंसां श्लाघ्यतमं यशस्करमेव मन्ये हि यस्माद्यं दण्डं मात्रादयोऽपि मयि नैवार्पयन्ति।।४।।

किञ्च त्वमस्माकं अनुग्रहीतैवेत्याह - **त्वमिति**। त्वमस्माकं पारोक्ष्यो गरुरसमक्षं हितकारी कथमेतत् ज्ञातम्? इत्यत आह - यो भवाननेकैः शौर्यवीर्यादिप्रयुक्तैर्मदैरन्धानामस्माकं विभ्रंशं तन्मदापनोदकं चक्षुरिवाऽदिशत्।।५।।

---

1. A,B,J अर्पयसि 2- -2. B,H,J,V Omit 3- -3. B,H,J,V Omit 4- -4.A,B,J निगृहीतत्वात् 5. H,V Omit यं
6- -6. W वचआह

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

बलिः स्वात्मनोऽलीकं प्रकारान्तरेण परिहर्तुमाह - एवमिति ।।१।।

प्रलम्भनं वञ्चकफलम्। विप्रलम्भनं कथं न भवेदिति तत्राह - पदमिति ।।२।।

स्वात्मनो ह्रीलक्षणसामग्रीमाह - बिभेमीति ।।३।।

अभिन्नात्मत्वं दर्शयति - पुंसामिति ।।४।।

पारोक्ष्यं साक्षात्कारमन्तरेण तस्य मदस्य भ्रंशो येन तत्तथा ।।५।।

**यस्मिन् वैरानुबन्धेन रूढेन विबुधेतराः।**
**बहवो लेभिरे सिद्धिं याम्[1] हैकान्तयोगिनः ।।६।।**

**तेनाऽहं निगृहीतोऽस्मि भवता भूरिकर्मणा।**
**बद्धश्च वारुणैः पाशैः नानुव्रीडे[2] न च[3] व्यथे ।।७।। ***

**पितामहो मे भवदीयसम्मतः प्राह्राद आविष्कृतसाधुवादः।**
**भवद्विपक्षेण विचित्रवैशसं सम्प्रापितस्त्वत्परमः स्वपित्रा ।।८।।**

**किमात्मनाऽऽनेन जहाति योऽन्ततः[4] किं रिक्थहारैः स्वजनाख्यदस्युभिः।**
**किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ।।९।।**

**इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पदाम्बुजम्[5]।**
**ध्रुवं प्रपेदे ह्यकुतोभयं जनात् भीतः स्वपक्षक्षपणस्य सत्तमः ।।१०।।**

**श्रीध०** शत्रुत्वं पुनर्भक्तानिव अस्माननुग्रहीतुमेवेत्याह - **यस्मिन्निति**। उ अहो! ह प्रसिद्धौ[6] ।।६।।

अतो नात्र मम लज्जा नापि दुःखमित्याह - **तेनेति**। तेन गुरुणा भवता ।।७।।

किञ्च योऽयं दण्डरूपो ममानुग्रहस्त्वया कृतः, स तु त्वद्भक्तपौत्रत्वेन नत्वहं अनुग्रहस्य पात्र मित्याशयेनाह - **पितामह** इति। भवदीयानां सम्मतः। यतः आविष्कृतः साधुवादो यस्य। त्वमेव परमः आश्रयो यस्य सः। अतो भवतो विपक्षेण विद्विषा हिरण्यकशिपुना विचित्रं वैशसं हिंसां सम्प्रापितोऽपि देहादीनामसारतां

---

1.M,Ma यामिहै 2. A,B,G,J,T नातिव्रीडे , M,Ma नव्रीडे 3.M,Ma वि° *The following additional verses are found in H,V editions. (सुशोभनमिदं मन्ये मम स्लाघ्यतमं प्रभो! यो मा बबन्ध चांद्धर्तुं भूत्वा मे ह्यक्षिगोचरः 4. M,Ma यो मुदं 5.A,B,G,J,M,Ma,T पादपद्मम्। 6.A,B,J प्रसिद्धम्

निश्चित्याकुतोभयं ध्रुवञ्च भवतः पादपद्ममेव प्रपेदे। अथ तस्मादहमपि दैवेन तस्यैव भाग्येन तवान्तिकं नीत इति चतुर्णामन्वयः।।८।।

**किमिति।** अन्ततः आयुषो अन्ते। रिक्थहारैः पुत्रैः। इह गेहेषु केवलमायुषो व्यय एव, न तु सुखं किञ्चित्।।९।।

**इत्थमिति।** स प्रसिद्धो महान् स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्यापि।।१०।।

**वीर०** किञ्च यस्मिन् त्वयि वैरानुबन्धेन बहवो दैत्याः सिद्धिं लेभिरे। कां सिद्धिम्? यां हि सिद्धिमेकान्तयोगिनोऽनन्यप्रयोजनत्वद्भक्तियोगनिष्ठा लभन्ते।।६।।

तेन एवम्भूतेन भूरिकर्मणा अचिन्त्यविविधविचित्रचेष्टितेन भवता निगृहीतो वारुणैः पाशैर्बद्धश्चाप्यहं न व्रीडे न[1] लज्जे न दुःख्यामि च त्वत्कृतनिग्रहबन्धनयोः नितरां मम यशस्करत्वादिति भावः।।७।।

किञ्चास्मत्पितामहः प्रह्लादः सद्गुणाश्रयः शरीरतदनुबन्ध्यादिषु हेयतां निश्चित्य परमपुरुषार्थरूपं त्वत्पादारविन्दं शरणं गतः तथा अहमपि दैवात्त्वत्समीपं नीतः त्वां प्रपद्य इत्याह - पितामह इत्यादिभिश्चतुर्भिः। मे पितामहः प्रह्लादः भवदीयानां भागवतानां सम्मतः, अत एवाविष्कृतः साधुवादः कीर्तिर्यस्य सः स्वपित्रा भवतो विपक्षेण शत्रुणा हिरण्यकशिपुना [2-]विचित्रवैशसं[-2] नानाविधं दुःखं सम्प्रापितोऽपि त्वमेव परमः सर्वविधबन्धुः निरतिशयपुरुषार्थश्च यस्य तादृशः [3]इत्यर्थः।।८।।

मरणशीलस्य पुंसः आत्मादिभिः देहादिभिः किम्? न किमपि न कोपि पुरुषार्थः। किन्तु केवलमायुषो व्यय एवेति निश्चितवानिति शेषः। अन्यथा पुनः पितामह इत्यस्यानन्वयापत्तेः। यः अन्ततो जहाति देहिनं तेनाऽनेनाऽत्मना देहेन किमित्यन्वयः। रिक्थहारैः दायादैः स्वजन इत्याख्या व्यवहारो येषां तैः दस्युभिः दस्युतुल्यैः स्वजनैरित्यर्थः। संसृतेः हेतुभूतया भार्यया [4]किम्।।९।।

सोऽस्मत्पितामहो महान् सद्गुणाश्रयोऽगाधबोधः अपरिमितज्ञानसम्पन्नः सत्तमो भागवतश्रेष्ठः प्रह्लादः संसारिजनसङ्गाद्भीतस्सन् स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्यापि भवतः नास्ति कुतोऽपि भयं यस्मात्तत्पादपद्मं ध्रुवं नित्यपुरुषार्थरूपं प्रपेदे शरणं जगाम।।१०।।

**विज०** ततो वैरानुबन्धेन वैरयुतस्नेहेन।।६-७।।

ननु कुतो व्यथाद्यभावः इत्याशङ्क्य श्रुतप्रह्लादमाहात्म्यानुस्मरणादित्याशयेनाह - पितामह इति।

1.A,B,T नातिलज्जामि 2--2.W Omits 3.W Omits इत्यर्थः 4.W Omits किम्?

साधुरिति वादः साधुवादः स्तुतिलक्षणः विचित्रवैशसं नानाहिंसनं त्वमेव परमो यस्य स तथा।।८।।

**श्रीप्रह्लादः** कया चर्यया अतिप्रियदेहादिकमुत्सृज्य श्रीहरिचरणैकशरणमापेति तत्राह - **किमिति।** यो येनात्मना देहेन मुदं जहाति तद्वियोगलक्षणमरणेनेति शेषः। तस्य पुंसः तेन देहेन किम्? न किमपि प्रयोजनमित्यर्थः। रिक्थहारैः पितृधनस्वीकारयोग्यैरेभिरायुषो व्ययो नाश इति यत्तस्मात् दुर्जन सङ्गाद्धीतः स्वपक्षोऽसुरजनः तस्य नाशकस्य।।९-१०।।

**अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः।।**[1]
**इदं कृतान्तान्तिकवर्ति जीवितं यथाऽध्रुवं स्तब्धमतिर्न बुध्यते।।११।।**

**श्रीशुक उवाच**

**तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः।**
**आजगाम कुरुश्रेष्ठ! राकापतिरिवोत्थितः।।१२।।**

**तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम्।**
**प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं समैक्षत।।१३।।**

**तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत्।**
**ननाम मूर्ध्नाऽश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह।।१४।।**

**स तत्र हाऽऽसीनमुदीक्ष्य सत्पतिं हरिं[2] सुनन्दाद्यनुगैरुपासितम्।**
**उपेत्य भूमौ शिरसा महमना[3] ननाम मूर्ध्ना पुलकाश्रुविक्लवः[4]।।१५।।**

**श्रीध० अथेति।** [5-]अथ तस्मात् अहमपि दैवेन तस्यैव भाग्येन तव अन्तिकं नीतः[-5]। प्रसभं बलात्त्याजिता श्रीर्यस्य। यया श्रिया स्तब्धमतिः सन् पुमानिदं जीवितमध्रुवं न बुध्यते। कथम्भूतम्? कृतान्तस्यान्तिकवर्ति मृत्योः सन्निहितम्।।११।।

**तस्येति।** राकापतिः पूर्णेन्दुः।।१२।।

**तमिति।** अञ्जनत्विषं श्यामम्।।१३।।

**तस्मा** इति। स्वकृताहङ्कारादिरूपापराधस्मरणेन सव्रीडं नीचीनं अधोमुखं यस्य सः।।१४।।

**स** इति शिरसा नमन्नेवोपेत्य मूर्ध्ना ननाम। बलेस्तत्कृतमनुग्रहं दृष्ट्वा पुलकैरश्रुभिश्च, विक्लवो विह्वलः।।१५।।

---

1.W त" 2. A,B,G,J,M,Ma,T सुनन्दन" 3. M,Ma तरसा 4. M,Ma विह्वलः 5- -5. A,B,J Omit

**वीर०** तथा अहमपि दैवात्प्रसभं बलात्त्यजिता श्रीर्यस्य तादृशः आत्मनो मम रिपोस्तवान्तिकं समीपं नीतस्त्वत्पादपद्मं प्रपद्य इति शेषः। श्रियं विशिनष्टि, यया श्रिया स्तब्धमतिरपहृतज्ञानः पुमान् कृतान्तस्य मृत्योः सन्निधानवर्त्यपीदं जीवितमध्रुवमस्थिरं न बुध्यते न मन्यते।।११।।

तस्य बलेरित्थं भाषमाणस्य सतः हे कुरुश्रेष्ठ! उदितो राकापतिश्चन्द्र इव प्रकाशमानो भगवत्प्रियः प्रह्लादस्तत्राजगाम।।१२।।

तमागतं स्वपितामहं प्रह्लादम् इन्द्रसेनो बलिः सम्यगैक्षताऽपश्यत्। कथम्भूतम्? श्रिया कान्त्या विराजमानं कमलवदायते ईक्षणे यस्य प्रांशुं निर्मलमञ्जनत्विषं श्यामलं प्रलम्बावाजानुलम्बौ बाहू यस्य तं सुभगं सुन्दरम्।।१३।।

तस्मै प्रह्लादाय पूर्ववदर्घ्यादिपूर्वकमर्हणं न चक्रे, तत्र हेतुः - वारुणैः पाशैर्यन्त्रितः बद्धः किन्तु केवलं मूर्ध्ना ननाम नमस्कृतवान्। ततोऽश्रुभिर्विलोले लोचने यस्य सः सव्रीडं नीचीनमधः कृतं मुखं यस्य तादृशो बभूव।।१४।।

ततः स महामनाः प्रह्लादः सतां भागवतानां पतिं सुनन्दनन्दनादिभिः[1] पार्षदैः स्सेव्यमानं तत्रोपविष्टं हरिं वामनं निरीक्ष्य पुलकैरश्रुभिश्च विक्लबो विह्वलस्सन् उपेत्य शिरसा भूमौ नमस्कृतवान्। उक्तवांश्चेति[2] शेषः।।१५।।

**विज०** ममाप्ययमेव निश्चय इति भावेनाह - अथेति असुरजातित्वात् मम शत्रुभूतस्य त्वया त्याजितराज्यश्रीः बुभूषुणेयं श्रीर्बलादपि त्याज्या अन्यथा अनर्थयोग एवेति भावेनाऽह - **इदमिति**। यथा श्रिया स्तब्धमतिः कृतान्तान्तिकवर्तीदं जीवितं न जानातीत्यन्वयः।।११।।

शुकः प्रह्लादस्य भक्त्यतिशयं दर्शयितुं बलेः स्तवनेव भगवद्भक्तिविशेषमाज्ञायागमनमिति तदागमनमाह-शुक इति।।१२।।

प्रांशुमुन्नतम्।।१३।।

सव्रीडत्वेन नीचीनमर्वाचीनं मुखं यस्य स तथा।।१४-१५।।

**प्रह्लाद उवाच**

**त्वयैव दत्तं पदमैन्द्रमूर्जितं[3] हृतं तदेवाऽद्य[4] तथैव शोभनम्।**
**मन्ये महानस्य कृतो ह्यनुग्रहो[5] विभ्रंशितो यच्छ्रिय आत्ममोहनात्।।१६।।**

---

1. W सुनन्दादिभिः 2. A,B,T उवाचचेति 3. H,V मच्युतं , W मर्षितो 4. M,Ma त्वयैवाऽऽद्य 5. M,Ma "तोप्य"

**यया हि विद्वानपि मुह्यते यतः[1] तत्को[2] विचष्टे गतिमात्मनो यथा।**
**तस्मै नमस्ते जगदीश्वराय वै नारायणायाऽखिल[3]कर्मसाक्षिणे।।१७।।**

**श्रीशुक उवाच**

**तस्याऽनुशृण्वतो राजन् प्रह्लादस्य कृताञ्जलेः।**
**हिरण्यगर्भो भगवान् उवाच मधुसूदनम्।।१८।।**

**बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला।**
**प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽ[4]श्रुमुखी नृप।।१९।।**

## विन्ध्यावलिरुवाच

**क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः।**
**कर्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः।।२०।।**

**श्रीध० त्वयेति।** न ह्यैन्द्रं पदमेतदीयं त्वयाऽपहृतं किं तु स्वीयमेव, पुनः स्वीकृतं, तच्च शोभनमेव कृतम्। तत्र हेतुः - मन्य इति। यद्यस्माच्छ्रीरेव यदा[5]त्मनो मोहनं तस्माद्विभ्रंशितः।।१६।।

विमोहनत्वमेवाह - **ययेति।** यया श्रिया विद्वानपि यतः संयतोऽपि मुह्य[6]ति त[7]त्तस्यां सत्यां कोऽन्यः पुमानात्मनो गतिं तत्त्वं यथावद्विचष्टे पश्यति तस्मै महाकारुणिकाय।।१७।।

तस्य प्रह्लादस्यानुश्रुण्वत उवाचेति किञ्चिद्वक्तुं प्रवृत्त इत्यर्थः।।१८।।

तदैव विन्ध्यावलिरपि वक्तुं प्रवृत्ता, ताञ्च सम्मानयन् हिरण्यगर्भः क्षणं तूष्णीं स्थितः। अतः तस्या एव वाक्यं प्रथममवतारयति **बद्धं वीक्ष्येति**।।१९।।

**क्रीडेति।** त्रिजगतः कर्तुः प्रभोः पालकस्य अस्यतः संहर्तुश्च ईश्वरस्य तवान्ये किमावहन्ति किं समर्पयन्ति। त्वयाऽवरोपितः कर्तृवादः कर्तारः स्वतन्त्रा वयमिति वादमात्रमपि येषां ते।[8]अयं भावः - लोकत्रयं [9]समर्पितं तृतीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याविष्कारेण ब्रुवन्नयं कुबुद्धिर्निर्लज्जश्च यतस्त्वमेव सर्वस्यापि स्वामी, अतो मन्दबुद्धिमेनं केवलं कृपया विमुच्य पालयेति।।२०।।

**वीर० तदेवाह - त्वयैवेति** द्वाभ्याम्। ऐन्द्रं पदं त्वयैवाऽस्मै दत्तं कुतः? यतस्त्वं तत्प्राप्तिसाधनेन विश्वजिता यागेनार्चितः आराधितः यद्दत्तं तदिदानीमपहृतं तच्च शोभनमेव कृतं, शोभनत्वमेव व्यनक्ति - **मन्य**

---

1. M,Ma जन: 2. H,V तां को वि° ; M,Ma तत्कोऽपि:, W ततो वि° 3. A,B,G,J,M,Ma,T लोक 4. A,B,G,J,M,Ma,T °वाष्पमुखी
5. A,B,J °त्ममो° 6. H,V °ते 7. H,V Omit तत् 8. Adds तथापि त्यक्तलज्जाः तत्र स्वाम्यं कुर्युः। 9. A,B,J मयार्पितं

इति। यद्यस्मात् श्रीरेवात्ममोहनं तस्मादयं विभ्रंशितः इति यत् सोऽयमस्य महाननुग्रह एवं[1] त्वया कृत इति मन्ये अन्यथाऽयं श्रीमदात् स्वपरयाथात्म्यज्ञानरहितो विनश्येदिति भावः।।१६।।

किञ्च यया श्रिया विद्वानपि यतः संयतोऽपि मुह्येत् ततस्तस्यां सत्यां कः पुमान् आत्मनो गतिं स्वरूपं यथावद्विचष्टे पश्यति? कथमिति शेषः। कथं विचष्टे? न कथञ्चिदपि पश्यतीत्यर्थः। तस्मै महोपकर्त्रे जगतामीश्वराय सर्वज्ञाय नारायणाय तुभ्यं नमः। केवलं नमस्कर्तुं शक्नुमः न तु एवं कुरु एवं न कुर्विति विधातुं शक्नुम इति भावः।।१७।।

प्रह्लादस्याभिप्रेतमाविष्कर्तुं हिरण्यगर्भस्तमुवाचेत्याह - मुनिः **तस्येति।** बद्धाञ्जलेः[2] प्रह्लादस्य श्रृण्वतस्सतो भगवान्हिरण्यगर्भो मधुसूदनमुवाच किञ्चिद्वक्तुमुद्युक्त[3] इत्यर्थः। तथैव विन्ध्यावलिरपि किञ्चिद्विज्ञापयितुं प्रवृत्ता, ताञ्च सम्मानयन् हिरण्यगर्भः ब्रह्मा[4] क्षणं तूष्णीमवस्थितोऽतस्तस्या एव वचः प्रथममवतारयति बद्धमिति श्लोकः स्पष्टार्थः।।१८-१९।।

तदेवाह - **क्रीडार्थमिति।** ते त्वया स्वस्य क्रीडार्थमिदं कृत्स्नं जगत्कृतं सृष्टं तत्र तस्मिन् त्वत्क्रीडोपकरणभूते त्वत्सृष्टे जगति अपरे केचित्कुबुद्धयः स्वाम्यं[5] स्वत्वबुद्धिं कुर्युः अस्वे स्वत्वबुद्धिं कुर्वन्ति[6] अत एव त्यक्ता ह्रीः लज्जा यैस्ते अन्तरात्मना त्वया अवरोपिताः आरोपिताः कर्तृवादाः वयं स्वतन्त्रा इति वादा येषां ते वादमात्रेणापि[7] स्वामित्व रहिता इत्यर्थः। एवंविधास्ते कर्तुः स्रष्टुः, प्रभोः पालकस्य, अस्यतः संहर्तुश्च तव किमावहन्ति किं समर्पयन्ति? किञ्चित्स्वमस्तिचेत् समर्पयेयुः तदभावात् किं समर्पयन्तीति भावः। कां हानिं कुर्वन्ति? न तव कदाचिदपि हानिरिति[8] वाऽर्थः। अयम्भावः - लोकत्रयं मयार्पितं तृतीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याविष्कारेण ब्रुवन्नयं कुबुद्धिर्निर्लज्जश्च त्वमेव सर्वस्य स्वामी अतो मन्दबुद्धिमेनं विमुच्य पालयेति, अयमेव प्रह्लादस्याप्यभिप्रायः।।२०।।

**विज०** आत्मनो मोहहेतुभूतया श्रिया विभ्रंशितो विगलित इति यदयं महाननुग्रहोऽस्य कृत इति मन्ये। तत्तस्मात्कः पुमानात्मनो गतिं यथावदभिचष्टे न कोऽपि। यथाऽऽत्मनः स्वस्य गतिं सर्वत्र स्वातन्त्र्य लक्षणमभिचष्टे तथा कः परमात्मनो गतिं स्थितिं स्वातन्त्र्यलक्षणां पश्यति, श्रीमदान्धत्वात् न पश्यतीति वा।।१६-१९।।

स्वभर्तृगर्वोद्रेकं कटाक्षीकृत्य भगवन्तं समीडे क्रीडार्थमिति। ते त्वयेदं त्रिजगत् आत्मनः क्रीडार्थं

1. A,T एव 2. W कृताञ्जले: 3. A,T °मुद्यत 4. W Omits ब्रह्मा 5. A,B,T add तु तत्र 6. A,B,T कुर्वन्तः 7. A,B,T add स्व
8. A,B,T °निरपीति

कृतमिति सङ्गिरन्ते केचित् " क्रीडार्थं सृष्टिरित्येके" इति श्रुतेः। हे ईश! तत्रापरे कुधियोऽसुरप्रकृतयः आत्मनः स्वाम्यं कुर्युः वयमस्य स्वामिन इति जल्पन्ति जल्पं कुर्वन्ति। तत्रापि तुशब्दो महाविशेषं प्रकाशयति तेन तव स्वाम्यस्य न कामपि हानिमापादयन्ति इत्याह - कर्तुरिति। त्वयाऽवरोपितो विचालितोऽहङ्कर्तेति [1]विवादो येषां ते तथा अत एव त्यक्तलज्ञास्ते कुधियोऽस्य जगतः कर्तुः प्रभोरधिपतेस्तव किमावहन्ति, न किमपि हानिं कुर्वन्तीत्यर्थः। समर्थेऽधिपतौ प्रभुरिति च।।२०।।

**ब्रह्मोवाच**

**भूतभावन! भूतेश! देवदेव जगन्मय!।**
**मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम्।।२१।।**

**[2-]कृत्स्नाऽनेन तु[-2] दत्ता भूर्लोकाः कर्मार्जिताश्च ये।**
**निवेदितश्च सर्वस्वमात्माऽविक्लवया धिया।।२२।।**

**यत्पादयो[3]रचलधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सती सपर्याम्।**
**[4]अप्युत्तमां गतिमसौ भजते त्रिलोकीं [5]दाश्वानविक्लवमनाः कथमार्तिमृच्छेत्।।२३।।**

**[6-]श्रीवामन उवाच[-6]**

**ब्रह्मन्! यमनुगृह्[7]णामि तद्वित्तं विधुनोम्यहम्।**
**यन्मदः पुरुषः स्तब्धो लोकं मां चाऽवमन्यते।।२४।।**

**यदा कदाचिज्जीवात्मा संसरन् निजकर्मभिः।**
**नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत्।।२५।।**

**श्रीध०** तदेवं प्रह्लादस्य विन्ध्यावलेश्च परमार्थोक्त्या प्रसन्नो हरिः। ब्रह्मा तु, लोकदृष्ट्यैव विज्ञापयति **भूतभावनेति** त्रिभिः।।२१।।

निग्रहानर्हत्वे हेतुः **कृत्स्नेति**। सर्वस्वमेवाह - आत्मेति [8-]अविह्वलया[-8]।।२२।।

तदेव कैमु[9]तिकन्यायेनाऽह - **यदिति**। यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोऽपि जन [10]अत्युत्तमां गतिं प्राप्नोति तस्मै तुभ्यमसौ बलिस्त्रिलोकीं दाश्वान् दत्तवान् [11]स आर्तिं कथं प्राप्नुयात्।।२३।।

---

1. Ma Omits वि 2- -2. A,B,G,J,M,Ma,T कृत्स्ना तेऽनेन 3. A,B,G,J,M,Ma,T °रशठ 4.H,V अत्यु° 5. M,Ma दत्त्वा नवि° 6. A,B,G,J,M,Ma,T श्री भगवानुवाच 7. A,B,G,J,T,W °शो 8- -8. B,H,J,V Omits 9. A,B,J °त्य° 10. A,B,J Omit अति 11. H,V Omit सः

[1]ननु अर्थापहारः कोऽन्यमनुग्रहः? तत्राऽह - ब्रह्मन्निति। यन्मदः यैरर्थैर्मदो यस्य सः। अत एवस्तब्धोऽनम्रः सन्। मदस्तम्भहेतूनामर्थानामपहार एवानुग्रह इत्यर्थः।।२४।।

दुर्लभं पुरुषजन्म कथञ्चिल्लब्धवतो जीवस्य जन्मादिनिमित्तो गर्वो महाहानिकरः तस्य च नाशो मदनुग्रहादेवेत्याह - यदेति द्वाभ्याम्। अनीशः परतन्त्रस्सन् निजैः कर्मभिः नानायोनिषु [2]क्रिमिकीटकादिषु संसरन्।।२५।।

**वीर०** इममेवाभिप्रायमाविष्कर्तुं सम्बोधयन् स्पष्टमाह - ब्रह्मा भूतभावनेति। हे भूतभावन? भूतस्रष्टः! भूतेश! भूतान्तरात्मन्। अन्तरात्मतया पालकेत्यर्थः। हे देव देव! देवानां जगत्संहर्तॄणां रुद्रादीनामपि देव! जगच्छरीरक! हृतं सर्वस्वं यस्मात्तमेनं बलिं मुञ्च, अयं निग्रहं प्राप्तुं नार्हति।।२१।।

निग्रहानर्हत्वमेवाह - कृत्स्नेति। कृत्स्ना भूमिः, ये च कर्मणा सम्पादिता इन्द्रादिलोकास्ते चेत्येतत्सर्वस्वं तथाऽविक्लबया अदीनया बुद्ध्या आत्मा देहश्च अनेन बलिना ते तुभ्यं दत्ताः अतोऽयमनिग्राह्य इति भावः।।२२।।

एतदेव कैमुत्यन्यायेनाह-यत्पादयोरिति। अशठधीरमूर्खधीः यस्य तव पादयोः सलिलं विधायाऽर्घ्यजलं समर्प्य दूर्वाङ्कुरैरपि पूजां विधायोत्तमां गतिमपि भजते [3]प्राप्नोति। अयं तु बलिरविक्लबमनाः स्थिरचित्तस्सन् त्रिलोकीं दाश्वान् दत्तवान् अतः कथमयमार्तिं प्राप्नुयात्? तस्मादेनं विमुञ्चेत्यर्थः।।२३।।

एवं विज्ञापितो भगवान् इममनुग्रहीतुमेवेत्थं मया कृतमित्याह, [4-]यावदध्यायसमाप्ति[-4] ब्रह्मन्निति। हे ब्रह्मन्? अहं तावद्यमनुग्रहीतुमिच्छामि तस्य विशोऽर्थान् विधुनोम्यपहरामि तावदनर्थहेत्वर्थापहार एव प्रथमो मदनुग्रह इत्यर्थः अर्थस्यानर्थहेतुत्वमाह-यन्मदः यस्य धनस्य सम्बन्धी मदो यस्य [5]तादृशः अत एव स्तब्धो विवेकरहितः अनम्रो वा पुरुषो लोकं [6-]मदन्तरात्मस्थं जगत्[-6] मां तदन्तर्वर्तिनं [7]माञ्चाऽवमन्यते तिरस्करोतीत्यर्थः।।२४।।

एवमवमानेनान्यैश्च कर्मभिरिह लोके नानायोनिषु संसरन् तिर्यक्स्थावरादिषु जन्म प्राप्नुवन्नयं जीवात्मा कर्मवश्यः यदा कदाचित् यादृच्छिकसुकृतविशेषात् पौरुषीं गतिं पुरुषजन्म प्राप्नुयात्।।२५।।

**विज०** बन्धनादिकमासुरजन्मदोषापहरणाय त्वया कृतं न तु द्वेषात् अन्यथा तव वैषम्यनैर्घृण्ये स्यातां, न तद्युक्तमित्याशयेनाह - यत्पादयोरिति। न विक्लवमनाः सर्वस्वदानादप्यहीनमनाः।।२१-२३।।

---

1. A,B,J adds तस्यविशोर्थान् 2.A,B,J कृ° 3. A,T Omit प्राप्नोति 4- -4. W Omits 5. W सः यन्मदः 6- -6. W Omits 7. W Omits इत्यर्थः

यद्यपि ब्रह्मा भगवदभिप्रायं वेत्ति तथापि इतरेषां तज्ज्ञापनाय स्वाभिप्रायं वक्ति **ब्रह्मन्निति**। ब्रह्मन् प्रजापते! यन्मदः यद्वित्तनिमित्तमदः।।२४।।

नानायोनिभ्य उत्तमत्वेन मदोद्रेकहेतोरपि पुरुषयोनेर्यदृच्छया प्राप्तौ मदनुगृहीतस्य पुंसो मदो नैवोत्पद्यत इत्याह - **यदा कदाचिदिति**। अयं जीवात्मा निजकर्मभिः नानायोनिषु संसरन् कदाचिद्दैववशात् पौरुषीं गतिमाव्रजेत्।।२५।।

**जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः।**
**यद्यस्य न भवेत् स्तम्भस्तत्रायं मदनुग्रहः।।२६।।**

**मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः।**
**सर्वश्रेयः प्रतीपानां हन्त! मुह्येन्न मत्परः।।२७।।**

**एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः।**
**अजैषीदजयां मायां सीदन्नपि न मुह्यति।।२८।।**

**[1-]क्षीणरिक्थश्च्युतः[-1] स्थानात् क्षिप्तो बद्धश्च [2]रश्मिभिः।**
**ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः।।२९।।**

**गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः।**
**छलैरुक्तो मया धर्मो नायं त्यजति [3]सत्पथम्।।३०।।**

**श्रीध० जन्मेति**। तत्र पौरुष्यां गतौ जन्मादिभिर[4]स्य यदि स्तम्भो न भवेत् तर्हि अयं मदनुग्रह एव।।२६।।

कथं तर्हि ध्रुवादिभ्योऽर्थसम्पदो [5]अददाः इति चेत्तत्राह - **माने इति**। मान एव स्तम्भोऽनम्रता तस्य निमित्तभूतानां समन्ततः [6]सर्वशः सर्वश्रेयः प्रतिकूलानां जन्मादीनां सत्त्वेऽपि जन्मादिभिरिति वा। हन्त [7-]इति खेदे[-7]। हे ब्रह्मन् मत्परो न मुह्येदतो भक्तस्येच्छया सम्पदोऽपि ददामि। अभक्तस्तु मुह्येदिति। [8]तदहङ्कारापहाररूपमेव तस्यानुग्रहं करोमीति भावः।।२७।।

अस्य च इदानीं मत्परत्वादन्यैः दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमाह **एष** इति त्रिभिः।।२८-२९।।

1- -1. H,V क्षीणर्द्धिर्भ्रंशितः ; M,Ma क्षणाद्विर्भ्रंशितः 2. A,B,G,J,M,Ma,T शत्रुभिः 3. A,B,G,J,M,Ma,T सत्यवाक् 4. A,B,J °रप्यस्य 5. A,B,J ददासीति 6. H,V Omit सर्वशः 7- -7. H,V Omit इति खेदे 8. A,B,J तदपहा°

"न ह्येतस्मिन् कुले कश्चिन्निस्सत्त्वः कृपणः पुमान्" (भाग.8-19-3) इत्यादिना च्छलैरेव मया धर्म उक्तस्तथाऽपि तं धर्मं अयं न त्यजति अतः सत्यवाक्।।३०।।

**वीर०** तत्रापि जन्मादिभिर्यस्य पुरुषस्य स्तम्भो मदः अनम्रता वा न भवेत्तत्र तद्विषये अयं स्तम्भाभाव एव मदनुग्रहो ज्ञेयः। तत्र[1] जन्म सत्कुले। कर्म भगवत् परिचर्यादि, वयो यौवनादि। विद्या श्रौत स्मार्तादिः। बुद्धिर्विवेकात्मिका, धनं वित्तम्[1]।।२६।।

कथं तर्हि ध्रुवादिभ्यः सम्पदो ददासि? इत्यत्राह - **मानेति।** मानो गर्वः स्तम्भोऽनम्रताऽविवेको वा तयोर्निमित्तानां जन्मादीनां पूर्वग्रन्थपरिगणितानां समन्ततः सर्वश्रेयःप्रतिकूलानां सद्भावेऽपीति शेषः। मत्परस्तेषु न मुह्येदित्यर्थः। हन्त! हे ब्रह्मन्।।२७।।

अस्य चेदानीं मत्परत्वादन्यैः दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमनुगृह्णाति - **एष** इति त्रिभिः। एष बलिः दानवानां दैत्यानाञ्च अधिपतिः कीर्तिवर्द्धनश्च अजयां दुर्जयाम् मम मायामजैषीज्जयेदित्यर्थः।।२८।।

कीर्तिवर्द्धनत्वमेव प्रपञ्चयति - क्षीणं रिक्थं धनं यस्य सोऽपि स्थानात् च्युतोऽप्याधिपत्यात् भ्रष्टोऽपि शत्रुभिरधिक्षिप्तोऽपि बद्धोऽपि[2] ज्ञातिभिः परित्यक्तोऽपि यातनां प्रापितोऽपि।।२९।।

गुरुणा उशनसा भर्त्सितोऽपि शप्तोऽपि सुव्रतः दृढसङ्कल्पः सत्यं न तत्याज तथा मया छलैरेव धर्म उक्तः तथाप्ययं सत्यवाक् तं धर्मं न त्यजति।।३०।।

**विज०** तत्र पौरुषगतौ यद्यस्य जीवात्मनो मदर्चनादौ स्तम्भस्तन्द्रील्लक्षणा न भवेत्तर्ह्ययं मदनुग्रहः मत्कटाक्षपातलक्षण इति ज्ञातव्यम्।।२६।।

स्वभक्तलक्षणमाह - मानस्तम्भेति, पञ्चम्यर्थे जन्मादीनामिति षष्ठी।।२७।।

एतल्लक्षणदर्शनाय दवीयान्मार्गो न गन्तव्यः किन्त्वत्रैवेति भावेनाह - एष दानवेति अजयाम् अजेयां न जयो यस्याः सा अजयेति।।२८।।

यातनाम् तीव्रवेदनाम्।।२९।।

सत्यत्यागनिमित्तक्षीणत्वादिकं प्राप्तोऽपि सत्यं न त्यक्तवानित्यन्वयः।।३०।।

**एष[3] मे प्रापितं[4] स्थानं दुष्प्रापममरैरपि।**
**सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः।।३१।।**

---

1- -1. W Omits 2. W Omits बद्धोऽपि 3. M,Ma एवं 4. A,B,G,J,M,Ma,T ०तः

**तावत् सुतलमध्यास्तां विश्वकर्मविनिर्मितम्।**
**यत्राऽऽधयो[1] व्याधयश्च क्लमस्तन्द्री[2] पराभवः।।**
**नोपसर्गा निवसतां सम्भवन्ति ममेक्षया।।३२।।**

**इन्द्रसेन महाराज याहि भो भद्रमस्तु ते।**
**सुतलं स्वर्गिभिर्प्राथ्र्यं ज्ञातिभिः परिवारितः।।३३।।**

**न त्वामभिभविष्यन्ति लोकेशाः किमुताऽपरे।**
**त्वच्छासनातिगान् दैत्यांश्चक्रं मे सूदयिष्यति।।३४।।**

**रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम्।**
**सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान्।।३५।।**

**तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः।**
**दृष्ट्वा ममानुभावं[3] वै सद्यः कुण्ठो विनङ्क्ष्यति।।३६।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे बलिनिग्रहो नाम द्वाविंशोऽध्यायः।।२२।।

**श्रीध० एष** इति। मे मया मदाश्रयः[4] अहमेवाश्रयः पालको यस्य सः।।३१।।

स्थानं प्रापित इति यदुक्तं तदेव स्थानमाह **तावदिति**। तावत्सावर्णिमन्वन्तरपर्यन्तं सुतलमध्यास्तामधिवसत्वित्यर्थः। यद्यस्मिन्निवसतां व्याध्यादयो ममेक्षया न सम्भवन्ति।।३२।।

एवं ब्रह्माणं प्रत्युक्त्वा करुणापरवशः साक्षाद्बलिं प्रत्याह - **इन्द्रसेनेति** चतुर्भिः।।३३।।

**नेति**। त्वच्छासनमतिगच्छन्ति अतिवर्तन्ते इति तथा तान्।।३४।।

**रक्षिष्येति**। तथापि भगवद्वियोगात् तदनिच्छन्तं प्रत्याह - सदेति।।३५।।

**तत्रेति**। सङ्गात् य आसुरो भावः सः [5-]सद्यः कुण्ठो मन्दस्सन्[-5] विनङ्क्ष्यति।।३६।।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वाविंशोऽध्यायः।।२२।।

---

1. A,B,G,J,T यत्रा॰ 2. A,B,G,J,T स्तन्द्रा ; H,V स्तन्द्रिः 3. A,B,G,J,M,Ma,T मदनु 4. A,B,J Omit मदाश्रय
5- -5. H,V Omit:

**वीर०** अस्य मोक्षप्रदानं सङ्कल्पयति एष इति। अमरैरपि प्राप्तुमशक्यं स्थानं मल्लोकं प्रापितः प्रापयिष्यत इत्यर्थः। देहावसाने मुक्तो[1] भविष्यतीति भावः, जीवद्दशायाम् इन्द्राधिपत्यं भविष्यदनुगृह्णाति, सावर्णेरिति। सावर्णेर्मनोरन्तरस्य सम्बन्धीन्द्रोयं बलिरहमेवाश्रयो यस्य स भविता भविष्यति। सावर्णिमन्वन्तरेऽयमिन्द्रो भविष्यतीत्यर्थः।।३१।।

आधुनिकं सुतलल्लोकाधिपत्यमनुगृह्णाति तावदधुना विश्वकर्मणा विनिर्मितं सुतलं लोकमध्यास्ताम् तत्राधिपतिर्भूत्वाऽधिवसत्वित्यर्थः। सुतलं विशिनष्टि - यत्र सुतले निवसताम् आध्यादयो मत्कटाक्षेण हेतुना न सम्भवन्ति तत्राधयो मनःपीडा, व्याधयो दैहिकाः, क्लमः ग्लानिः, तन्द्री अनवधानता पराभवः शीतोष्णादिभिरभिभवः उपसर्गोऽन्योप्युपद्रवः।।३२।।

एवं ब्रह्माणमुक्त्वाऽथ बलिमुवाच हे इन्द्रसेन महाराज! ज्ञातिभिः परिवृतस्त्वं सुतलं स्वर्गिभिरपि प्रार्थ्यं लोकं याहि गच्छ तत्र तव भद्रमेव मेऽनुग्रहादस्तु[2]।।३३।।

तत्र वसन्तं त्वां लोकेशा इन्द्रादयोऽपि नाभिभविष्यन्ति किमु वक्तव्यम् अपरे नाभिभविष्यन्तीति, ये च तत्र त्वदाज्ञातिलङ्घिनो दैत्यास्तान् मम चक्रं सुदर्शनं सूदयिष्यति हनिष्यति।।३४।।

सर्वेभ्योऽपि उपद्रवेभ्यस्त्वां सानुगं सपरिच्छदं सोपकरणमहं रक्षिष्ये, किञ्च हे वीर! तत्र सुतले सदा सन्निहितं त्वद्द्वारि वसन्तं मां भवान् द्रक्ष्यते।।३५।।

किञ्च, दैत्यानां सङ्गाद्धेतोस्तव य आसुरो भावः स तत्र मम[3] अनुभावं दृष्ट्वा सद्यः कुण्ठः प्रतिहतो विनङ्क्ष्यति। मदनुभावाद्भवानासुरं भावं त्यक्ष्यतीत्यर्थः।।३६।।

इति श्रीमद्भागवते महापुराणे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
अष्टमस्कन्धे व्याख्यायां द्वाविंशोऽध्यायः।।२२।।

**विज०** भवतास्मै किमनुगृह्यते त्वद्भक्तायेति तत्राह - एवमिति। किं तत्स्थानमत्राह - सावर्णेरिति।।३१।।

तर्हि तावत्पर्यन्तमाशयोद्रेकवदेवंविधं क्लेशमनुभूय स्थीयतां किम्? तत्राह - तावत् सुतलमिति। तत्रान्येषामपि क्लेशानुभवो नास्ति किम्पुनरस्येति भावेन वक्ति, यत्राधय इति। उपसर्गा उपद्रवाः।।३२।।

---

1 W भवतीति 2. W वदनु 3. W मत्प्रस्तावं

भवदाज्ञामन्तरेणेमं कथं गमिष्यामीति शङ्का माभूदित्याह - **इन्द्रसेनेति**। मृतवदेकः कथं गमिष्यामीत्यत उक्तं ज्ञातिभिरिति।।३३।।

स्वर्गस्थैरर्थ्यं चेत् स्पर्धया लोकेशा मामुपद्रविष्यन्तीति तत्राह - न त्वामिति। राज्यं त्यक्त्वा गतस्य तव शासने वयं न तिष्ठाम इति तिष्ठतां दण्डमाह - त्वच्छासनेति।।३४।।

किम्बहुनोक्तेन, सर्वतो मद्रक्षावज्रं तवास्तीत्याह - सर्वत इति। न केवलं सन्निधानविशेषाद्रक्ष्यामि किन्तु प्रत्यक्षत एवेत्यत उक्तं तत्र मामिति।।३५।।

तत्राप्ययमनर्थस्तदवस्थ एव दानवादीनां संसर्गादिति च शङ्का माभूदित्याह - तत्र दानवेति। सद्यःकुण्ठः इत्येकं पदं, सद्यःकुण्ठः छेदो यस्य स तथा अवनङ्क्ष्यतीति विनङ्क्ष्यतीति पाठे निर्मूलो भविष्यतीत्यर्थः।।३६।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे द्वाविंशोऽध्यायः।।२२।।

oooOooo

# त्रयोविंशोऽध्यायः

**श्रीशुक उवाच**

**इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसम्मतः।**
**बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युद्[1]गलो गद्गदया गिराऽब्रवीत्।।१।।**

**बलिरुवाच**

**अहो [2]प्रणामस्य कृतः समुद्यम[3]: प्रपन्नभक्तार्थविधौ समाहितः।**
**यल्लोकपालै[4]स्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपश[5]देऽसुरेऽर्पितः।।२।।**

**श्रीशुक उवाच**

**इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः।**
**विवेश सुतलं प्रीतो बलिर्मुक्तः सहानु[6]गैः।।३।।**

**एवमिन्द्राय भगवान् [7]प्रत्यानीय त्रिविष्टपम्।**
**पूरयित्वाऽदितेः काममशासत्सकलं जगत्।।४।।**

**लब्धप्रसा[8]दं निर्मुक्तं पौत्रं वंशधरं बलिम्।**
**निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत्।।५।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयोविंशे बलौ याते सुतलं सपितामहे। उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदते हरिः।।

**इतीति।** बाष्पस्य कलाभिर्बिन्दुभिराकुले ईक्षणे यस्य। भक्त्या उद्गल उत्कण्ठः।।१।।

**अहो इति।** अहो त्वत्प्रणाम[9]महिमा, यदर्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां योऽर्थस्तस्य विधौ अभक्तेऽपि तस्य सम्पादने समाहितोऽप्रमत्तस्स[10]न् स्थितः। कुतः? य[11]द्येनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरप्यलब्धपूर्वः त्वदनुग्रहः अपशदे नीचे अ[12]सुरे राजसे मय्यर्पितः। अयं भावः - परमेश्वराय तुभ्यमहं-वराकस्त्रिलोकीं दत्तवानित्येतदास्तां, प्रणामोऽपि न सम्यक्कृतः। किन्तु तदर्थमुद्यममात्रं कृतं, तेन च कर्मतपोदानादिकोटिभिरप्यलभ्यः त्वदनुग्रहः सम्पादितः, अहो त्वत्प्रणामप्रभावाश्चर्यमिति।।२,३।।

**एवमिति।** अशासदुपेन्द्रस्सन् पालयामास।।४,५।।

---

1.M,Ma °त्कलो 2.A,B,G,J,T प्रणामाय ; M,Ma प्रसादोऽस्य 3.M,Ma °त: 4.M,Ma °स्त° 5.A,B,G,J,M,Ma,T °स° 6.A,B,G,J,M,Ma,T °सुरैः° 7.M,Ma प्रीत्याऽऽ° 8.M,Ma °दनि° 9.H,V °मस्य म° 10.A,B,J Omit सन् 11.H,V Omit यत् 12.B,H,J,V Omit असुरे

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवं अनुगृहीतो बलिः भगवन्तं तमाह इत्याह मुनिः - इतीति। इति इत्थं उक्तवन्तं पुराणपुरुषं भगवन्तं गद्गदया गिरा अब्रवीत्। कथम्भूतः? भक्त्या उद्गलः उत्कण्ठः हर्षबाष्पबिन्दुभिः आकुले ईक्षणे यस्य सः, अखिलजनां साधूनां सम्मतः महान् अनुभावः उक्तविधो यस्य सः।।१।।

तदेवाह - अहो इति। अहो! त्वत्प्रणामस्य प्रभाव इत्याह, प्रणामाय प्रणामार्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां योऽर्थः अभिमतः तस्य विधौ सम्पादने समीहितोऽप्रमत्तः स्थितः, कुतः? यत् येन उद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरप्यलब्धपूर्वः त्वदनुग्रहोऽपशदे नीचे असुरे मयि समर्पितः।।२।।

इत्थं हरिमुक्त्वा प्रणम्य ततो ब्रह्माणं रुद्रं च आनम्य, मुक्तः पाशेभ्य इति शेषः। प्रीतो बलिरनुगैस्सह सुतलं लोकं विवेश प्रवेष्टुमुद्युक्तो बभूवेत्यर्थः।।३।।

ततः इत्थं बलेर्गृहीतं त्रिविष्टपं भगवान् इन्द्राय प्रत्यादिष्ट प्रददौ। एवमदितेः काममिष्टं पूरयित्वा सकलं जगत् अशासत् उपेन्द्रस्सन् पालयामस।।४।।

ततो लब्धो भगवत्प्रसादो येन तं पाशेभ्यो निर्मुक्तं पौत्रं वंशवर्धनं बलिं निशाम्य दृष्ट्वा प्रह्लादः भक्तितत्परो [1-]भक्तिप्रेमसुधारससमुद्रे परिप्लुत इत्यर्थः[-1] वक्ष्यमाणमुवाच।।५।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवति भक्तिमतः पुरुषस्य किमपि दुस्साध्यं नास्ति इत्येतत्प्रपञ्चयतेऽस्मिन्नध्याये। तत्र बलेर्हर्याशाकरणं वक्तुमाह - इत्युक्तवन्तमिति। भक्तेरुत्कल उद्रेको यस्य स तथा।।१।।

समुद्यतः ऊर्ध्वं वर्धमानस्यास्य तव प्रसादो अहो कुतो विस्मय इत्यत उक्तं - कृत इति। स्वेनेति शेषः। इतोऽपि विस्मय इत्याह - प्रपन्न इति। समाहितः एकाग्रीकृतोऽन्यत्रानवसरदुस्थ इत्यर्थः। त्वमपि तेष्वेकः किं न स्याः इत्यत आत्मानं धिक्करोति - यल्लोकेति। असुरजातावप्यपशदे अधमे अलब्धपूर्व इति यथायोग्यमिति ज्ञातव्यम्।।२-४।।

लब्धप्रसादश्च निर्मुक्तश्च तम्।।५।।

---

1--1. W Omits

**प्रह्लाद उवाच**

**नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः[1] किमुतापरे ये।**
**यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरपि वन्दिताङ्घ्रिः।।६।।**

**यत्पादपद्ममकरन्दनिषेवणेन ब्रह्मादयः शरणदाश्नुवते[2] विभूतिम्।**
**कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः।।७।।**

**चित्रं तवेहितमहोऽमितयोगमाया लीलाविसृष्टभुवनस्य विशारदस्य।**
**सर्वात्मनः समदृशो विषमस्स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः।।८।।**

**श्रीभगवानुवाच**

**वत्स प्रह्लाद भद्रं ते प्रयाहि सुतला[3]ऽऽलयम्।**
**मोदमानः स्वपौत्रेण ज्ञातीनां सु[4]खमावह।।९।।**

**नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम्।**
**मद्दर्शनमहाह्लादध्व[5]स्तकर्मनिबन्धनः।।१०।।**

**श्रीध०** **नेति**। दुर्गपालो[6]ऽसि, " रक्षिष्ये सर्वतोऽहं त्वाम् " (भाग.8-22-35) इत्युक्तत्वात्।।६।।

**यदिति**। हे शरणद! आश्रयप्रद! ये कुसृतयो दुर्वृत्ताः खलयोनय उग्रजातयश्च ते वयं तस्य भवतो दाक्षिण्यदृष्टेः पदवीं कस्माद्धेतोः प्रणीताः [7]प्रापिताः। बहुमानेन चित्तानुवर्तनं दाक्षिण्यं तेन या दृष्टिस्तद्विषयतां प्रापिताः।।७।।

भक्तप्रियत्वादिति चेत्तर्हि **चित्रमिति**। एवं तवेहितम्। अहो चित्रम्। किं तत्? सर्वात्मनः समदृशश्च स्वभावो विषम इति यत्। सर्वात्मत्वे चित्रचरितत्वे हेतुः - अमिताऽचिन्त्या योगमाया [8]तस्या या लीला त[8]या विसृष्टानि विरचितानि भुवनानि येन तस्य अहोऽमितयोगमाया इत्यत्र सन्धिरार्षः। समदृक्त्वे हेतुः - विशारदस्य सर्वज्ञस्य। अथवा भक्तप्रियत्वेऽपि तव वैषम्यं नास्त्येव। यतः कल्पतरुस्वभावस्सन् भक्तप्रियोऽसि। न हि कल्पतरुराश्रितानामेव कामान्पूरयन्नपि विषमो भवतीत्यर्थः।।८,९।।

**नित्यमिति**। मद्दर्शनेन यो [9]महाह्लादः तेन ध्वस्तं कर्मनिबन्धनमज्ञानं यस्य।।१०।।

**वीर०** तदेवाह - **नेति** त्रिभिः। अहो तवेदं दुर्लभानुग्रहस्यापि सौलभ्यं परत्वं च अनितरसाधारणमिति

---

1.A,B,G,J,M,Ma,T ते   2.A,B,G,J,M,Ma,T °ती:   3.M,Ma °लातलम्   4.W मुदमा°   5.M,Ma न्यस्त   6.A,V Omit असि
7.A,B,J Omit प्रापिताः   8--8.H,V तथा लीलया   9.H,V महानाह्लादः

विस्मयपूर्वकं विज्ञापयति - नेति। इममस्मद्विषयं तवानुग्रहं चतुर्मुखलक्ष्मीरुद्रा अपि न लेभिरे।[1] येऽपरे इन्द्रादयो न लेभिरे इति किमु वक्तव्यं, एवं तत्प्रसादस्य दौर्लभ्यं क्वचिद्विषयविशेषे सौलभ्यं चोक्तम्। कुतः? एतद्विपरीत मित्यत आह - यद्यस्मादसुराणां क्रूरस्वभावानामपि नोऽस्माकं दुर्गपालः दुःखात् त्राता भवसि। अथ परत्वमाह - विश्वाभिवन्द्यैः सकलजगत्पूज्यैः ब्रह्मादिभिरप्यभिवन्दितौ अङ्घ्री यस्य सः त्वम् असुराणां नो दुर्गपालोऽसीत्यनेन नास्मद्गुणदर्शनेन अस्मासु तव प्रसादवृत्तिः किन्तु केवलं कृपयैवेति सूचितम्।।६।।

तदेव व्यञ्जयन्नाह - यदिति। हे शरणद! श्रेयस्साधनप्रद! अनेन स्वहितमपि वयं न विद्म इति सूचितम्। ब्रह्मादयो यस्य तव पादपद्मयो यो मकरन्दः तस्य सेवया विभूतिमैश्वर्यं सृष्ट्याद्यधिकारमश्नुवते प्राप्नुवन्ति, अनेन परत्वं स्पष्टीकृतम्। ते एवम्भूतस्य तव दाक्षिण्यदृष्टिपदवीमनतिक्रमणीयताहेतुकृपादृष्टिविषयतां कस्माद्धेतोर्वयं कुसृतयः कुमतयः खलयोनय उग्रजातयश्च प्रणीताः प्रापिताः केवलं कृपया एवेति भावः। पूर्वं विरिञ्च्यादयोऽपि इमं[2] प्रसादं न लभन्ते[3] इत्यनेन तत्सेवया विना तत्प्रसादाविषयत्वमुक्तम्। अत्र तु तत्सेवया तद्विषयत्वमित्यतो न विरोधः।।७।।

एवं तर्हि प्राकृतवत् कञ्चिदनुगृह्णन् कञ्चिच्च निगृह्णन् अहमपि विषमस्वभाव एवेति किं मां प्रशंससीत्यत्राह - चित्रमिति। तव ईहितं निग्रहानुग्रहादिरूपमहो विचित्रं न तु कर्मवश्य प्राकृतेहितसजातीयमित्यर्थः। वैचित्र्ये हेतुं वदन् अकर्मवश्यतां व्यञ्जयन् विशिनष्टि - अमितेति। अमितशक्तियुक्तसङ्कल्पज्ञानेन निमित्तेन अनायाससृष्टभुवनस्य इत्यर्थः। विशारदस्य सृष्ट्युपयुक्तसार्वज्ञ्यादि कल्याणगुणगणयुक्तस्य कृत्स्नचिदचिदन्तरात्मनः अत एव समदृशः वैषम्यनैर्घृण्यादिरहितस्यैव तव भक्तप्रियो भवसीति यदयमविषम एव स्वभावः न तु विषमः। तत्र दृष्टान्तं वदन् विशिनष्टि - कल्पतरोः स्वभाव इव स्वभावो यस्य स त्वम् इति। न हि कल्पतरोराश्रितार्थपूरणेन वैषम्यापादनं युक्तमिति भावः।।८।।

एवं विज्ञापितस्तं भगवानुवाच - वत्सेति। हे प्रह्लाद! तव भद्रमस्तु। सुतलाख्यं बिलस्थानं प्रयाहि गच्छ। तत्र स्वपौत्रेण बलिना सह मोदमानः ज्ञातीनां मुदं हर्षमावह[4] प्रापय।।९।।

तत्र सुतले नित्यं सदा अवस्थितं संनिहितं[5] गदा पाणौ यस्य तं मां द्रष्टासि द्रक्ष्यसि नित्यं द्रष्टासि इति वा सम्बन्धः। नित्यं मद्दर्शनेन यो महानाह्लाद आनन्दः तेन ध्वस्तं कर्मरूपं निबन्धनं संसृतिहेतुः यस्य तादृशो भविष्यसीति।।१०।।

---

1.A ते 2.A,B,T इत्थं 3.A,B,T लेभिरे 4.A,B,T Omit आवह 5.W Omits संनिहितं

**विज०** विश्वाभिवन्द्यैर्ब्रह्मादिभिरभिवन्दिताङ्घ्रिः श्रीकान्तोऽसुराणामपि नो दुर्गपालो द्वारपाल आसीदिति यदिमं प्रसादं विरिञ्च्यादयो न लभन्त[1] इत्यन्वयः।।६।।

कुसृतयः कुत्सितमार्गास्तत्र हेतुमाह - खल्योनय इति। तस्य ते तव कस्माद्धेतोः दाक्षिण्यदृष्टिपदवीं प्रणीताः भक्तानुकम्पित्वमन्तरेणेति शेषः। " यमेवैष वृणुते तेन लभ्यः " (कठ.उ.2-22) इति श्रुतेः।।७।।

[2]भगवत्स्वरूपत्वादीहितमपि लोकविलक्षणमिति भावेनाह - **चित्रमिति**। तव चित्रं नानाविधमीहितं चेष्टितमहो " अहो हि विस्मये" (वैज.को.8-8-16) इति यादवः। तत्कथमिति तत्राह-विषमेति। विषमस्वभावोऽसि भक्तप्रियोऽसि, कल्पतरुस्वभावोऽसि यत्तस्माद्विस्मयः समदृशो विषमस्वभावत्वं सर्वात्मनो भक्तप्रियत्वेन कल्पतरुस्वभावत्वं च विस्मयहेतुरित्यर्थः।।८।।

बलिप्रह्लादयोर्भगवद्भक्तत्वेऽपि बलेः बन्धनादिदुःखमभूत् तत्किंनिमित्तमिति शङ्का - "बलिरप्यसुरावेशात् स्तुवन्नपि जनार्दनम्। आक्षिपत्यन्तरा क्वापि, प्रह्लादो नित्यभक्तिमान्" (ब्रह्माण्डे) इत्यनेन परिहर्तव्या। आक्षेपफलं दुःखमित्यर्थः।।९,१०।।

### श्रीशुक उवाच

**आज्ञां भगवतो राजन् प्रह्लादो बलिना सह।**
**बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः।।११।।**

**परिक्रम्याऽऽदिपुरुषं सर्वासुरचमूपतिः।**
**प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम्।।१२।।**

**[3]अथाहोशनसं राजन्! हरिर्नारायणोऽन्तिके।**
**आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम्।।१३।।**

**ब्रह्मन्सन्तनु शिष्यस्य कर्म च्छिद्रं वितन्वतः।**
**यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत्।।१४।।**

### शुक्र उवाच

**कुतस्तत्कर्म वैषम्यं यस्य कर्मेश्वरो भवान्।**
**यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः।।१५।।**

---

1. M,Ma लभ्यते 2. M भवस्व" ; Ma तत्र स्व" 3. W त"

**श्रीध० ब्रह्मन्निति।** कर्म वितन्वतः शिष्यस्य यच्छिद्रमन्तरं न्यूनं जातं तत्सन्तनु विस्तारय सन्धत्स्व। यजमानं विना कथं सङ्घातव्यमिति न वाच्यमित्याह - यत्तदिति। ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत्। किं पुनरनुष्ठितमित्यर्थ।।११-१४।।

**कुत इति।** भवान्यस्य सर्वेणापि भावेन[1] वस्तुमात्रेण पूजितस्तस्य कर्मसु कुतो वैषम्यम्? [2-]कथम्भूतः[-2]? कर्मणामीश्वरः प्रवर्तकः। यज्ञेशो [3]यज्ञस्य फलदः, यज्ञमयश्च पुरुषः।।१५।।

**वीर०** एवंविधां भगवत आज्ञां शिरसा बाढमित्याधायाऽभ्युपेत्य, हे राजन्! अमला प्रज्ञा स्वात्मपरमात्मयाथात्म्यविषया यस्य सः प्रह्लादो बलिना सह [4]कृताञ्जलिः बद्धाञ्जलिस्सन्।।११।।

आदिपुरुषं प्रदक्षिणीकृत्य प्रणतः कृतप्रणामः सर्वेषामसुराणां चम्वाः सेनायाः अधिपतिर्भूत्वा तेन भगवता अनुज्ञातो महाबिलं सुतलं विवेश।।१२।।

अथ तत्प्रवेशानन्तरं हे राजन्! भगवान् नारायणः समीपे सभायां ब्रह्मवादिनामृत्विजां मध्ये आसीनमुपविष्टमुशनसं शुक्रमुवाच।।१३।।

तदेवाह - **ब्रह्मन्निति**। हे ब्रह्मन्! वितन्वतो यजमानस्य शिष्यस्य बलेः यत् यज्ञस्य छिद्रं कर्मसु वैषम्यं वैगुण्यरूपं तद्ब्रह्मदृष्टं वेदबोधितं समं वैषम्यरहितमविगुणं यथा भवेत्तथा सन्तनु कुरु।।१४।।

एवमुक्तः शुक्रस्तावत् प्रकृतकर्मणि वैगुण्यमेव नास्तीति विज्ञापयति-**कुत** इति द्वाभ्याम्। तस्य बलेः कर्मणो वैगुण्यं कुतः? न कस्मादपीत्यर्थः। वैषम्याभावे हेतुमाह - यस्य येन बलिना कर्तरि षष्ठी। सर्वभावेन करणत्रयेण सर्वकर्मणामीश्वरः यज्ञेशः यज्ञपुरुषश्च [5]भवान् यतः पूजितोऽतो न वैषम्यमित्यर्थः। **कर्मेश्वर इति** सर्वकर्मप्रवर्तकत्वमुक्तम्। यज्ञेश्वर इति यज्ञफलप्रदत्वं, यज्ञपुरुष इति यज्ञशरीरकत्वं, तद्भोक्तृत्वं च इत्यपौनरुक्त्यम्।।१५।।

**विज०** कर्म वितन्वतोऽस्य यत्तद्ब्रह्मभिः ब्राह्मणैर्दृष्टं निरूपितं कर्मसु वैषम्यमन्तरायोऽपहतिः यथासमं विहितफलप्रदत्वेन समर्थः भवेत् तथा तव शिष्यस्य बलेः कर्मणो वैषम्यलक्षणमपराधं सन्तनु परिहृतं कुरु, कर्मरन्ध्रं समुन्नतं कुरु वा। "छिद्रं रन्ध्रापराधयोः" (वैज.को.6-3-9) इत्यभिधानम्। **ब्रह्मणा दृष्टं वा।।११-१४।।**

---

1.A adds देहगेहादिना 2--2.A Omits 3.A यज्ञफलप्रदः ; B,J यज्ञफलदः 4.A,B,T Omit कृताञ्जलिः 5.A,B,T भगवान्

सति छिद्रे तत्परिहारः तदेव नास्ति, अस्ति चेदपि तव नामसङ्कीर्तनं निश्छिद्रं करोतीति वक्ति उशनेत्याह - शुक्र इति। यज्ञपुरुषो भवान्यस्य बलेः कर्मेश्वरः कुतः? यज्ञेश इत्यनेन सर्वयज्ञस्वामित्वं तव विद्यते किमुत एतद्यज्ञस्वामित्वं बलेस्त्वद्भक्तत्वादिति सूचितम्। तस्य बलेः कर्म वैषम्यं कुतो हेतोः स्यादित्यन्वयः। सर्वभावेन सर्वदानेन पूजित इत्यस्माच्च।।१५।।

मन्त्रतस्तन्त्रतच्छिद्रं देशकालार्हवस्तुतः।
सर्वं करोति निश्छिद्रं[1]मनुसङ्कीर्तनं तव।।१६।।

तथापि वदतो भूमन् करिष्याम्यनुशासनम्।
एतच्छ्रेयः परं पुंसां यत्तवाज्ञाऽनुपालनम्।।१७।।

### [2-]श्रीशुक उवाच[-2]

[3]प्रतिनन्द्य हरेराज्ञामुशना भगवानिति।
यज्ञच्छिद्रं [4]समाधत्त बलेर्विप्रर्षिभिस्सह।।१८।।

एवं बलेर्महीं राजन्! भिक्षित्वा वामनो हरिः।
ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम्।।१९।।

प्रजापतिपतिर्ब्रह्मा देवर्षि[5]मनुभूमिपैः।
दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च।।२०।।

कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च।
लोकानां लोकपालानामकरोद्वामनं पतिम्।।२१।।

**श्रीध०** आस्तां तावत् पूजा **मन्त्रत** इति। यस्मान्मन्त्रतः स्वरादिभ्रंशेन, तन्त्रतो व्युत्क्रमादिना, देशतः कालतश्च, अर्हतः पात्रतः, वस्तुतस्[6]तु दक्षिणादिना यच्छिद्रं न्यूनं तत्सर्वं तव [7]नाम[8]सङ्कीर्तनमात्रमेव निश्छिद्रं करोतीति ।।१६,१७।।

**प्रतिनन्द्य** इति। हरेराज्ञां प्रतिनन्द्य बलेः यज्ञच्छिद्रं समाधत्त सन्दधे। पाठान्तरे समाधाय तदाज्ञां, सम्पादितवानिति शेषः।।१८,१९।।

---

1. A,G,J,T °द्रं नाम 2- -2. M,Ma Omit 3. A,B,G,J,M,Ma,T अपि 4.M,Ma समतनोत् 5. A,B,G,J,M,Ma,T पितृ
6. A,B,J °श्च° 7. H,V Omit नाम 8. B,H,J,V अनुकीर्तन

**प्रजापतिरिति**। देवाश्च ऋषयश्च भूमिपाश्च मनवस्तैस्सहितः।।२०-२१।।

**वीर०** किं वक्तव्यम्? एतत् यत्तव पूजनम् अवैषम्यावहमिति यतः [1-]तव नाम्नः सङ्कीर्तनमेव[-1] तदावहमित्याह - मन्त्रत इति। मन्त्रतन्त्रदेशकालयोग्यवस्तुभ्यो यच्छिद्रं मन्त्रादीनां यद्वैगुण्यमित्यर्थः। तत्सर्वं तव नामसङ्कीर्तनमेव निश्छिद्रं करोति।।१६।।

यद्यप्येवं नास्त्येव वैषम्यं तथापि, हे भूमन्! गदतस्तव अनुशासनं करिष्याम्येव यतस्तव आज्ञानुपालनमिति यदेतत् पुंसां परमं श्रेयः।।१७।।

इतीत्थं हरेराज्ञां प्रतिनन्द्य भगवान् उशनाः शुक्रः बलेर्यज्ञस्य छिद्रमृषिभिस्सह समाधत्त समादधे।।१८।।

इत्थमुपवर्णितं भगवतो वामनस्य चरित्रमुपसंहरति - **एवमिति**। हे महाराज! यत्परैः अपहृतं तत्त्रिदिवमित्थं बलेः सकाशाद्याचित्वा वामनरूपो हरिः भ्रात्रे महेन्द्राय ददौ।।१९।।

तदा प्रजापतिर्ब्रह्मा चतुर्मुखः देवैः ऋषिभिः पितृभिः भूमिपैः मनुतत्पुत्रैर्दक्षादिभिश्च सह कश्यपस्य अदितेश्च प्रीत्यै सर्वभूतानां भवाय विभवाय योगक्षेमार्थं च लोकानां तत्पालकानां च पतिं वामनमकरोत्।।२०-२१।।

**विज०** तवानुसङ्कीर्तनं मन्त्रतः तन्त्रतः छिद्रं सर्वं देशकालोचितवस्तुतो यथा तथा निश्छिद्रं पूर्णं करोतीत्यन्वयः।।१५-२०।।

**[2-]वेदानां सर्वदेवानां[-2] धर्मस्य [3]तपसः श्रियः।**
**मङ्गलानां व्रतानां च [4]कल्पं स्वर्गापवर्गयोः।।२२।।**

**उपेन्द्रं कल्पयाञ्चक्रे[5] पतिं सर्वविभूतये।**
**तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप।।२३।।**

**ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम्।**
**लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः।।२४।।**

**प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालि[6]तम्।**
**श्रिया परमया जुष्टो मुमुदे गतसाध्वसः।।२५।।**

---

1- -1. A,B,T त्वन्नामकीर्तनमेव 2- -2. H,V देवानां सर्ववेदानां 3. A,B,G,J,M,Ma,T यशसः 4. H,V कल्यं 5. H,V °क्र इति
6. A,B,G,J,T °तः

**श्रीध० वेदानामिति।** ननु लोकादीनां पतिरिन्द्रोऽस्त्येव सत्यम्, तथापि वेदादीनां[1] कल्पं[2] पालने दक्षम्।।२२।।

**उपेन्द्रमिति।** वामनमुपेन्द्रं कल्पयाञ्चक्रे।।२३।।

**तत इति।** देवयानेन [3] मार्गेण विमानेनेति वा।।२४,२५।।

**वीर०** वेदादीनां कल्पं समर्थं, पालने इति शेषः। उपेन्द्रं सर्वभूतानां विभूतये पतिं कल्पयाञ्चक्रे अकरोत्।।२२।।

तदा सर्वाणि भूतानि नितरां मुमुदिरे। ' मुद - हर्षे ' इति धातुः।।२३।।

ततो ब्रह्मणाऽनुमोदितः इन्द्रो लोकपालैस्सह वामनं भगवन्तं देवयानेन देववाह्ययानेन दिवं प्रतिनिन्ये प्रापयामास।।२४।।

तत उपेन्द्रस्य भगवतः भुजपालितं त्रिभुवनं प्राप्य त्रिभुवनाधिपतिर्भूत्वा इन्द्रः निर्भयः परमया श्रिया सम्पदा जुष्टो मुमुदे।।२५।।

**विज०** ततः बलियज्ञशालायाः।।२१-२५।।

**ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप!।**
**पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये।।२६।।**

**सुमहत्कर्म तद्विष्णोर्गायन्तः परमाद्भुतम्।**
**धिष्ण्यानि स्वानि ते जग्मुरदितिश्च शशंसिरे।।२७।।**

**सर्वमेतन्मयाऽऽख्यातं भवतः कुलनन्दन!।**
**उरुक्रमस्य चरितं श्रोतॄणामघमोचनम्।।२८।।**

**पारं महिम्न उरु विक्रमतो गृणानो[4] यः पार्थिवानि[5-] विममे स रजांसि मर्त्यः[-5]।**
**किं जायमान उत जात उपैति मर्त्य इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य।।२९।।**

**य इदं देवदेवस्य हरेरद्भुतकर्मणः।**
**अवतारानुचरितं शृण्वन् याति परां गतिम्।।३०।।**

**क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे[6]।**
**यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः।।३१।।**

1. H,V देवादीनां 2. H,V कल्पं 3. A adds तात्संज्ञक" 4. M,Ma मुरारेः 5- -5. M,Ma 'न्यपि कविर्विममे रजांसि। 6. M,Ma मानवे

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
अष्टमस्कन्धे त्रयोविंशोऽध्यायः।।२३।।

**श्रीध० सर्वमिति।** एतच्चरितमाख्यातमिति विशेषोक्त्या अन्यान्यपि सन्तीत्युक्तम्।।२६-२८।।

तानि तर्हि निश्शेषाणि वर्णनीयानीत्यपेक्षायामाह - **पारमिति।** उरु बहुधा विक्रमतो विष्णोर्महिम्नः पारं यो गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान्। यथा पार्थिवपरमाणुगणनमशक्यं तथा विष्णोर्गुणगणनमप्यशक्तमित्यर्थः। तथा च मन्त्रः - "विष्णोर्नु कं वीर्याणि" प्रवोचं यः पार्थिवानि विममे रजांसि योऽस्कभाय उत्तरम्। सधस्तं विचक्रमान त्रेधोरूगायः" (ऋक्.म.1-154-1) इति। एतदेव[1] मन्त्रान्तरार्थं सूचयन्नाह - यस्य पुरुषस्य पूर्णमहिम्नः पारं मन्त्रदृगृषिर्वसिष्ठ इति एवमाह - कथम्? किं जायमानो जातो वा उपैति न कोऽपीति वदन् अनन्तत्वेनैवाहेत्यर्थः। तथा च मन्त्रः - "न ते विष्णो! जायमानो न जातो देव महिम्नः परमन्तमाप " इति।।२९।।

**य इति।** य इदं शृण्वन्[2] भवति स परां गतिं याति।।३०।।

**क्रियमाण इति।** सुकृतं यथावत्कृतं विदुः।।३१।।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां त्रयोविंशोऽध्यायः।।२३।।

**वीर०** ततो हे नृप! सर्वे ब्रह्मादयो वैमानिका विमानारूढाश्च तद्विष्णोर्वामनस्य सुमहदनितरसाधारणं अत एव परमाद्भुतं कर्म चरित्रं गायन्तः स्वस्वस्थानानि जग्मुः अदितिं च शशंसिरे तष्टुवुश्च।।२६,२७।।

हे कुरुनन्दन! श्रोतॄणां शृण्वतां दुरितहरं सर्वमस्मद्बुद्धिगोचरमेतदुरुक्रमस्य चरितं भवतो मया कथितं, सर्वं मयाऽऽख्यातमित्यनेन स्वमतिविषयं सर्वमाख्यातमित्यभिप्रेतं, न तु उरुक्रममहिम्नः परिच्छिन्नत्वमित्यर्थः[3]।।२८।।

तदेव व्यञ्जयितुं तन्महिम्नोऽनवच्छिन्नत्वमाह - **पारमिति।** यो मर्त्यः पुमानुरुक्रमस्य महिम्नः पारमवधिं गृणानो भवति स मर्त्यः पृथिव्या इमानि पार्थिवानि रजांसि विममे गणयेत् यथा पार्थिवानां रजसां गणना कर्तुमशक्या तथा उरुक्रमस्य गुणानामपीत्यर्थः। पार्थिवानि रजांसि वा बुद्धिमान् महता कालेन गणयेत् न तु उरुक्रमस्य गुणानिति वाऽर्थः। तथा च श्रूयते - " विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि"

---

1. H,V एवमेव 2. H,V add गुणन् 3. W Omits इत्यर्थः

(ऋक्.म.1-154-1) इति। तथाहि - यस्य पुरुषस्य उरुक्रमस्य महिम्नः पारं जातः जायमानो जनिष्यमाणो वा मर्त्यः उपैति किं, नोपैत्येवेति मन्त्रद्रष्टा ऋषिः वसिष्ठादिराह।।२९।।

प्रकृतावतारचरित्रश्रवणादिफलमाह - य इति। यः कश्चिदेतदद्भुतकर्मणो देवानां ब्रह्मादीनामपि देवस्य वामनस्य अवतारानुचरितं शृण्वन् परां गतिं मुक्तिरूपां याति प्राप्नोति।।३०।।

यत्र यत्र देवमनुष्यपित्रादि सम्बन्धिनि क्रियमाणे कर्मणि इदमवतारानुचरितं कीर्त्यते तत्तेषां सम्बन्धि कर्म सुकृतं सुष्ठु अविगुणं यथा भवति तथा कृतं विदुः, तज्ज्ञा इति शेषः। श्रौतस्मार्तसर्वकर्मसाद्गुण्यापादकं एतच्चरित्रश्रवणादिकमित्यर्थः।।३१।।

इति श्रीमद्भागवते अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रयोविंशोऽध्यायः।।२३।।

विज० ब्रह्मादिमहिमातिरिक्तमहिमत्वे मुरारेश्चरितस्य संसाराख्याघसङ्घातविघातदक्षत्वं घटतामपि तत्कथमित्याशङ्क्य, प्रमाणपूर्वकं तदाह पारं महिम्न इति। " विष्णोर्नु कं वीर्याणि प्रवोचम् " (ऋक्.म.1-154-1) " न ते विष्णो जायमानो न जातः " (ऋक्.7-99-2) इति मन्त्रदृग्वेदद्रष्टा ऋषिरित्याह यस्य पुरुषस्य यो मर्त्यः पार्थिवानि रजांसि पार्थिवपरमाणून्विममे मानङ्करोत्यपि। छन्दसि " व्यत्ययो बहुलम्" (अष्टा.1-85-77) इति वचनात् लडर्थे लिट्। जातो जायमानः उत जनिष्यमाणो वा समर्थः महिम्नः पारं समाप्तिम् उपैति किम्? नैवोपैतीत्यन्वयः। पुरुषः क इति तत्राह - मुरारेरिति। स यदुतिलक इति नेत्याह, उरु विक्रमत इति। उरु महद्यथा भवति तथेति क्रियाविशेषणं, कविरप्यतिक्रान्तदर्श्यपीति वा।।२६-२९।।

यस्तस्याद्भुतकर्मणो देवदेवस्य हरेः अवतारानुचरितं शृण्वन् वर्तते स पराङ्गतिं वैकुण्ठाख्यां यातीत्यन्वयः।।३०।।

अन्यविषयकर्मसमयेऽपि कीर्त्यमानमिदं भगवत्कर्मपूर्णफलप्रदं करोतीत्याह - क्रियमाण इति। अथ मङ्गले दैवप्रभृतिकर्मणि क्रियमाणे सति इदमवताराऽनुचरितं यत्र यत्र कर्मणि कीर्त्यते तेषां पुंसां तत्तत्कर्म सुकृतं पूर्णफलप्रदानसमर्थं विदुः ज्ञानिन इति शेषः।।३१।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
अष्टमस्कन्धे त्रयोविंशोऽध्यायः।।२३।।

०००0०००

# चतुर्विंशोऽध्यायः

## (विजयध्वजरीत्या त्रयोविंशोऽध्यायः)

### मत्स्यावतारकथा प्रारम्भषट्कः

**राजोवाच**

**भगवञ्छ्रोतुमिच्छामो[1] हरेरद्भुतकर्मणः।**
**अवतारकथामाद्यां मायामत्स्यविडम्बनम्।।१।।**

**यदर्थमदधाद्[2]रूपं मात्स्यं लोकजुगुप्सितम्।**
**तमःप्रकृतिदुर्मर्षं कर्मग्रस्त इवेश्वरः।।२।।**

**एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि।**
**उत्तमश्लोकचरितं सर्वलोकसु[3]खावहम्।।३।।**

**सूत उवाच**

**इत्युक्तो विष्णुरातेन भगवान्बादरायणिः।**
**उवाच चरितं विष्णोर्मा[4]त्स्यरूपेण यत्कृतम्।।४।।**

**श्रीशुक उवाच**

**गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः।**
**रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि।।५।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्विंशे [5]भगवतः कथा मत्स्यस्वरूपिणः। विविच्यते[5] यतः सत्यव्रतरक्षा महार्णवे।।

तनुं तनुं [6]प्रदर्श्यादौ निजैश्वर्यनिदर्शनात्। मत्स्यं पृच्छति पृथ्वीशो लीलया वामनोपमम्।।

**भगवन्निति**। मायया मत्स्यविडम्बनं मत्स्यरूपानुकरणं यस्यां [7]निरूप्यते ताम्।।१।।

ननु कस्मादकस्मादेव मत्स्यावतारश्रवणेच्छा, श्रीवामना[8]वतारसादृश्यादित्याह - **यदर्थमिति** द्वाभ्याम्। दुर्मर्षं दुस्सहम्।।२।।

**एतदिति**। बलेरनुग्रहाय जुगुप्सितमपि याचकरूपं [9]धृतवानिति युक्तमुक्तम्। यदर्थं तु लोकजुगुप्सितं मात्स्यं रूपमधारयत् एतन्नो यथावद्वक्तुमर्हसीत्यर्थः।।३,४।।

---

1.A,B,G,J,M,Ma,T °मि 2.M,Ma °ध° 3.W मलापहम् 4.A,B,G,J,M,Ma,T °मं ° 5--5.A,B,J प्रसङ्गेन मत्स्यरूपस्य शार्ङ्गिणः लीलोच्यते 6.A,B,J विद° 7.H,V Omit निरूप्यते 8.A,B,J Omit अवतार 9. A धृत्वा बबृधेति ; B वृतवानिति

सामान्येनावतारप्रयोजनमाह - **गोविप्रेति**।।५।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

तदेवं श्रुतवामनावतारतच्चरित्रोऽवतारप्रसङ्गात् मात्स्यमवतारं शुश्रूषुः पृच्छति राजा-**भगवन्निति** त्रिभिः। हे भगवन्! मुने! अद्भुतकर्मणो हरेराद्यावतारकथां श्रोतुमिच्छामि। कथम्भूताम्? मायामत्स्य-विडम्बनामद्भुतमत्स्यसजातीयचेष्टानुकारो यस्यां प्रतिपाद्यस्तां, कथाया आद्यत्वं तदवतारप्राथम्यप्रयुक्त मित्यवगन्तव्यम्।।१।।

स्वयमीश्वरोऽपि कर्मग्रस्तः कर्मवश्य इव जीववत्तमस्स्वभावं दुर्मर्षं क्रोधि अत एव लोकैः जुगुप्सितं निन्दितं मात्स्यं रूपं यदर्थं यस्मै प्रयोजनाय अधात्[1] धृतवान्।।२।।

हे भगवन्! मुने! एतत् सप्रयोजनं सर्वं मत्स्यावतारचरित्रं यथावत् वक्तुमर्हसि। श्रोतव्यत्ववक्तव्यत्व-योर्हेतुं वदंश्चरित्रं विशिनष्टि सर्वेषां लोकानां शृण्वतां वदतां च मलमघमपहन्तीति तथा तत्।।३।।

इत्थं आपृष्टमत्स्यावतारचरित्रो भगवान् बादरायणिः यथावद्वर्णयामासेत्याह सूतः **इतीति**। विष्णुरातेन परीक्षिता इत्थमुक्तः, पृष्टो भगवान् बादरायणिः श्रीशुको विष्णोश्चरितं उवाच। किं तत्? यन्मत्स्यरूपेण कृतम्।।४।।

तदेवाह - [2-]गोविप्रेत्यादिना[-2] [3-]यावत्समाप्ति[-3]। यदर्थमदधाद्रूपमिति विशेषतः पृष्टमत्स्यावतारप्रयोजनं वक्ष्यंस्तावत् सर्वावतारसाधारणं प्रयोजनमाह - **गोविप्रेति**। गवां विप्राणां सुराणां साधूनां छन्दसां वेदानां तदुदितधर्ममर्यादानां च रक्षामिच्छन् धर्मार्थादिपुरुषार्थचतुष्टयप्रदानार्थं च तनूः मत्स्यादिमूर्तीः ईश्वरो धत्ते बिभर्ति।।५।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अंशिज्ञानवदंशज्ञानमपि मुक्तिसाधनं गुणाद्यविशेषादिति दर्शनाय मत्स्यावतारचरितमनुवर्तयत्य[4]-स्मिन्नध्याये। तत्र श्रुतवामनावतारचरितसुधापानाद्वितृष्ण इव पुनरपि राजा दशावताराणामादित्वेन मत्स्यावतारमाहात्म्यं श्रोतुं पृच्छति - राजेति, मायामत्स्यस्य विडम्बनं यस्यां सा तथा।।१।।

कथं जुगुप्सितमभूदिति तत्राह - **तमःप्रकृतीति**। तमः स्वभावो यस्य स तथा, दुर्मर्षं सोढुमशक्यं, कर्मग्रस्तो जीवः।।२।।

1. A,T अदधात् 2- -2. A,B,T Omit 3- -3. W Omit 4. A,B 'र्ण'

लोकजुगुप्सितं चेत्किमिति वक्तव्यमत्राह - उत्तमेति।।३-५।।

उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः।
नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः।।६।।

आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको[1] लयः।
समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप।।७।।

कालेनाऽऽगत[2]निद्रस्य धातुः शिशयिषोर्जले[3]।
मुखतो निस्सृ[4]तान्वेदान् हयग्रीवोऽन्तिकेऽहरत्।।८।।

ज्ञात्वा तु[5] दानवेन्द्रस्य हयग्रीवस्य चेष्टितम्।
दधार शफरीरूपं भगवान्हरिरीश्वरः।।९।।

तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान्।
नारायणपरोऽतप्यत् [6-]स नृपः सलिलाशनः[-6]।।१०।।

**श्रीध०** जुगुप्सितत्वं परिहरति - **उच्चावचेष्विति**। धियो गुणैः यान्युच्चावचानि भूतानि तेषु नियन्तृत्वेन चरन्नपि ईश्वरो नोच्चावचत्वं भजते, निर्गुणत्वात्,[7] शुद्धसत्त्वमयैर्मत्स्याद्य[8]वतारैरुच्चावचत्वशङ्का[9] केति भावः।।६।।

विशेषतो मत्स्यावतारप्रयोजनमाह - **आसीदिति** त्रिभिः। ब्रह्मणो निद्रायां भवो ब्राह्मः तेनैव निमित्तेन जातो नैमित्तिकः। समुद्रे उपप्लुता निमग्नाः।।७।।

**कालेनेति**। अन्तिके निस्स्[10]ृतान्।।८।।

**ज्ञात्वेति**। शफरीरूपं मत्स्यरूपम्।।९।।

प्रयोजनान्तरञ्च लीलाप्रकारञ्चाह - [11-]**तत्रेत्यादिना** यावदध्यायपरिसमाप्ति[-11]।।१०।।

**वीर०** यदशङ्कितं लोकजुगुप्सितं तमःप्रकृतिदुर्मर्षमिति सावद्यत्वं तत्परिहरति - **उच्चेति**। उत्कृष्टेष्वपकृष्टेषु च देवमनुष्यतिर्यगादिभूतेषु चरन् तत्सजातीयजन्मकर्मादिकं कुर्वन्नपि ईश्वर उच्चावचत्वं कर्मायत्तदेवमनुष्यादितारतम्यं न भजते यथा वायुः सर्वत्र व्याप्नुवन्नपि न व्याप्यगतधर्मैः स्पृश्यते तद्वत्, अत्र हेतुं

---

1. M,Ma योऽनघ 2. H,V °न ग° 3. A,B,G,J,M,Ma,T °बले 4. H,V °स्नु° 5. A,B,G,J,M,Ma,T तद्दान° 6- -6. A,B,G,J,T तपः स सलिलाशनः ; M,Ma तपस्तत्सलिलाशये 7. A,B,J add कुतः पुनः 8. A,B,J °द्याकारै° 9. A,B,J °ङ्केति 10. A,B,J °सु° 11- -11. A,B,J तत्र राजऋषिरित्यादि यावत्समाप्ति

वदन् विशिनष्टि य ईश्वरो गुणैर्हेयगुणप्रतिभटैः कल्याणगुणैः निर्गुणत्वात् सत्त्वादिप्राकृतगुणरहितत्वाद्धि नोच्चावचत्वं भजत इति - " न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्तिभिर्गुणैः " (भ.गी.18-40) इत्युक्तरीत्या कर्ममूलकसत्त्वादिगुणत्रयसम्बन्धनिमित्तदेवमनुष्याद्युच्चावचत्वं सर्वजीवसाधारणम्। भगवतस्तु गवादिरक्षार्थं स्वेच्छोपात्ताप्राकृतदेवमनुष्यादि सजातीयदिव्यतनोः स्वस्वभावमजहतः कर्मायत्तदेहसम्बन्धतत्प्रयुक्तावद्यत्वं नास्तीत्यर्थः। यद्वा धिय इति छेदः। धीशब्देन प्रकृतिर्लक्ष्यते तद्गुणैः सत्त्वादिभिः हेतुभूतैः उच्चावचत्वं न भजते, कुतः? निर्गुणत्वात् सत्तादिप्राकृतगुणरहितत्वात्, निर्गुणत्वादित्यनेन जीववत्सत्त्वादिगुणपारवश्यं निषिध्यते न तु गुणनियन्तृत्वमपि। तथा सति " प्रधान क्षेत्रज्ञपतिर्गुणेशः " (श्वेता.उ.6-16) इति गुणेशत्व श्रवणविरोधापत्तेः।।६।।

एवं सामान्यतोऽवतारप्रयोजनं तद्याथात्म्यं चाभिधाय विशेषतो मत्स्यावतारप्रयोजनमवतारकालं चाह - **आसीदिति** त्रिभिः। अतीतस्यातिक्रान्तस्य कल्पस्यान्तेऽवसाने, ब्राह्मो नाम नैमित्तिको लय असीत् ब्रह्मणो निद्रायां भवो ब्राह्मः तेनैव निमित्तेन जातो नैमित्तिकः तत्र तदा प्रलयकाले भूरादयः त्रयो लोकाः समुद्रे उपप्लुताः निमग्ना आसन्।।७।।

कालेन दिनावसानरूपकालेन निमित्तेनागतनिद्रस्य सम्प्राप्तनिद्रस्यात एव शिशयिषोः शयितुमिच्छोर्धातुः ब्रह्मणो मुखात् निस्सृतान् गलितान् वेदानन्तिके समीपवर्ती हयग्रीवाख्यो दानवेन्द्रोऽपहृतवान् अन्तिके निस्सृतानिति वा सम्बन्धः।।८।।

तदा दानवश्रेष्ठस्य हयग्रीवस्य तच्चेष्टितं ज्ञात्वेश्वरो हरिर्भगवान् शफरीरूपं मात्स्यं रूपं दधार, हयग्रीवाख्यं दानवं निहत्य वेदान् ब्रह्मणे प्रत्यर्पयितुं मत्स्यरूपेणावततारेति विशेषतः प्रयोजनमुक्तम्, शफरीति स्त्रीत्वमविवक्षितम्। मत्स्यरूपेणावतीर्णः इत्यर्थः।।९।।

एवं सामान्यतो विशेषतश्चावतारप्रयोजनमभिधाय अथावतरणप्रकारं वक्तुमितिहासं प्रस्तौति-तत्रेति। तत्र तस्मिन्नेवातीते कल्पे कश्चित्सत्यव्रताख्यो राजर्षिः महान् अक्रोधाद्यात्मगुणयुक्तः नारायणः परः प्राप्यो यस्य तादृशो बभूव। स च सलिलमेवाशनं यस्य तादृशस्तपोऽतप्यत् चचार।।१०।।

**विज०** ननु उच्चावचेषु सुरनरादिसंज्ञेषु भोगायतनशरीरेषु वर्तमानस्य हरेरिन्द्रियगुणैरवलेपोऽपि सम्भाव्यते देवदत्तवदिति तत्राह - **उच्चावचेष्विति**। धीशब्देन इन्द्रियाण्युपलक्षयति।।६।।

आदित एव वक्तुमुपक्रमते - आसीदिति। समुद्रैरूपप्लुता आलीनाः।।७।।

अन्तिके विदूरतः।। ८-१०।।

**योऽसावस्मिन्महाकल्पे तनयः स विवस्वतः।**
**श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः।।११।।**

**एकदा कृतमालायां कुर्वतो जलतर्पणम्।**
**तस्याञ्जल्युदके काचिच्छफर्येकाऽभ्यपद्यत।।१२।।**

**सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत!**
**उत्ससर्ज नदीतोये शफरीं [1]द्रविडेश्वरः।।१३।।**

**तमाह सातिकरुणं महाकारुणिकं [2]नृप!**
**[3-]मत्स्य उवाच[-3]**
**यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल!**
**कथं विसृजसे राजन्! भीतामस्मिन् सरिज्जले।।१४।।**
**[4-]श्रीशुक उवाच[-4]**

**[5]स आत्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम्।**
**अजानन्रक्षणार्थाय शफर्याः स मनो दधे।।१५।।**

**श्रीध०** य इति स एव श्राद्धदेव इति ख्यातः।।११।।

**एकदेति।** कृतमालायां नद्याम्।।१२-१५।।

**वीर०** सत्यव्रतं विशिनष्टि - य इति। योऽतीतकल्पे सत्यव्रताख्यो राजर्षिः स एव अस्मिन् महाकल्पे विवस्वतस्तनयः श्राद्धदेव इति प्रसिद्धः मनुत्वे मनोरधि[6]कारे हरिणा भगवता अर्पितः निहितः मनुः कारितः इत्यर्थः।।११।।

एकदा कृतमालायां नद्यां जलतर्पणं कुर्वतस्तस्य सत्यव्रतस्य अञ्जल्युदके काचिदेका असहाया शफरी अभ्यपद्यत अदृश्यत। प्राप्तवती वा स्त्रीत्वमविवक्षितम्। "इत्युक्तः सोऽनयन्मत्स्यं समुद्रे प्राक्षिपज्झषम्"। " क्षिप्यमाणः", "तेन वदता तमाह" इत्यादिषु पुंस्त्वनिर्देशस्य बहुलमुपलभ्यमानत्वात्।।१२।।

---

1. H,V द्रविलेश्वरः ; W द्रमिडेश्वरः 2. A,B,G,J,M,Ma,T नृपम् 3- -3. A,B,G,J,M,Ma,T Omit 4- -4. A,B,G,J,M,Ma,T Omit 5. A,B,G,J,T तमा° 6. A,B,T कारत्वे

ततो हे भारत! द्रमिडदेशाधिपः[1] सत्यव्रतः तां शफरीं अञ्जलिगतां तोयेनाञ्जलिस्थेन सह नदीतोये तत्याज।।१३।।

तं त्यक्तवन्तं महाकारुणिकं नृपं सत्यव्रतं सा शफरी अतिकरुणं यथा भवति[2] तथा उवाच। तदेवाह - **यादोभ्य इति**। हे राजन्! ज्ञातीनस्मान् घातयन्तीति तथा तेभ्यः ज्ञातयश्च ते घातिनश्च तेभ्य इति वा यादोभ्यो जलचरेभ्यो भीताम् अत एव दीनां मां हे दीनवत्सल! कथमस्मिन् सरिज्जले बहुजलचराक्रान्ते विसृजसे त्यजसि।।१४।।

इत्येवमुक्तः स राजा सत्यव्रतः आत्मनः स्वस्यानुग्रहार्थं प्रीत्या मत्स्यमूर्तिं बिभ्राणं साक्षात् भगवन्तमजानन् शफरीरक्षणार्थं मनो दधे मनश्चक्रे।।१५।।

**विज०** कोऽसौ सत्यव्रत इति तत्राह - **योऽसाविति**।।११,१२।।

अञ्जलितोयेन।।१३,१४।।

स मनुः शफर्याः रक्षणार्थाय।।१५।।

**तस्या दीनतमं[3] वाक्यमाश्रुत्य स महीपतिः।**
**कलशाप्सु निधायैनां[4] दयालुर्निन्य आश्रमम्।।१६।।**

**सा तु तत्रैकरात्रेण वर्धमाना कमण्डलौ।**
**अलब्ध्वा[5]ऽऽत्मावकाशं[6] सा विदमाह महीपतिम्।।१७।।**

**[7-]मत्स्य उवाच[-7]**

**नाहं कमण्डलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे।**
**कल्पयौकः सुविपुलं यत्राहं निवसे सुखम्।।१८।।**

**[8-]श्रीशुक उवाच[-8]**

**स एनां तत आदाय न्यधादौदञ्चनोदके।**
**तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत।।१९।।**

**न म एतदलं राजन्! सुखं वस्तुमुदञ्चनम्।**
**पृथु देहि पदं मह्यं यत्त्वाहं[9] शरणङ्गता।।२०।।**

---

1. A,B,T 'वि° 2.W Omits भवति 3. A,B,G,J,M,Ma,T 'तरं 4. H,V 'तां 5. A,B,G,J,T 'ब्ध्वा° 6. A,B,G,J,M,Ma,T 'शं वा इद° 7- -7. A,B,G,J,M,Ma,T Omit 8--8 A,B,G,J,M,Ma,T Omit 9.H,V यात्वां

श्रीध० नाहमिति। यत्राहं सुखं निवसामि तदोकः स्थानं कल्पय।।१६-१८।।

स इति। औदञ्चनोदके मणिकस्थे जले।।१९,२०।।

वीर० ततस्तस्याः शफर्याः दीनतरमुक्तं वाक्यमाकर्ण्य स महीपतिः सत्यव्रतः दयालुरेनां शफरीं कलशाप्सु कमण्डलुजले निधाय स्वाश्रमं प्रति निन्ये प्रापयामास।।१६।।

ततः सा शफरी तत्र कमण्डलौ एकरात्रेण वर्धमाना सती कमण्डलोरात्मना पूर्णत्वादलब्ध आत्मन अवकाशो यया सा च महीपतिं सत्यव्रतं प्रति इदं वक्ष्यमाणमुवाच।।१७।।

तदेवाह - नेति। अस्मिन् कमण्डलौ अहं कृच्छ्रं सङ्कटं यथा भवति तथा वस्तुं वासं कर्तुं नोत्सहे, अतः सुविपुलमोकः स्थानं कल्पय यत्राहं सुखं निवसामि तादृशमोकः कल्पयेत्यर्थः।।१८।।

एवमुक्तः सः सत्यव्रतः ततः कमण्डलोः एनां शफरीमादाय औदञ्चनोदके विपुलकटाहोदके मणिकोदके वा न्यधात् निहितवान्। तत्रौदञ्चनोदके क्षिप्ता सा शफरी मुहूर्तेन कालेन हस्तत्रयमवर्धत।।१९।।

तथा वर्धमाना पुनरप्याह - हे राजन्! मे मम सुखं वस्तुं एतदुदञ्चनं नाऽलं न पर्याप्तं ततो मह्यं पृथु विपुलं पदं स्थानं देहि कल्पय यतः त्वामहं शरणङ्गता।।२०।।

विज० अलब्धात्मावकाशमिति क्रियाविशेषणम्।।१६-१८।।

उदञ्चनं माणिक्यं हस्तत्रयं व्यामत्रयम्।।१९।।

पदं स्थानम्।।२०।।

*तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे।
तदावृत्यात्मना [1]सर्वं महामीनोऽन्ववर्धत।।२१।।

[2-]मीन उवाच[-2]

नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः।
निधेहि रक्षायोगेन ह्रदे मामविदासिनि।।२२।।

[3-]श्रीशुक उवाच[-3]

इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि।
जलाशये सम्मितं तं समुद्रे प्राक्षिपज्झषम्।।२३।।

---

*M,Ma add श्रीशुक उवाच 1.A,G,J,T सोऽयं ; B तोयं 2--2. A,B,G,H,J,T,V,W Omit 3- -3. A,B,G,H,J,T,V,W Omit

**क्षिप्यमाणस्तमाहेदमिह मां मकरादयः।**
**अदन्त्यतिबला वीर न [1]मां उत्स्रष्टुमर्हसि[-1]।।२४।।**

**एवं विमोहितस्तेन वदता वल्गुभारतीम्।**
**तमाह को भवानस्मान्मत्स्यरूपेण मोहयन्।।२५।।**

**श्रीध० नेति।** रक्षायोगेन [2]रक्षाया योगेन[-2] उपायेन। यथा महाह्रदप्राप्तेरर्वाक् जलं विना न शुष्येयं तेन उपायेन निधेहि। अविदासिनि अनुपक्षये।।२१,२२।।

**इतीति।** सम्मितं तत्तज्जलाशयपरिमितं [3]सन्तम्।।२३-२५।।

**वीर०** इत्युक्तेन सत्यव्रतेन तत उदञ्चनादादाय सरोवरे क्षिप्ता सती हे राजन्! तत्सरोवरमावृत्य कृत्स्नमभिव्याप्य महामीनरूपेण व्यवर्धत।।२१।।

पुनस्तथा वर्धमान उवाच - हे राजन्! सलिलमेव ओकः स्थानं यस्य तस्य मम स्वस्तये सुखाय सुखं वस्तुं एतत् सारसं जलं नालं सलिलौकसः सरसः सम्बन्ध्ये तदुदकं मम स्वस्तये न भवतीति वाऽन्वयः। अतो रक्षाया योगेन उपायेन अविदासिनि अनुपक्षयजले महाह्रदे [4]निधेहि।।२२।।

इत्युक्तः स सत्यव्रतः तं मत्स्यमुत्तरोत्तरविपुले तत्र तत्र जलाशये अनयत् पुनस्तत्तज्जलाशयेन सम्मितं परिमितं तं मत्स्यं समुद्रे प्राक्षिपत्।।२३।।

समुद्रे च क्षिप्यमाणो झषः तं सत्यव्रतं इदमाह - हे वीर! इह समुद्रे मकरादयोऽतिबलाः जलचराः मामदन्ति अत्स्यन्ति, अतो मामिह समुद्रे त्वं त्यक्तुं [5]नार्हसीति।।२४।।

इत्येवं वल्गुभारतीं सुन्दरवाचं वदता तेन मत्स्यरूपिणा भगवता विमोहितः सत्यव्रतः तं मत्स्यमाह - 'को भवानित्यादिना' इति ब्रुवाणम् इत्यतः प्राक्तनेन ग्रन्थेन, अस्मान् मत्स्यरूपेण मोहयन् भवान् क इति प्रश्नः।।२५।।

**विज०** तत्सरोवरं आत्मना शरीरेणाऽऽवृत्य व्याप्य।।२१।।

अविदासिनि अगाधे अभिन्नसेतौ वा।।२२।।

अनन्तरं किमकरोदिति तत्राह - **इत्युक्त** इति। जलाशये ह्रदे असम्मितमसमानं सम्मितं समानं वा।।२३-२५।।

1--1. A,B,G,J,M,Ma,T मा नेहोत्स्रष्टु 2--2. H,V Omit 3. A,B,J Omit सन्तम् 4. A,B,T रक्षां विधेहीति। 5.W Omits इति।

**नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि वा[1]।**
**यो भवान् योजनशतमह्ना[2]ऽभिव्यानशे[3]ऽमरः।।२६।।**

**नूनं त्वं भगवन्साक्षाद्धरिर्नारायणोऽव्ययः।**
**अनुग्रहाय भूतानां धत्से रूपं जलौकसाम्।।२७।।**

**नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर।**
**भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मा[4]गतिर्विभो।।२८।।**

**सर्वे लीलावतारास्ते भूतानां भूतिहेतवः[5]।**
**ज्ञातुमिच्छाम्यदो रूपं यदर्थं[6] भवता धृतम्।।२९।।**

**न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः।**
**यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः।।३०।।**

**श्रीध० नैवमिति**। अभिव्यानशेऽभितो व्याप्तवान्।।२६,२७।।

**नम** इति। मुख्यः सत्य आत्मा च गतिश्चाश्रयः।।२८,२९।।

**नेति**। हे अरविन्दाक्ष! पृथगात्मनां देहाद्यभिमानिनां सतामितरेषां पदोपसर्पणं यथा मृषा भवेत् तथा सर्वसुहृत्प्रियात्मनस्तव पदोपसर्पणं मृषा न भवेत्, यद्यस्मान्नो भक्तानामद्भुतं वपुरदीदृशो दर्शितवानसि। [7]पृथगात्मनो सतामिति[-7] पाठान्तरे पृथगात्मनो भेददर्शिनः पुंसः। असतां [8]अपरिच्छिन्नानां पदोपसर्पणं यथा मृषेत्यर्थः।।३०।।

**वीर०** कश्चित् मत्स्यविशेष एवाहमिति चेन्नेत्याह - **नेति**। एवंविधप्रभाववान् कश्चिदपि जलचरोऽस्माभिः न दृष्टः नापि श्रुतश्च। एवं वीर्यं इत्युक्तं वीर्यं दर्शयन् विशिनष्टि - य इति। यो भवान् अह्ना कालेन योजनशतमभिव्यानशे अभितो व्याप्तवान्।।२६।।

अतस्त्वं न केवलं मत्स्यः किन्त्वमरो देवः तत्रापि न ब्रह्मादिष्वमरेषु कश्चित् अपि तु साक्षादव्ययः निर्विकारो भगवान् हरिर्नारायणः त्वं नूनं निश्चितमेतदित्यर्थः। तर्हि नारायणस्य मम नैवंविध आकारः किन्तु चतुर्भुजत्वाद्याकारः इत्यतः आह - अनुग्रहायेति। भूतानामनुग्रहाय देवमनुष्यादिभूतान्यनुग्रहीतुं जलौकसां मत्स्यानां रूपं धत्से मात्स्यं रूपं बिभर्षीत्यर्थः।।२७।।

1.A,B,G,J,T च 2.H,V °होऽभि: M,Ma °ह्नाय 3.A,B,G,J,M,Ma,T °नशे सर: 4.A,B,G,J,T °त्म° 5.M,Ma °वे 6.A,B,G,J,M,Ma,T यदर्थं 7- -7. A,B,J Omit 8.A,B,J Omit अ°

कोऽसौ नारायण:? इत्यपेक्षायां तं लक्षयन् नमस्करोति - **नम** इति। हे पुरुषोत्तम! हे जगदुत्पत्ति स्थितिलयकारणभूत! हे विभो! भक्तानां प्रपन्नानां चाऽस्माकं मुख्य: नायकोऽन्तरात्मा गति: स्वप्राप्त्युपायभूत: " **स तत्र पर्येति** " (छान्दो.उ.8-12-3) " **स उत्तम: पुरुष:** " (छान्दो.उ.8-12-3) " **यतो वा इमानि भूतानि जायन्ते** " (तैत्ति.उ.3-1) " **स कारणं करणाधिपाधिप:** " (श्वेता.उ.6-9) " **य आत्मनि तिष्ठन्** " (बृह.उ.3-7-22) " **अन्त:प्रविष्ट: शास्ता जनानां सर्वात्मा** " (तैत्ति.आ.3-11) " **अमृतस्यैष सेतु:** " (मुण्ड.उ.2-2-5) " **नित्यं विभुं सर्वगतं सुसूक्ष्मम्** " (मुण्ड.उ.1-1-6) इत्यादिवेदान्तवेद्यो निखिलजगदुदय विभवलयलील: आत्मेश्वर: सर्वान्तर्गत: सिद्धोपायभूत: पुरुषोत्तमो य: स नारायण: स एवाधुना मत्स्यरूपेणावतीर्ण: इति भाव:। एवम्भूताय ते तुभ्यं नम:। भक्तानां प्रपन्नानां इति प्रपत्त्युपकृत भक्तियोगनिष्ठानां इत्युक्तम्।।२८।।

अनितरसाधारणप्रभावेन त्वं नारायण एवेति निश्चिनोमि। तथा अवतारा अपि सर्वे लोकहितार्था एवेति वेद्म्येव। किन्त्वेतदवतारप्रयोजनं विशेषतो ज्ञातुमिच्छामीत्याह - **सर्व** इति। ते तव सर्वे लीलावतारा: लीलयोपात्ता अवतारा: लीलावतारा: लीलापदेन अवताराणां अकर्ममूलत्वमुक्तं भूतानां देवादीनां, भूति: विभव: तद्धेतव इति सामान्यतोऽवतारप्रयोजनं जानाम्येवेति भाव:। किन्तु यदर्थं यस्मै प्रयोजनविशेषाय अत एतन्मात्स्यं रूपं भवता[1] धृतं तत्प्रयोजनं ज्ञातुमिच्छामि।।२९।।

अनीश्वरभजनवन्मद्भजनं न मुधेति दर्शयितुमिदं मात्स्यं रूपं प्रादर्शि[2] भवतेति जानामीत्यभिप्रायेणाह - **नेति**। हे अरविन्दाक्ष! तव पदोपसर्पणं श्रीपादारविन्दभजनं पृथगात्मनां अब्रह्मात्मकस्वतन्त्रात्माभिमानिनां सतां इतरेषां पदोपसमर्पणमिव न मृषा भवेत् न व्यर्थं भवेत् इत्यर्थ:[3]। अवैयर्थ्ये हेतुं वदन् विशिनष्टि - सर्वसुहृत् प्रियात्मन: सर्वेषां सुहृद: प्रियस्यान्तरात्मनश्च, [4-]यद्वा, सतां सर्वसुहृत् प्रियात्मन इति वाऽन्वय:। तत्पक्षे सतां साधूनां सर्वप्रकारेण सुहृत् प्रियश्च आत्मा स्वरूपं यस्य यो वेति दिक्[-4]। एतद्विपरीतत्वात् इतरेषां पादोपसर्पणं मृषेति भाव:। कुत एतद्विपरीतं न मृषेत्यत आह - हि यस्मात् यदिदमद्भुतं मात्स्यं वपु: नोऽस्माकं भजतामदीदृश: दर्शितवान्।।३०।।

**विज०** एवंविधं वीर्यं यस्य स: एवंवीर्य:, अह्ना झटिति व्यानशे व्याप्त:।।२६।।

---

1.A,B,T भगवता 2.A,B,T प्रदर्शितं 3 A,B,T Omit इत्यर्थ: 4- -4. W Omits

विशेषसम्बन्धित्वान्नारं ज्ञानं तदयनं यस्य स तथा ज्ञानाश्रयः कश्चिच्चेतन एव नारायणः किं न स्यादित्यतः साक्षाद्धरिरिति तुरीयमूर्तिः।।२७,२८।।

यदर्थं यत्प्रयोजनाय भवता आदौ मत्स्यरूपं धृतं तत् प्रयोजनपूर्वकं ज्ञातुमिच्छामीत्यन्वयः।।२९।।

अहं त्वत्स्वरूपज्ञाने योग्य इत्याह - न ते इति। हे अरविन्दाक्ष! यथा पृथगात्मनां भिन्नविषयबुद्धीनां इतरेषां ते तव पदोपसर्पणं मुधा वृथा भवेत् तदप्येवंवित् महत्पुण्यं कर्मकरोति " तद्धास्यां ततः क्षीयते " (बृह.उ.1-4-15) इति श्रुतिः। अत एव पृथगित्युक्तं, सतां तथा न स्यात् तत्र हेतुमाह - अदीदृश इति। तव अद्भुतं नोऽस्माकं इतरमत्स्यविलक्षणत्वादाश्चर्यं यद्वपुः, ' डु वप् बीजसन्ताने ' इति धातोः, जगदुत्पादनसमर्थं रूपं अदीदृशः दर्शितवानिति हि यस्मात् सन्त एतद्रूपज्ञाने योग्या इत्यर्थः। तव विषमस्वभावत्वात् तथा त्वमिति नेत्याह - सर्वेति।।३०।।

**श्रीशुक उवाच**

**इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये।**
**विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षितं[1] कान्तजनप्रियः प्रभुः[2]।।३१।।**

**श्रीभगवानुवाच**

**सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम।**
**निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम्।।३२।।**

**[3]त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा।**
**उपस्थास्यति नौरेका[4] विशाला त्वां मयेरिता।।३३।।**

**त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च।**
**सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः।।३४।।**

**आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः।**
**एकार्णवे निरालोके ऋषीणामेव वर्चसा।।३५।।**

**श्रीध० इतीति।** एकान्तजना भक्ताः [5]तेषां प्रियाण्येव चिकीर्षितानि येन[-5]।।३१।।

1. A,B,G,J,T "कीर्षुरंका", H,V "कीर्षितैका" 2.A,B,G,J,T प्रियम् 3. H,V,W त्रै" 4. A,B,G,J,M,Ma नौः काचित् 5- -5. A,B,J प्रिया यस्य

**सप्तम इति**। अप्ययाम्भोधौ प्रलयार्णवे। भूर्भुवआदिकमित्यर्थः।।३२।।

**त्रिलोक्यामिति**। संवर्ताम्भसि प्रलयोदके। त्वामुपस्थास्यति प्राप्स्यति।।३३।।

**त्वमिति**। ओषधीः, आदायेति शेषः।।३४।।

**आरुह्येति**। ऋषीणामेवाऽऽलोकेन विचरिष्यसि।।३५।।

**वीर०** इतीत्थं भाषमाणं सत्यव्रतं प्रति मत्स्यवपुर्जगदीश्वरो भगवांश्चिकीर्षितमब्रवीत्, कथम्भूतः? प्रलयार्णवे विहर्तुकामः विहारप्रयोजनं दर्शयन् विशिनष्टि - कान्तजनप्रियः कान्तजनानां भक्तजनानां प्रियः प्रभुश्च भक्तजनानां प्रीतिं कर्तुमवतीर्ण इति भावः।।३१।।

एवं पृष्टावतारप्रयोजनविशेषो मत्स्यमूर्तिः भगवान् तत्प्रयोजनविशेषमाह - **सप्तम** इति नवभिः[1]। हे अरिन्दम! अद्यतनादह्नः यस्मिन्नहनि मदवतारः तस्मादह्न आरभ्य सप्तमे अहनीदं भूर्भुवादिकं त्रैलोक्यं अप्ययाम्भोधौ प्रलयोदधौ निमङ्क्ष्यति मग्नं भविष्यति।।३२।।

संवर्ताम्भसि प्रलयोदके त्रिलोक्यां लीयमानायां सत्यां तदा काचिन्मयेरिता प्रेरिता उपकल्पिता विशाला विपुला नौः नौका त्वामुपस्थास्यति त्वत्समीपे स्थास्यतीत्यर्थः।।३३।।

तदा त्वं सर्वा ओषधीर्बीजानि च नानाविधानि नाव्यारोप्येति शेषः। सप्तर्षिभिः सहितः सर्वैः सत्त्वैः जन्तुभिरुपबृंहितः उपश्लिष्टः।।३४।।

बृहतीं विपुलां नावमारुह्य अविक्लबः दैन्यरहितः विचरिष्यसि निरालोको सूर्याद्यालोकरहिते एकार्णवे ऋषीणां वर्चसैवोपलक्षितम्।।३५।।

**विज०** विषयसुखप्रेरकत्वप्रियः " तदेतत्प्रेयः " (बृह.उ.1-4-8) इति श्रुतेः।।३१।।

अद्यतनादह्न ऊर्ध्वं सप्तमेऽहनि निमङ्क्ष्यति निमग्नं भविष्यति, अप्ययाम्भोधौ प्रलयसमुद्रे।।३२।।

संवर्ताम्भसि प्रलयजले उपस्थास्यति समीपमागमिष्यति।।३३।।

सर्वैः सत्त्वैः प्राणिभिः, उपबृंहितः पूरितः।।३४।।

निरालोके तमःप्राये ऋषीणां वर्चसा प्रकाशेनैव नाऽन्येन।।३५।।

**दोधूयमानां तां नावं समीरेण बलीयसा।**
**उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना।।३६।।**

---

1. W Omits नवभिः

**अहं त्वामृषिभिस्साकं सहनावमुदन्वति।**
**विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो।।३७।।**

**मदीयं महिमानञ्च परब्रह्मेति[1] शब्दितम्।**
**वेत्स्यस्यनुगृहीतं[2] मे सम्प्रश्नैर्विवृतं हृदि।।३८।।**

**[3] श्रीशुक उवाच [3]**

**इत्थमादिश्य राजानं हरिरन्तरधीयत।**
**सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत्।।३९।।**

**आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः।**
**निषसाद हरेः पादौ चिन्तयन्मत्स्यरूपिणः।।४०।।**

**श्रीध० दोधूयमानामिति।** महाहिना वासुकिना।।३६,३७।।

**मदीयमिति।** मे मयाऽनुगृहीतं प्रसादीकृतं हृदि अपरोक्षं वेत्स्यसि ज्ञास्यसि[4]। त्वया कृतैः सम्प्रश्नैर्मया विवृतं प्रकाशितं सन्तम्।।३८-४०।।

**वीर०** बलीयसा प्रचण्डेन समीरेण प्रलयवायुना दोधूयमानां नितरां कल्पमानां तां महतीं नावमुपस्थितस्य सन्निहितस्य मम शृङ्गे वासुकिना सर्पेण, उपस्थितेनेति शेषः। तेन बन्धनेन साधनेन निबध्नीहि।।३६।।

तदाहमुदन्वति प्रलयार्णवे ऋषिभिः सहितां महतीं नावं विकर्षन् यावद्ब्रह्मणः चतुर्मुखस्येयं ब्राह्मी निशा रात्रिः प्रवर्तते तावद्विचरिष्यामि।।३७।।

परं ब्रह्मेति शब्दितं परब्रह्मशब्दाभिहितं मदीयं महिमानञ्च वेत्स्यसि महिम्नः ब्रह्मशब्दवाच्यत्वं तस्य ब्रह्मशब्दप्रवृत्तिनिमित्ताश्रयत्वेन निरतिशयबृहत्त्वं हि ब्रह्मशब्दार्थः। कथम्भूतम्? मया अनुगृहीतं मयोपदिष्टमित्यर्थः, सम्प्रश्नैस्त्वत्कृतैर्हृदि विवृतम्। अत्र केचिद्व्याचक्षते, *अत्रोक्तः प्रलयः किं महाप्रलयः? उत दैनन्दिनो वेति? तत्र तावद्ब्रह्मलोकलय इति "योऽसावस्मिन् महाकल्पे" (भाग. 8-14-1) इति चोक्तेः महाप्रलय इति। प्राप्तं[5] नेति ब्रूमः। महाप्रलये पृथिव्यादीनामवशेषासम्भवात् यावद्ब्राह्मी निशेत्याद्युक्तिविरोधाच्च अतो दैनन्दिन इति युक्तम्, न च एतदपि सङ्गच्छते - सांवर्तकैः अनावृष्ट्यादिभिः विना अकस्मादेव सप्तमेऽहनि

1.A,B,G,J,M,Ma,T परं ब" 2 W "ष्यनु" 3--3.A,B,G,J,T,V,W Omit 4.B,H,J,V Omit ज्ञास्यसि *- -* अत्रोक्तः इत्यारभ्य: दिगिति पर्यन्तः ग्रन्थ भाग. A,B प्रकाशयो, कुण्डलीकृत.। 5. A,B,T add तावत्

त्रैलोक्यं निमङ्क्ष्यति इति मत्स्योक्तेरनुपपत्तेः यच्चोक्तं प्रथमस्कन्धे - " रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे। नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् "।। (भाग.1-3-15) इति तदपि तदा दुर्घटं न हि। प्रलयद्वयेऽपि महीमय्यां नाव्यारोहः सम्भवति। न च चाक्षुषमन्वन्तरे प्रलयोऽस्ति तथा च सति सप्तमो मनुः वैवस्वत इत्यपि दुर्घटं स्यात् " त्वं तावदोषधीः सर्वाः " (भाग.8-24-34) इत्यादिनिर्देशोऽपि न सङ्गच्छते न हि तदा ओषध्यादीनां सत्त्वानां चाऽवशेषः सम्भवति तस्मात् अन्यथा वर्ण्यते नैवायं वास्तवः कोऽपि प्रलयः किन्तु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो[1] भगवान् वैराग्यार्थमकस्मात् प्रलयमिव दर्शयामास यथा अस्मिन्नेव वैवस्वते मन्वन्तरे मार्कण्डेयाय दर्शितवान् तदपेक्षयैव च महाकल्पेऽस्मिन्निति विशेषणं सङ्गच्छते तथा च " ततस्समुद्र उद्वेलः सर्वतः समदृश्यत " (भाग.8-10- 51) इति तस्यैव तथा दर्शनमुक्तमित्येषा दिगिति । अत्रेदं वक्तव्यं यदि वैराग्यजननद्वारा ज्ञानोपदेशार्थमाविर्भूतो भगवान् वैराग्यार्थं सत्यव्रतायैव अकस्मात् प्रलयदर्शनं, तर्हि - "आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः" (भाग.8-24-7) इत्यादेः, " कालेनाऽऽगतनिद्रस्य धातुः शिशयिषोर्बली। मुखतो निस्सृतान् वेदान् " (भाग.8-24-8) इत्यादेश्च अवतारकालप्रदर्शनपरस्य अवतारप्रयोजनप्रदर्शनपरस्य चोपक्रमस्य ग्रन्थस्यासङ्गत्यापत्तेः, तत्र 'कालेनाऽऽगतनिद्रस्य धातुः शिशयिषोः' इति स्वरसतः सुव्यक्तं दैनन्दिनप्रलयावगमात् सत्यव्रतस्यैव प्रलयप्रदर्शने हयग्रीवाख्यासुरेण वेदापहरणस्य[2] कथनानुपपत्तेश्च तत्र राजर्षिः कश्चिदित्यादिनाऽतीतकल्पे सत्यव्रतस्य सतः पुनः तस्मिन् कल्पे "योऽसावस्मिन्महाकल्पे " (भाग.8-24-11) इत्यादिना वैवस्वतमनुत्वकरण कथनानुपपत्तेश्च, न हि चाक्षुष एव मन्वन्तरे सत्यव्रतत्वेन अवस्थितस्य तस्मिन्नेव मन्वन्तरे वैवस्वतमनुत्वेन अवस्थानकथनमुपपन्नम्, न हि सत्यव्रतस्याकस्मात् प्रलयप्रदर्शनमात्रेण धातुः शिशयिषोर्मुखतो वेदानां निस्सृतिरसुरेण तदपहृतिश्च सम्भवति। तस्मादतीतदैनन्दिनकल्पावसानिक एव प्रलयोऽत्र विवक्षितः, न च श्रीमत्स्योक्तिविरोधः सांवर्तकानां अनावृष्ट्यादीनां शब्दतोऽनुपात्तानामप्यर्थतोऽत्र विवक्षितत्वात्। मा भूद्वा कल्पविशेषावसाने अनावृष्टिः। वृष्टिस्तु " वर्धमानो महामेघैर्वर्षद्भिस्समदृश्यत " (भाग.8-24-41) इत्युक्तैव। न च प्रथमस्कन्धवचनस्य दौर्घट्यं दैनन्दिनकल्पविशेषावसाने महीमय्यां नावि ओषध्यादीनामारोपसम्भवात् चाक्षुषान्तरशब्देन चाक्षुषमन्वन्तरयुक्तो वर्तमानो दैनन्दिनकल्पो लक्ष्यते तस्मात् प्राक्तनो यः सम्प्लवःअतीतकल्पावसानिकः

---

1. A,B,T 'तम' 2. A,B,T 'हारस्य।

तस्मिन्नावि आरोप्येत्यर्थः। न च औषध्यादीनामवशेषासम्भवः तदविशेषस्यैतत् ग्रन्थादेवावगमात् कल्पविशेषे तदवशेषोपपत्तेश्चेति।।३८।।

एवं राजानं सत्यव्रतमाज्ञाप्य हरिः मत्स्यरूपः तत्रैवान्तर्हितवान्। ततः सत्यव्रतः यं कालं हृषीकेशो मत्स्यमूर्तिरादिशत् "सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम!" (भाग.8-24-32) इति निर्दिष्टवान् तमेव कालं अन्ववैक्षत प्रतीक्षितवान्।।३९।।

राजर्षिः सत्यव्रतः दर्भान् प्रागग्रानास्तीर्य तेषु प्रागुदङ्मुखः ईशान्याभिमुखो निषसाद उपविष्टवान्। कथम्भूतस्सन्? श्रीमत्स्यरूपिणो हरेर्भगवतः श्रीपादौ चिन्तयन्।।४०।।

**विज०** दोधूयमानां इतस्ततोऽत्यन्तं कम्प्यमानां निबध्नीहि निबन्धनं महाऽहिना पाशेन।।३६।।

ब्राह्मी ब्रह्मसम्बन्धिनी।।३७।।

तव सम्यक् प्रश्नैः हृदि विवृतं स्पष्टीकृतं मयाऽनुगृहीतं मदीयं ब्रह्मेति शब्दितं महिमानं ज्ञास्यसि।।३८।।

अन्ववैक्षत प्रतीक्ष्याऽऽस्थितः।।३९,४०।।

**ततस्समुद्र उद्वेलः सर्वतः प्लावयन् महीम्।**
**वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत।।४१।।**

**ध्यायन्भगवतः[2] पादौ ददृशे नावमागताम्।**
**तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः।।४२।।**

**तमूचुर्मुनयः प्रीता[3] राजन् ध्यायस्व केशवम्।**
**स वै नः सङ्कटादस्मादविता[4] शं विधास्यति।।४३।।**

**सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे।**
**एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः।।४४।।**

**निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा।**
**वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम्।।४५।।**

---

1.A,B,T "ध्या" 2.A,B,G,J,M,Ma,T "वदादेशं 3. M,Ma "तं 4. "नाशं

**श्रीध० निबध्येति।** वरत्रेण दोरकरूपेण[1]।।४१-४५ ।।

**वीर०** ततस्तत्रैवं सत्यव्रते चिन्तयति सति वर्षद्भिः महामेघैर्वर्धमानः समुद्रः उद्वेलः मर्यादातिगः सर्वतो महीं प्लावयन् निमज्जयन् समदृश्यत, सत्यव्रतेनेति शेषः।।४१।।

तदा सत्यव्रतः श्रीभगवतो मत्स्यरूपिण आदेशं ध्यायन् सन्निहितां नावं दृष्टवान् तत ओषधीः वीरुधः बीजानि च आदाय विप्रेन्द्रैः सप्तर्षिभिस्सह सत्यव्रतः तां सन्निहितां नावम् आरुरोह।।४२।।

ततस्तं सत्यव्रतं मुनयः सप्तर्षय ऊचुः हे राजन्! केशवं ध्यायस्व स केशवः नोऽस्मात्सङ्कटात् रक्षिष्यति शं सुखं विधास्यति करिष्यतीति।।४३।।

एवमुक्तेन राज्ञा सत्यव्रतेनानुध्यातो भगवान् प्रादुर्बभूव। कथम्भूतः? एकं[2] शृङ्गं धरतीति तथा हैमः स्वर्णाभः नियुतयोजनः[3] लक्षयोजनपरिमितकायः।।४४।।

ततो हरिणा पूर्वं यथोक्तः तथैव वरत्रेण दोरकरूपेण अहिना महासर्पेण वासुकिना[4] नावं तस्य [5]मत्स्यरूपिणो भगवतः[5] शृङ्गे निबध्य [6]शृङ्खलितां कृत्वेत्यर्थः। सन्तुष्टचित्तो मधुसूदनं हरिं तुष्टाव स्तुतिं चकारेत्यर्थः[6]।।४५।।

**विज०** अविनाशं विनाशविरोधिजीवानां[7] शं सुखं अविनाशं सुखयुक्तं पदं विधास्यतीति वा।।४१-४४।।

वरत्रेण पाशेन मधुवन्मधु संसारं सूदितवानिति मधुसूदनः तम्।।४५।।

**राजोवाच**

**अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः।**<br>**यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान्।।४६।।**

**जनोऽबुधो यं निजकर्मबन्धनः सुखेच्छया[8] कर्म समीहतेऽसुखम्।**<br>**यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं विभिन्द्याद्धृदये[9] स नो गुरुः।।४७।।**

**यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः।**<br>**भजेत वर्णं निजमेष[10] सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः।।४८।।**

**न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनास्स्वयम्।**<br>**कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये।।४९।।**

---

1. H,V Omit दोरक 2. A,B,T °क 3. W °नपरि 4. W Omits वासिकिना 5- -5. W मत्सस्य 6- -6. सन्तुष्टचित्तः हरिं तुष्टाव
7. A,B जीविनां 8. A,B,G,J,T स भि° 9. A,B,G,J,T दय 10. W °व

**[1]सचक्षुरन्धस्य यथाग्रणीः कृतस्तथा जनस्याविदुषो[2] बुधो गुरुः।**
**त्वमर्कदृक्[3] सर्वदृशां समीक्षणो वृतो गुरुर्नः सुगतिं[4] बुभुत्सताम्।।५०।।**

**श्रीध०** [*]"सागरं तारयिष्यन्तं तरिष्यन्निव सागरम्। सत्यव्रतो गुरुत्वेन तुष्टाव हरिमष्टभिः।।" अत्रेदं चिन्त्यम् - किमयं महाप्रलयो दैनन्दिनो वेति। तत्र तावत् ब्राह्मो लय इति " योऽसावस्मिन्महाकल्पे " (भाग.8-24-11) इति चोक्तेर्महाप्रलय इति प्राप्तम्। नेति ब्रूमः, महाप्रलये पृथिव्यादीनामवशेषासम्भवात्, 'यावद्ब्राह्मी निशा' इत्याद्युक्तिविरोधाच्च। अतो दैनन्दिन इति युक्तम्। न चैतदपि सङ्गच्छते, सांवर्तकानां[5] वृष्ट्यादिभिर्विना अकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमङ्क्ष्यतीति मत्स्योक्तेरनुपपत्तेः। यच्चोक्तं प्रथमस्कन्धे - "रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे। नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् "।। इति। तदपि तदा दुर्घटं, न हि प्रलयद्वयेऽपि महीमय्यां नाव्यारोहः सम्भवति, न च चाक्षुषमन्वन्तरे प्रलयोऽस्ति, तथा च सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घटं स्यात्। " त्वं तावदोषधीः सर्वाः " (भाग.8-24-34) इत्यादि निर्देशोऽपि न सङ्गच्छते न हि तदा ओषध्यादीनां सत्त्वानां चाऽवशेषः सम्भवति। तस्मादन्यथा वर्ण्यते। नैवायं वास्तवः कोऽपि प्रलयः, किन्तु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो भगवान् वैराग्यार्थमकस्मात् प्रलयमिव दर्शयामास। यथाऽस्मिन्नेव वैवस्वतमन्वन्तरे मार्कण्डेयाय दर्शितवान्। तदपेक्षयैव महाकल्पेऽस्मिन्निति विशेषणं सङ्गच्छते। तथा च - "ततस्समुद्र उद्वेलः सर्वतस्समदृश्यत" इति तस्यैव तदा[6] दर्शनमुक्तमित्येषा दिक्। प्रस्तुतं स्तोत्रं व्याख्यास्यामः। तत्र नानायोनिषु संसरतः स्वस्य भगवत्कृपयैव तत्प्राप्तिं दृष्ट्वा मुक्तये तमेव प्रार्थयते - **अनादीति**। अनादिर्याऽविद्या तयोपहता आवृत्ता आत्मसंवित्[7] एषां ते, अत एवाविद्यामूलैः संसारपरिश्रमैरातुरा इह संसारे यदृच्छया यदनुग्रहादेवोपसृता आश्रितास्सन्तो यमाप्नुयुः[8-] प्राप्नुवन्ति[-8] स भवानेव साक्षान्नो गुरुस्सन् ग्रन्थिं भिन्द्यात् इत्युत्तरेणान्वयः।।४६।।

ननु वैराग्यं विना कुतो मुक्तिस्तर्हि तस्य त्वत्सेवैकफलत्वात्सेवामादिशेत्याशयेनाह - **जन** इति। अबुधोऽयं जनः असुखं यथा भवति तथा कर्म समीहते। तां असन्मतिं[9] सुखेच्छां धुनोति[10]। नो हृदयरूपं ग्रन्थिं [11]स विभिन्द्यात्। यतः स एव परमो गुरुः।।४७।।

ननु यज्ञदानादिभिः सत्त्वशुद्धिं विना कथं ग्रन्थिभेदः स्यात्तत्राह - **यत्सेवयेति**। यस्य सेवयैव पुमान्

---

1. A,B,G,J,T अ" 2. A,B,G,J,M,Ma,T,W "षोऽबु 3. M,Ma "मर्थ " 4. A,B,G,J,T "स्व" * श्रीधरीयोऽयं श्लोकः। 5. A,B,J "कैरनावृं 6. A यथा , B तथा 7. A,B,J आत्मनः संवित् एषां 8- -8. M,V प्राप्नुयुः 9. A,B,J Omit असन्मतिं 10. A,B,J Omit धुनोति 11. A,B,J Omit वि

आत्मनो मनसो मलं तमो विजह्यात्। एष हीनमलो निजं वर्णञ्च [1]सत्त्वस्वरूपं [2]भजेत। स ईशो नो गुरुर्भूयात्। यतः स एव गुरोरपि परमो गुरुः। मलहानौ[3] दृष्टान्तः - रुद्ररोदनं [4-]रुद्रस्य रोदनं[-4] रजतम्। "यदरोदीत्त द्रुद्रस्य रुद्रत्वं यदश्रशीर्यत तद्रजतं हिरण्यमभवत्।" इति श्रुतेः। [5]तद्वत् यथाग्नेः सम्पर्कान्मलं जहाति [6]स्ववर्णं भजते न तु क्षालनादिभिस्तथा न यज्ञादिभिर्मलत्यागः, किन्तु त्वत्सेवयैव। तेषां तु सेवाङ्ग[7]त्वमेवेति भावः।।४८।।

परमेश्वरत्वं परमगुरुत्वञ्च प्रपञ्चयन्नाह - **नेति**। यत्प्रसादस्यायुतभागस्तस्य लेशमात्रमपि अन्ये देवादयः [8]सर्वे समेता अपि स्वयं तन्निरपेक्षास्सन्तः कर्तुं न प्रभवन्ति।।४९।।

तदेव दृष्टान्तेन स्पष्टयन्नाह - स **चक्षुरिति**। अविदुषो जनस्[9-]य बुधो[-9] विद्वान् गुरुः तथैव। [10]त्वन्तु अर्कप्रकाशवत्स्वत एव दृक् ज्ञानं यस्य सोऽर्कदृक्। अतः सर्वदृशां सर्वेन्द्रियाणां समीक्षणः प्रका[11]शकः। अत एव [12]सुगतिं बोद्धुमिच्छद्भिर्नोऽस्माभिर्गुरुर्वृतोऽसि।।५०।।

**वीर०** स्तोत्रमेवाह - अनाद्यविद्येत्यादिना [13-]इत्युक्तवन्त इत्यतः प्राक्तनेन ग्रन्थेन[-13]। " वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि " (भाग.8-24-35) इति [14-]श्रीभगवतैव[-14] तत्त्वप्रश्नाय सञ्चोदितः सत्यव्रतः तावत् तत्त्वजिज्ञासुः अनादिदेहात्मभ्रान्तिस्वतन्त्रात्मभ्रान्तिरूपाज्ञानमूलकर्मवासनाभिः संसरतां जीवानां " ईश्वरस्य च सौहार्दं यदृच्छा सुकृतं तथा विष्णोः कटाक्षः " इत्युक्तरीत्या केवलं प्रथमोपकर्तुः श्रीभगवत्कृपयैव सदाचार्यसम्बन्धो नान्यथेत्यवबोधयितुं त्वत्कृपयैव परमगुरोस्तव प्राप्यस्य सान्निध्यं गत इत्यभिप्रयन् स्तौति - **अनादीति**। अनाद्यविद्यया देहात्माभिमानादिरूपेणानाद्यज्ञानेन उपहता [15]अपगता आत्मसंवित् स्वात्मपरमात्मयाथात्म्यज्ञानं येषां ते, अत एव तन्मूलेन अनाद्यविद्योपहतात्मज्ञाननिमित्तेन संसारपरिश्रमेण तापत्रयेणातुराः दुखिताः, जनाः इति शेषः। इह संसारे यदृच्छया यादृच्छिकसुकृतमूलया त्वत्कृपयेत्यर्थः। उपसृताः सदाचार्यद्वारा संश्रितास्सन्तो यं प्राप्नुयुः स भवानेव विमुक्तिदः मुक्त्युपायभूतः यं प्राप्नुयुरित्यनेन प्राप्यत्वमुक्तम्। विमुक्तिद इत्यनेन प्रापकत्वमुक्तम्। नोऽस्माकं परमो गुरुश्चा[16]भूत् परमः नितरां प्राप्यः गुरुः तत्त्वप्रश्नप्रेरणया हितोपदेष्टृत्वेन अज्ञाननिवर्तनेन चोपायभूतश्चासीदित्यर्थः।।४६।।

जनस्य [17]अनाद्यविद्ययोपहतात्मसंवित् त्वं तन्मूलकदेहसुखार्थप्रवृत्तिं पुनर्भगवत्सेवया

---

1. A,B,J Omit सत्त्व 2. A,B,J भजेत् 3. A,J हाने ; B हीने 4- -4. H,V Omit 5. A,B,J तत् 6. A,B,J स्वं 7. A,B,J °मेति 8. H,V Omit सर्वे 9- -9. A,B,J °स्याबुधोऽवि 10. B,H,V Omit त्वन्तु 11. H,V °शः 12. A स्वगतिं 13- -13. W Omits 14- -14. W Omits 15. A,B,T तिरोहिता 16. W ०भवत् 17. W °द्योप°

अविद्या निवृत्तिकथनेन तस्य गुरुशब्दप्रवृत्तिनिमित्ताश्रयत्वं च वदन् स्वाविद्यानिवृत्तये तं प्रार्थयते - **जन** इति। जनः जन्ममरणादि भाक् जीववर्गः अबुधः देहात्माद्यभिमानवान् निजकर्मबन्धनः पुण्यपापात्मकानादिकर्मवश्यः सुखेच्छया शब्दादिवैषयिक - सुखसम्पादनेच्छया असुखं दुःखं यथा तथा कर्म समीहते चेष्टते करोतीति यावत्। पुनर्यस्य तव सेवया तामसन्मतिं देहात्माभिमानस्वतन्त्रात्माभिमानादिरूपामसतीं मतिं विधुनोति निरस्यति स गुरुः हितोपदेष्टा अज्ञाननिवर्तकश्च भवान् नोऽस्माकं ग्रन्थिम् असन्मतिरूपां भिन्द्यात् अपनुद्यात्।।४७।।

न केवलं भगवत्सेवा असन्मतिमेव निरस्यति अपि तु तन्मूलभूतं कर्म पुण्यपापात्मकमात्मस्वरूप तिरोधायकमपीति वदन् तं स्वहितोपदेशाज्ञाननिवर्तनार्थं प्रार्थयते - **यदिति**। पुमान् मुमुक्षुर्यस्य तव सेवया आत्मनस्तमः तमोवत्तिरोधायकं मलं पुण्यापुण्यकर्मात्मकं पापं जह्यात् त्यजेत्। तत्र दृष्टान्तः - रुद्ररोदनं रजतपिण्डः सुवर्णपिण्डो वा। " यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवसि यत्तद्रजतं हिरण्यमभवत् " इति श्रौतप्रसिद्धेः। स तु यथाग्नेः सेवया न तु क्षालनादिना मलं जह्यात् निजवर्णं स्वासाधारणं वर्णं भजेत च। तद्वदिति रुद्ररोदनमलस्य अग्निसम्पर्कान्योपायानपनोद्यत्वदृष्टान्तकथनेन आत्मनो मलस्यापि भगवत्सेवेतरानपनोद्यत्वमभिप्रेतं स ईश्वरो नोऽस्माकं गुरु भूयात् अतः स एव गुरोरपि परमो गुरुः अर्वाचीनगुरुणामपि " आचार्यं मां विजानीयात् " (भाग.11-17-27) इति तदात्मकत्वस्मरणात् तद्व्यतिरिक्तो न कश्चिद्गुरुरस्तीति भावः।।४८।।

यत्सेवया आत्मनो मलं विजह्यादित्यनेन मुक्तिविरोधिपापकर्मनिवर्तकत्वकथनेन तस्यैव मोक्षप्रदत्वमुक्तम्। तदेव व्यतिरेकमुखेनापि वदन् देवतान्तराणाममुक्तिदत्वं च वदंस्तमेव शरणं व्रजति- **नेति**। पुंसः भगवत्सेवाविधुरस्य पुंसः अन्ये देवाः सर्वे समेता अपि स्वयं निरपेक्षास्सन्तो गुरवोऽपि सन्तः यत्प्रसादायुतभागलेशं यस्य भगवतः तव प्रसादस्यायुतभागः अयुतसंख्याकानां भागानां मध्ये य एको भागः तस्य लेशं कर्तुं न प्रभवन्ति मोक्षप्रदानासमर्था इत्यर्थः। तं मुक्तिदं ईश्वरं सर्वान्तरात्मानं त्वां शरणं प्रपद्ये मुक्त्युपायत्वेन अध्यवस्यामि।।४९।।

देवतान्तराणां तत्प्रसादायुत भागलेशकरणासमर्थत्वे कर्मवश्यत्वतन्मूलकासर्वज्ञत्वादिकमेव हेतुरित्यभिप्रयन् अज्ञलोकस्य ब्रह्मादिस्तम्बपर्यन्तस्य अज्ञाननिवर्तनोपयुक्तसार्वज्ञादिगुणयुक्तं त्वामेव गुरुं वृणोमीत्याह - **सचक्षुरिति**। अन्धस्य चक्षुरिन्द्रियरहितस्य पुंसो यथा सचक्षुः पुमान् अग्रणीः पुरतो नेता कृतः

वृतः तथाऽविदुषः स्वात्मरक्षणोपयुक्तज्ञानेनापि विरहितस्य जनस्य जन्ममरणादिभाजो ब्रह्मप्रभृति जीववर्गस्य त्वमर्कदृक् अर्कप्रकाशवत् स्वत एव दृक् ज्ञानं यस्य सः, अर्क एव दृक् यस्येति वा। " चक्षोस्सूर्योऽजायत " (पु.सू.1-6), " अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ " (मुण्ड.उ.2-1-4) इत्यादिश्रुतेः अनेन सर्वज्ञत्वमुक्तम्, सर्वदृशां समीक्षणः प्रकाशकस्यपि प्रकाशकत्वशक्तिप्रदः " तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " (कठ.उ.6-2-15) इति श्रुतेः। अनेन ज्ञानप्रदत्वमुक्तम्। एवम्भूतस्त्वं सुगतिं समीचीन त्वत्प्राप्त्युपायं बुभुत्सतां बोद्धुमिच्छतामस्माकं गुरुर्वृतः [1-]कर्तरि षष्ठी[-1] बोद्धुमिच्छद्भिः गुरुत्वेन वृत इत्यर्थः।।५०।।

**विज०** अनाद्यविद्योपहतात्मसंवित् परमात्मज्ञानं येषां ते तथा सा विद्या मूलं कारणं यस्य सः तन्मूलः, स च संसारः तन्मूलसंसारः तस्मिन् परिभ्रमः ततः आतुराः क्लिष्टाः यदृच्छया पूर्वजन्मार्जितपुण्याभिमुखीभूतदेवेच्छया इह लोके विशिष्टजन्मोपसृताः पुरुषाः यमाप्नुयुः स परमो गुरुर्भवान्नो विमुक्तिदोऽस्त्वित्यन्वयः।।४६।।

कर्मनिर्मूलनं भगवत्सेवनमेवेत्याह - **जन** इति। आत्मीयकर्मणा बन्धनं यस्य स तथा अयमबुधो जनः सुखमाप्नुवानि इतीच्छया कर्म समीहते ततः सुखं दुःखमाप्नोति इति यत्ततो बुधो जनो यस्य ईश्वरस्य सेवया कर्मविषयाम् असन्मतिं विधुनोति अतः कर्मनिर्मूलनं चाप्नोति, गुरुर्ज्ञानोपदेष्टा स नो हृदये स्थितां ग्रन्थिं कर्मपाशकृतां भिन्द्यादित्यन्वयः।।४७।।

एष पुमान् यत्सेवया आत्मनस्तमोलक्षणं मलं विजह्यात् जहाति निजं वर्णं परमात्मगतिं आनन्दस्वरूपं च भजेत भजते। कथमिव? अग्निदाहलक्षणसेवया रुद्ररोदनं हिरण्यं स्वमलं दशविधं [2]जह्यात् जहाति निजवर्णं शास्त्रसिद्धं स्वरूपं भजति यथा तथेत्यर्थः। किञ्च स जीवः पुनरव्ययोऽसंवृतः आवरणरहितो भवति 'व्येञ् संवरणे ' इति धातोः। गुरोर्गुरुः स परमो नो मुक्तिदो भूयादित्यन्वयः। ईशः मुक्तिदानसमर्थः ईः लक्ष्मीः तस्याः शं यस्मात् स इति वा। " जातरूपं श्रीमुकुटं हिरण्यं रुद्ररोदनम् " इत्यभिधानम्। स भवान् अव्यय इति वा।।४८।।

अन्ये देवाः अन्ये गुरवो जनाश्च स्वयं समेताः मिलिताः पुंसः यस्य हरेः प्रसादायुतभागलेशं कर्तुं न प्रभवन्ति, तदनुग्रहमन्तरेणेति शेषः। अहं तं त्वामीश्वरं शरणं यामीत्यन्वयः।।४९।।

---

1--1.W Omits 2. A,B Omit जह्यात्

यथाऽन्धस्य पुंसः सचक्षुर्दृष्टिमानग्रणीः अग्रतो गन्ता कृतः यथा चाऽविदुषो जनस्य बुधो जनो गुरुः कृतः, शास्त्रविशारदैरिति शेषः। तथा सुगतिं बुभुत्सतां बोद्धुमिच्छतां नोऽर्थदृक् पुरुषार्थद्रष्टा सर्वदृशां सर्वेन्द्रियाणां समीक्षणः साक्षी त्वं गुरुर्वृतः, ज्ञानोपदेशकत्वेनेति शेषः। अचक्षुरिति पाठे अयमर्थः - त्वामन्तरेणेतरेषां गुरुत्वं पुरुषार्थानुपयोगिसम्यग्ज्ञानहीनत्वादित्याह - अचक्षुरिति। यथाऽन्धस्याऽचक्षुषोऽन्धोऽग्रणीः कृतो भवति तथाऽविदुषो जनस्याबुध एवं गुरुर्भवति। " अन्धेनैव नीयमाना यथान्धाः " (कठ.उ.2-5), " उभावप्यश्रुतग्रन्थौ उभावपि जडात्मकौ " इत्यादिश्रुतिस्मृतिभ्यः त्वन्त्वार्थदृक् शिष्यस्यापेक्षितपुरुषार्थदर्शी। कुतः ? दर्शनसाधनत्वेन दृशोऽपीन्द्रियाणि तेषां साक्षित्वादस्माकं गुरुत्वेन वृत इति।।५०।।

**जनो जनस्यादिशतेऽसतीं गतिं[1] यया[2] प्रपद्येत दुरत्ययं तमः।**
**त्वमव्ययं[3][4] ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम्।।५१।।**

**त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञान मभीष्टसिद्धिदः[5]।**
**अथापि[6] लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः।।५२।।**

**तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय।**
**छिन्ध्यर्थदीपै[7] भगवन्वचोभिर्ग्रन्थीन्हृदय्यान्विवृणु स्वमोकः[8]।।५३।।**

**श्रीशुक उवाच**

**इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः।**
**मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत्।।५४।।**

**पुराणसहितां दिव्यां सांख्ययोगक्रियावतीम्।**
**सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः।।५५।।**

**श्रीध०** किञ्च प्राकृतो गुरुरनर्थहेतुरेवेत्याह[9] - **जन** इति। आदिशते उपदिशति। असतीं गतिम्[10] अर्थकामादिगतिम्[11]। तमः संसारम्।।५१।।

ननु तर्हि सर्वोऽपि लोको मामेव किं नोपसर्पति[12], अज्ञानादित्याह - **त्वमिति**। प्रियश्चासौ ईश्वरश्च।।५२।।

---

1. A,B,G,J,T मतिं 2. M,Ma तथा 3. A,B,G,J,T त्वं त्वव्ययं 4.H.V "व्ययज्ञा" 5. A,B,G,J,M,Ma,T "द्धि· 6. A,B,G,J,M,Ma,T त" 7. M,Ma भि" 8. H,V स्वलोकः: 9. A,B,J "रित्याह 10. A,B,J म" 11.A,B,J "म" 12. A,B,J सर्पति

**अहं तु त्वामेव शरणं यामीत्याह - तं त्वामिति**। प्रतिबोधनायोपदेशाय। अर्थदीपैः परमार्थप्रकाशकैः। हृदये भवान् ग्रन्थीन् अहङ्कारादीन्। स्वलोकः[1] स्वरूपं[2] विवृणु प्रकाशय।।५३।।

**इतीति**। नृपतिं प्रति।।५५।।

**पुराणेति**। पुराणसंहितां मत्स्यपुराणमशेषतोऽब्रवीदित्यनुषङ्गः।।५५।।

**वीर०** युक्तश्चैतत् इतरेषां गुरुम्, अन्यानामनर्थहेतुत्वात् भवतस्तु निरतिशयपुरुषार्थहेतुत्वादित्याह - **जनं इति**। जनः जन्ममरणादिभाक् संसारी जीवः गुरुत्वाभिमानवान् जनस्य संसारिणो जीवस्यासतीं गतिमर्थकामाद्युपायम् आदिशते आज्ञापयति बोधयतीत्यर्थः। तदादिष्टगतेरसत्त्वं दर्शयन् विशिनष्टि - **ययेति**। यया संसारिणोपदिष्टया गत्या अन्ततो दुरत्ययमनतिक्रमणीयं तमः स्वपरस्वरूपतिरोधायकं संसृतिरूपं प्रपद्यते प्राप्नोति, त्वं तु अव्ययमक्षय्यफलप्रदं केवलानन्दैकहेतुममोघं फलाविनाभाविज्ञानं स्वपरयाथात्म्यगोचर-ज्ञानमादिशत इत्यनुषङ्गः। तुशब्देन निरस्तनिखिलदोषत्वसमस्तकल्याणगुणगणत्वादिना जगद्वैलक्षण्यमभिप्रेतम्। तदादिष्टज्ञानस्य निरतिशयपुरुषार्थहेतुत्वं दर्शयन्[3] विशिनष्टि - **अञ्जसेत्यादिना**। येन त्वदादिष्टेन ज्ञानेन जनोऽञ्जसा सुखेनैव निजं वैष्णवं पदं स्थानं प्रपद्यते। निजमित्यनेन यथा तुशब्देन भगवतो निरस्त निखिलदोषत्वेन समस्तकल्याणगुणात्मकत्वेन च जनाद्वैलक्षण्यमभिप्रेतं तदा तत्पदस्य निरस्तनिखिलदुःखमि-श्रत्वादिक्षुद्रत्वादिदोषत्वेन निरतिशयकेवलानन्दादिमत्वेन च वैलक्षण्यमभिप्रेतम्। अञ्जसा इत्यनेन जनोपदिष्टयाऽसत्यापि गत्या तत्फलभूतार्थकामादेरपि दुःखप्राप्यत्वमभिप्रेतम्।।५१।।

ननु जनविलक्षणो निरतिशयपुरुषार्थप्रदश्चेत् अहमेव सर्वैरपि किं न समाश्रीये? इत्यत्राऽऽह[4] - **त्वमिति**। सर्वलोकस्य अनालोचितविशेषाशेषलोकस्य त्वं सुहृत् हितैषी प्रियः प्रीतिविषयश्चासौ ईश्वरोऽन्तः प्रविश्य नियन्ता, आत्मा धारकः, गुरुर्हितोपदेष्टा, ज्ञानं ज्ञानप्रवर्तकोऽभीष्टसिद्धिदश्च[5] अथापि यद्यप्युक्तविधः त्वं तथापि हृदयकमल एव वसन्तं भवन्तम् उक्तविधं न सर्वो लोको जानाति। अज्ञाने हेतुं वदन् लोकं विशिनष्टि - **अन्यधीर्हृदि बद्धकाम इति**। अन्यधीः देहतदनुबन्धितद्भोग्यार्थकामादिषु[6] पुरुषार्थदृष्टिः न तु देह विलक्षणात्मपरमात्मयाथात्म्यधीः अत एव बद्धकामः शब्दादिविषयलिप्सुः।।५२।।

अथोक्तविधं भगवन्तं प्रपद्य ज्ञानोपदेशार्थं प्रार्थयते - **तं त्वामिति**। तमुक्तविधं देववरं "तं देवतानां

---

1. A,B,J "मो" 2. A,B,J स्वं 3. A,B,T वदन् 4. A इत्याऽऽह 5. A,B,T °करश्च 6. A,B,T तद्यो"

परमञ्च दैवतम् " (श्वेता.उ.5-7) इति श्रुत्युक्तरीत्या[1] निस्समाभ्यधिकदैवतम् अत एव वरेण्यं वरणीयं ईशञ्च त्वामहं प्रतिबोधनाय स्वात्मपरमात्मयाथात्म्यज्ञानाय तदुपदेशार्थमिति भावः। प्रपद्ये शरणं व्रजामि। अतो, हे भगवन्! अर्थदीपैः परमपुरुषार्थभूत परमात्मस्वरूपप्रकाशकैर्वचोभिः हृदय्यान् मद्धृदयगतान् ग्रन्थीन् ग्रन्थिवदनिर्मोच्यान् देहात्माभिमानादीन् भिन्धि[2] अपाकुरु, स्वं स्वकीयम् ओकः स्वरूपं स्थानं वा विवृणु प्रकाशय।।५३।।

इतीत्थं प्रार्थयमानं नृपतिमुद्दिश्य भगवानादिपुरुषो मत्स्यरूपी महाम्भोधौ प्रलयार्णवे विहरन् [3-]तत्त्वं तत्त्वप्रतिपादकं पुण्यं[-3] अब्रवीत् [4-]उपदिष्टवान्[-4] तत्त्वप्रतिपादकं पुराणमुपदिदेशेत्यर्थः।।५४।।

तदेवाह - **पुराणेति**। दिव्यां देवस्य स्वस्य सम्बन्धिनीं प्रतिपादिकां देवेन स्वेनैव प्रणीतां वा सांख्यं प्रकृतिविलक्षणात्मस्वरूपयाथात्म्यज्ञानं, योगो भगवद्भक्तियोगः, क्रिया नित्यनैमित्तिकादि क्रियायोगः, त एते प्रतिपाद्यत्वेनास्यां सन्तीति तथा तां पुराणसंहितां मात्स्यपुराणरूपां संहितां तथात्मनो गुह्यं रहस्यं चाशेषतः कार्त्स्न्येन सत्यव्रतस्य अब्रवीत् इत्यनुषङ्गः।।५५।।

**विज०** एतदेव विवृणोति - **जन** इति। जनो जननाद्यभिमानी तादृशस्य जनस्यासतीं गतिं इहामुत्र च उरुफलदं ज्ञानमादिशति। यथा येन ज्ञानेन दुरत्ययं तमः नित्यदुःखात्मकमन्धं तमः प्राप्नोति, तादृशमिति शेषः, यथेति पाठे यथोपदिष्टेन दुरत्ययं तमःप्राप्येत तथोपदिशति, नसन्नासन्नसत् इत्याद्याकारेणेत्यर्थः। " अन्धंतमः प्रविशन्ति " इति श्रुतेः। ज्ञानस्य सत्त्वे द्वैतभङ्ग इति तत्राह - त्वमिति। जनो येन ज्ञानेन निजं पदं निर्दोषत्वेन त्वद्रूपसदृशं सच्चिदानन्दलक्षणमञ्जसा अव्यवधानेन प्रपद्यते यच्चाव्ययमक्षयं यच्चामोघमव्यभिचारितया फलसमर्पकं त्वं तदेव ज्ञानमादिशसीत्यन्वयः।।५१।।

इतोऽपि त्वदुपदिष्टज्ञानमेवापेक्षितपुरुषार्थसाधनं नान्यत्, अनिमित्तबन्धुत्वादिगुणपूर्णत्वेन सिद्धत्वेन वञ्चनाशङ्कानास्पदत्वादित्याशयेनाह - **त्वमिति**। सुहृत्प्रत्युपकारशून्यः प्रियश्चेश्वरश्च विषयसुखस्यापीश्वर इति वा, आत्मा पूर्णानन्दः, गुरुर्ज्ञानोपदेष्टा जानातीति ज्ञानम्, अभीष्टसिद्धिरपेक्षितपुरुषार्थसाधकः लोकः सुहृत्त्वादिगुणवन्तं कुतो न जानातीति, तत्राह - तथापीति। यद्यप्यनिमित्तबन्धुः तथाऽपि लोको भवन्तं न जानाति, कुतः? अन्धधीः नष्टज्ञानत्वात्, ज्ञाननाशः कस्मादित्यत उक्तं हृदीति। दूरस्थत्वान्न तज्ज्ञानमित्यत उक्तं सन्तमिति। हृदीत्येतत् उभयत्र योज्यम्।।५२।।

---

1 W इ" 2. A,B,T छि" 3- -3. W Omits 4- -4. A,B,T Omit

इदानीं स्वार्थं प्रकाशयति - तं त्वामिति। प्रतिबोधनाय त्वत्स्वरूपविषयज्ञानायाऽहं यो ज्ञानोपदेष्टृत्वादिगुणोपेतस्तं त्वां शरणं प्रपद्ये इत्यन्वयः। देवोत्तमत्वादयमेव शरण्य इति भावेनोक्तं-देववरमिति। सौन्दर्यादिगुणभावेन त्वद्भक्तिरुदेतीति भावेनोक्तं - वरेण्यमिति। उक्तगुणा अन्यत्र व्यभिचारिणो, नेत्याह - ईशमिति। अन्यथेश्वरत्वाऽनुपपत्तिः, हृदय्याम् अहङ्कारसम्भूतां ग्रन्थिम् अर्थस्य दीपकैः प्रकाशकैः। " मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु " (भ.गी.18-65) इत्यादिलक्षणवचोभिः, किञ्च स्वमोकः स्वस्वरूपं स्वाश्रमं वैकुण्ठं वा विवृणु प्रकाशयेत्यन्वयः। " ओकसी मन्दिराऽऽश्रमौ " इति च ।।५३,५४।।

सांख्ययोगक्रियावतीं ज्ञानभक्तिकर्मयोगवतीं पुराणसंहितामब्रवीत्, इदं श्रद्धेयमिति भावेनोक्तम् - आत्मगुह्यमिति। आचार्यस्तु ते गतिं वक्ता इतिवदुपदिष्टैव शिष्टं नास्तीत्यत उक्तम् - अशेषत इति।।५५।।

सोऽ[1]श्रौषीदृषिभिस्साकमात्मतत्त्वमसंशयम्।
नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम्।।५६।।

अतीत[2]प्रलयापाय उत्थिताय [3]च वेधसे।
हत्वाऽसुरं हयग्रीवं वेदान्प्रत्या[4]हरद्धरिः।।५७।।

स तु सत्यव्रतो [5]राजन् ज्ञानविज्ञानसंयुतः।
विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः।।५८।।

सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः।
संवादं [6]महदाख्यानं श्रुत्वा मुच्येत किल्बिषात्।।५९।।

अव[7]तारं हरेर्यो[8]ऽयं कीर्तयेदन्वहं नरः।
सङ्कल्पास्तस्य सिध्यन्ति स याति परमां गतिम्।।६०।।

प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा।
दितिजमकथ[9]यद्यो ब्रह्म सत्यव्र[10]तानां तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि।।६१।।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां अष्टमस्कन्धे
मत्स्यावतारचरितानुवर्णनं नाम चतुर्विंशोऽध्यायः।।२४।।

1. A,B,G,J,M,Ma,T अश्रौ 2. M,Ma °ते प्र° 3. A,B,G,J,M,Ma,T स 4. W दिश° 5. A,B,G,J,M,Ma,T राजा
6. M,Ma °तं° 7. A,B,G,J,T °तारे 8. M,Ma °ऽमुं 9. A,B,G,J,T °यद्यो 10. M,Ma °ताय

**श्रीध० अतीतेति**। अतीतः पूर्वो यः प्रलयः तस्यापायेऽवसाने।।५७-५९।।

**अवतारमिति**। योऽयं हरेरवतारस्तं यः[1] कीर्तयेत्।।६०।।

**प्रलयेति**। [2-]दितिजं हयग्रीवं हत्वा तेनोपनीतं श्रुतिगणं प्रत्युपादत्त प्रत्यानीतवान्[-2] सत्यव्रतानां सत्यव्रतस्य ऋषीणाञ्च 'छत्रिणो गच्छन्ति' इतिवत् लिङ्गसमवाय[3]न्यायात् बहुवचनम्। जिह्ममीनं मायामत्स्यम्।।६१।।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्विंशोऽध्यायः।।२४।।

**वीर०** तदेतद्भगवता उपदिष्टमात्मनः प्रत्यगात्मनः तत्त्वं याथात्म्यं सनातनं ब्रह्म तद्याथात्म्यं च ऋषिभिस्सह नाव्युपदिष्टसत्यव्रतो निस्संशयं यथा भवति तथा शुश्राव।।५६।।

ततो हरिरतीतः पूर्वो यः प्रलयः तस्यापाये अवसाने उत्थिताय, शयनादिति शेषः। वेधसे चतुर्मुखाय वेदान् हयग्रीवेणापहृतान् तमसुरं हत्वा [4]प्रत्याहृत्य अदिशत् ददौ।।५७।।

ततः स तु स एव सत्यव्रतो राजा ज्ञानविज्ञानाभ्यां संयुतः आगमोत्थविवेकोत्थज्ञानाभ्यां युक्तः, विष्णोः प्रसादात् अनुग्रहादेव अस्मिन् कल्पे वैवस्वतो मनुरभूत्।।५८।।

एवमुपवर्णितमत्स्यावतारचरित्रो मुनिः तदाख्यानश्रव[5]णादिफलमाह - **सत्यव्रतस्येति** मायामत्स्यस्य अद्भुतमत्स्यरूपिणः स्वसङ्कल्पोपात्तमत्स्यरूपिणो वा शार्ङ्गिणः हरेः सत्यव्रतस्य राजर्षेः [6]मनोश्च संवादरूपमिदमाख्यानं श्रुत्वा पुमान् किल्बिषात् स्वर्गापवर्गश्रेयोविरोधिनः पापात् मुक्तो भवेत्।।५९।।

यो नरो हरेरमुमवतारं तच्चरित्रमन्वहमहरहः कीर्तयेत् तस्य नरस्य सर्वे सङ्कल्पाः मनोरथाः सिध्यन्ति, जीवद्दशायामिति शेषः। देहावसाने तु स नरः परमां गतिं मुक्तिं याती[7]त्यर्थः।।६०।।

मत्स्यावतारचरित्रकथनान्ते सुखप्रतिपत्तये तदवतार[8]प्रधानप्रयोजनानि संगृह्णन्नमस्करोति मुनिः - **प्रलयेति**। यः प्रलयपयसि प्रलयार्ण[9]वजले, विहरन्निति शेषः। सुप्ता अप्रबुद्धा शक्तिः सृष्टिशक्तिर्यस्य तस्य निद्राभिभूतत्वादिति भावः। अत एव तस्य धातुः ब्रह्मणो मुखेभ्यः अपनीतं निस्सृतं श्रुतिगणं हयग्रीवेण असुरेणापहृतं तं दितिजमसुरं हत्वा प्रत्युपादत्त प्रत्याहृत्य धात्रे ददावित्यर्थः। तथा सत्यव्रतानां सत्यव्रतस्य ऋषीणां च ' छत्रिणो गच्छन्ति ' इतिवत् लिङ्गसमवायात् बहुवचनम्। ब्रह्म तद्याथात्म्यप्रतिपादकं

---

1. A,B,J add प्र 2- -2. B,H,J,V Omit 3. A,B,J °यात् 4. W आहृत्य 5. A,B,T °णफ° 6. W. Omits मनो: 7. W Omits इत्यर्थ. 8. A,B,T Omit प्रधान 9. W °वे,

पुराणमकथयत् तमखिलहेतुं सर्वकारणकारणभूतं जिह्ममीनं कपटमीनं हरिमहं नतोऽस्मि, नत इति कर्तरि क्तः, नमस्कृतवानस्मीत्यर्थः।।६१।।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्विंशोऽध्यायः।।२४।।

**विज०** नावि जलयाने।।५६।।

प्रलयानामपाये अतीते सति ततः उत्थिताय वेधसे ब्रह्मणे प्रत्याहरत् दैत्यहृतान् तान् ज्ञात्वा प्रत्याहृत्य दत्तवानित्यर्थः।।५७-५९।।

संवादस्य पापहरत्वे अवतारकथाकीर्तनेन किं प्रयोजनमत्राह - **अवतारमिति**। अस्तु श्रवणफलं, कीर्तनेन किं फलमित्यतो वाऽऽह - अवतारमिति।।६०।।

बुद्धिसङ्ग्रहार्थमवतारकथां सङ्कल्य्य कथयति - **प्रलयेति**। सुप्तशक्तेर्विषयोपरतेन्द्रियशक्तेः कार्यानभिमुखीभूतप्रकृतिशक्तेर्वा अपनीतं निस्सृतं दैत्येन नीतं, जिह्ममीनं मायामत्स्यम् - "अनन्तशक्तिर्भगवान्मत्स्यरूपी जनार्दनः। क्रीडार्थं याचयामास स्वयं सत्यव्रतं नृपम्।।" इत्यनेन तमाह सातिकरुणं महाकारुणिकमित्यादिना विक्रीडितमिति ज्ञातव्यम्।।६१।।

पदरत्नावलिर्नाम अष्टमस्कन्धसङ्गता। प्रीत्यै मत्स्यात्मनो विष्णोरस्तु निर्दोषवर्ष्मणः।।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
पारमहंस्यां संहितायां श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां चतुर्विंशोऽध्यायः।।२४।।

(विजयध्वजरीत्या त्रयोविंशोऽध्यायः।।२३।।)

०००0०००

# श्रीमद्भागवत अष्टमस्कन्धस्थश्लोकपादानुक्रमणिका

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| अनाद्यविद्योपहतात्मसंविदः | 24 | 46 | a |
| अनाधारोह्यपोऽविशत् | 7 | 6 | b |
| अनायकाश्शत्रुबलेन निर्जिताः | 11 | 25 | c |
| अन्नाद्येनाश्वपाकेभ्यः | 16 | 55 | c |
| अनिच्छन्तो बले राजा | 21 | 14 | c |
| अनिवृत्तास्तनुत्यजः | 20 | 9 | b |
| अनुग्रहाय भूतानाम् | 24 | 27 | c |
| अनुध्यानान्न रिष्यति | 16 | 12 | d |
| अनुव्रतमयाजयन् | 15 | 34 | d |
| अनुसङ्कीर्तनं तव | 23 | 16 | d |
| अनृतं मूलमात्मनः | 19 | 39 | d |
| अनेन याचमानेन | 21 | 11 | a |
| अन्तरं सत्यसहसः | 13 | 29 | c |
| अन्तर्धानं गतोऽसुरः | 10 | 45 | b |
| अन्तर्बहिश्चावृतये भयोन्या | 3 | 25 | b |
| अन्तस्समुद्रे नु पचन्स्वधातून् | 5 | 35 | c |
| अन्यत्र क्षुद्रा हरिणाः शशादयः | 2 | 22 | c |
| अन्यांश्च ब्राह्मणान्युक्तान् | 16 | 54 | c |
| अन्ये च देवा गुरवो जनाःस्वयम् | 24 | 49 | b |
| अन्ये चाऽपि बलोपेताः | 11 | 35 | c |
| अन्ये जलस्थलखगैः | 10 | 12 | a |
| अन्ये पौलोमकालेयाः | 10 | 22 | c |
| अन्ये वयन्ति नवशक्तियुतं परं | 12 | 9 | c |
| अन्यैश्च ककुभस्सर्वाः | 2 | 3 | a |
| अन्यैश्चोद्दामकीर्तिभिः | 19 | 15 | d |
| अन्योन्यतस्सुधा पात्रम् | 9 | 1 | a |
| अन्योन्यमासाद्य निजघ्नुरोजसा | 10 | 35 | c |
| अन्येऽप्येवं प्रतिद्वन्द्वम् | 11 | 42 | a |
| अन्वतिष्ठद्व्रतमिदम् | 17 | 1 | c |
| अन्ववर्तन्त यं देवाः | 16 | 37 | a |
| अन्वशिक्षन्व्रतं तस्य | 1 | 22 | c |
| अन्वास्म सम्राजमिवानुगा वयम् | 5 | 37 | c |
| अपराजितेन नमुचिः | 10 | 30 | a |
| अपरिज्ञेय वीर्यस्य | 12 | 36 | a |
| अपरेऽभिययुः खरैः | 10 | 9 | b |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| अपश्यन्निति होवाच | 19 | 12 | a |
| अपश्यमानः कुपितो ननाद | 19 | 11 | b |
| अपारणीया इति देवि मे मतिः | 17 | 16 | b |
| अपारयन्तस्तं वोढुम् | 6 | 34 | c |
| अपारयन्नात्मविमोक्षणे चिरम् | 2 | 31 | c |
| अपि वा कुशलं किञ्चित् | 16 | 5 | a |
| अपि वाऽतिथयो ह्यत्र | 16 | 6 | a |
| अपि सर्वे कुशलिनः | 16 | 10 | a |
| अप्रतर्क्यमनिर्देश्यम् | 10 | 17 | c |
| अप्रदातुः प्रतिश्रुतम् | 19 | 35 | b |
| अप्रमाणविदस्तस्याः | 9 | 13 | c |
| अप्यग्रयस्ते वेलायाम् | 16 | 8 | a |
| अप्यभद्रं न विप्राणाम् | 16 | 4 | a |
| अप्युत्तमां गतिमसौ भजते त्रिलो- | 22 | 23 | c |
| अबुद्धिमान् द्वीपदाशुषम् | 19 | 19 | d |
| अभक्षयन्महादेवः | 7 | 4 | c |
| अभवाय दिवौकसाम् | 21 | 21 | b |
| अभवाय पृथग्गुणः | 14 | 9 | d |
| अभिगर्जन्ति हरयः | 2 | 6 | c |
| अभिधावति वैरधीः | 9 | 26 | d |
| अभिनन्द्य हरेर्वीर्यम् | 5 | 14 | c |
| अभिषेकं यथाविधि | 8 | 12 | b |
| अभिष्टुवद्भिः सुमनोऽभिवृष्टः | 7 | 12 | d |
| अभ्यभाषत तत्सर्वम् | 6 | 30 | c |
| अभ्ययात्सौहृदं सख्युः | 11 | 13 | c |
| अभ्याचष्टुं प्रथक्रमे | 5 | 14 | d |
| अमृतममर वर्यानाशयत्सिन्धुम- | 12 | 47 | b |
| अमृतापूर्णकलशम् | 8 | 34 | a |
| अमृतार्थे पयोनिधिम् | 7 | 5 | d |
| अमृतार्थे परस्परम् | 6 | 32 | d |
| अमृतोत्पादने यत्नः | 6 | 21 | a |
| अमृत्योरिह देहिनाम् | 19 | 13 | b |
| अमृष्यमाणा उत्पेतुः | 10 | 3 | c |
| अमोघमरिमर्दनम् | 11 | 12 | b |
| अमोघा भगवत्सेवा | 16 | 21 | c |

| | अध्याय: | श्लोक: | पाद: | | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|---|---|---|---|
| अम्भसेवाऽऽशुशुक्षणि: | 19 | 26 | d | अवतारा मया दृष्टा: | 12 | 12 | a |
| अम्भस्तु यद्रेत उदारवीर्यम् | 5 | 33 | a | अवतारै: कृतानि मे | 4 | 21 | b |
| अम्लानपद्मां जलजञ्च शुक्र: | 15 | 6 | d | अवधीत्सत्यजित्सख: | 1 | 26 | d |
| अयन्तु तस्य स्थितिपालनक्षण: | 5 | 23 | a | अवनिज्याऽर्चयामास | 18 | 27 | c |
| अयन्दुरात्माऽकृतबुद्धिरत्र | 4 | 10 | b | अवनिज्याऽवहन्मूर्ध्नि | 20 | 18 | c |
| अयं वै सर्वयज्ञाख्य: | 16 | 60 | a | अवनेजन्यपां भृतम् | 20 | 17 | d |
| अयाजयन्विश्वजिता त्रिणाकम् | 15 | 4 | b | अवरोप्य गिरिं स्कन्धात् | 6 | 39 | a |
| अयि ह्यपश्यस्त्वमजस्य मायाम् | 12 | 43 | a | अविक्रियं सत्यमनन्तमाद्यम् | 5 | 26 | a |
| अरक्ष्यमाणाश्शरणं सदाशिवम् | 7 | 19 | d | अविता शं विधास्यति | 24 | 43 | d |
| अरयोऽपि हि सन्धेया: | 6 | 20 | a | अविद्धदृक् साक्ष्युभयं तदीक्षते | 3 | 4 | c |
| अरिष्टोदुम्बरप्लक्षै: | 2 | 12 | c | अविश्वं विश्ववेदसम् | 3 | 26 | b |
| अरिष्टोऽरिष्टनेमिश्च | 10 | 22 | a | अविषह्यमिमं मन्ये | 15 | 25 | c |
| अरूपायोरुरूपाय | 3 | 9 | c | अव्यक्तचिद्व्यक्तमधारयद्धरि: | 18 | 12 | b |
| अरेभिरे सुरायत्ता: | 7 | 2 | a | अव्यक्तमाध्यात्मिकयोगगम्यम् | 3 | 21 | b |
| अर्चयित्वा गन्धमाल्यै: | 16 | 39 | a | अशासत् सकलं जगत् | 23 | 4 | d |
| अर्चयेच्छ्रद्धया युक्त: | 16 | 38 | c | अश्मसारमयं शूलम् | 11 | 30 | a |
| अर्चयेत्स्थण्डिले सूर्ये | 16 | 28 | c | अश्विनावृभवो राजन् | 13 | 4 | c |
| अर्चयेदरविन्दाक्षम् | 16 | 25 | c | अश्विनौ बडबात्मजौ | 13 | 10 | d |
| अर्चित्वोदकपूर्वकम् | 20 | 16 | d | अश्विनौ वृषपर्वणा | 10 | 30 | b |
| अर्चिभिरिव वह्नय: | 15 | 17 | d | अष्टमेऽन्तर आयाते | 13 | 11 | a |
| अर्चिर्भिर्वर्मभूषणै: | 10 | 14 | b | अष्टाशीति सहस्राणि | 1 | 22 | a |
| अर्थस्य पदवीं गतै: | 6 | 20 | d | असताच्छाययोक्ताय | 3 | 14 | c |
| अर्थं कामं यशो वृत्तिम् | 20 | 2 | c | असतो यक्षराक्षसान् | 1 | 26 | b |
| अर्थेन्द्रियाभासमनिद्रमव्रणम् | 5 | 27 | b | असदविषयमङ्घ्रि-भावगम्यं | 12 | 47 | a |
| अर्थै: कामैर्गता नान्तम् | 19 | 23 | c | असन्तोषोऽर्थकामयो: | 19 | 25 | b |
| अर्हणं द्विजतर्पणम् | 16 | 47 | d | असम्प्राप्तान् हसन्निव | 10 | 42 | d |
| अलक्षयन्तस्तमतीव विह्वला: | 11 | 25 | a | असाधुवादाद्धृशमुद्विजे यथा | 22 | 3 | d |
| अलक्ष्यगतिभीषणै: | 10 | 52 | b | असुरा जगृहुस्तां वै | 8 | 30 | c |
| अलब्धपूर्वोऽपशदेऽसुरेऽर्पित: | 23 | 2 | d | असुराणां सुधादानम् | 9 | 19 | a |
| अलब्धभागास्सोमस्य | 10 | 23 | a | असुरानयथा विभु: | 5 | 19 | d |
| अलब्धाऽऽत्मावकाशाऽसौ | 24 | 17 | c | असुरास्तत्कृतं नृप: | 9 | 22 | b |
| अलोकमव्यक्तमनन्तपारम् | 5 | 29 | b | अस्तं गिरिमुपागमन् | 11 | 46 | d |
| अवतारकथामाद्याम् | 24 | 1 | c | अस्मत्करणगोचरम् | 5 | 45 | b |
| अवतारं हरेर्योऽयम् | 24 | 60 | a | अहङ्कलानामृषभो विमुह्ये | 12 | 43 | e |
| अवतारानुचरितम् | 23 | 30 | c | अहञ्च तं यामि परं परायणम् | 2 | 32 | d |

| | अध्याय: | श्लोक: | पाद: | | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|---|---|---|---|
| कालं नात्येति वै जन: | 21 | 22 | d | कुन्दै: कुरबकाशोकै: | 2 | 18 | a |
| काल: क्रतुसत्यमृतञ्च धर्म: | 7 | 25 | c | कुब्जकै: स्वर्णयूथीभि: | 2 | 18 | c |
| कालिन्दीं सितवारणम् | 4 | 23 | b | कुमारेण भवेन च | 23 | 20 | d |
| काले काले स्वयं विभो | 5 | 46 | b | कुमुद: कुमुदाक्षश्च | 21 | 16 | c |
| कालेन दीर्घेणमहानभूद्व्यय: | 2 | 30 | b | कुमुदोत्पलकह्लार | 2 | 15 | a |
| कालेन पञ्चत्व मितेषु कृत्स्नश: | 3 | 5 | a | कुम्भस्तनी कलशपाणिरथाविवेश | 9 | 17 | d |
| कालेनाऽऽगत निद्रस्य | 24 | 8 | a | कुर्वतो जल तर्पणम् | 24 | 12 | b |
| कालेनाऽनुगृहीतै स्तै: | 6 | 19 | c | कुलाचार्येण भाषित: | 20 | 1 | b |
| कालेयै र्वसवोऽमरा: | 10 | 34 | b | कुलोचितं धर्मयुतं यशस्करम् | 19 | 2 | b |
| कालो भवानाक्षिपतीश विश्वं | 17 | 27 | c | कुशान्सप्तर्षयो ददु: | 18 | 16 | b |
| काव्यशाप मनुस्मरन् | 21 | 18 | d | कुशेषु प्राविशन्सर्वे | 9 | 15 | c |
| काश्यपै स्मृतार्थिभि: | 8 | 31 | b | कुसुमै स्समवाकिरन् | 18 | 10 | d |
| किञ्चाशिषोरात्यपि देहमव्ययम् | 3 | 19 | c | कूजद्विहङ्गमिथुनै: | 15 | 12 | c |
| किञ्चिज्जगृहु: स्म तत् | 7 | 46 | b | कूर्मरूपेण मन्दर: | 5 | 10 | d |
| किन्नरैरप्सरोभिश्च | 2 | 5 | c | कृकलासै श्शुनै र्नरै: | 10 | 11 | b |
| किमात्मनानेन जहाति योऽन्तत: | 22 | 9 | a | कृच्छ्रं वस्तु मिहोत्सहे | 24 | 18 | b |
| किमिदं दैवयोगेन | 11 | 33 | c | कृतकृत्यमिवात्मानम् | 15 | 36 | c |
| किरीटकाञ्चीगुणहारनूपुर: | 18 | 2 | d | कृतवान् कुरुते कर्ता हि | 1 | 3 | c |
| किं जायमान उतजातउपैतिमर्त्य: | 23 | 29 | c | कृतस्थानविभागस्ते हि | 7 | 5 | a |
| किं जायया संसृतिहेतुभूतया | 22 | 9 | c | कृतस्वस्त्ययना द्विजै: | 9 | 14 | d |
| किं रिक्थहारै:स्वजनाख्य दस्युभि: | 22 | 9 | b | कृतं पुरा भगवत: | 1 | 6 | a |
| किं वाऽद्य विज्ञाप्यमशेषसाक्षिण: | 6 | 14 | d | कृतं मया वो विभजे सधामिमाम् | 9 | 12 | d |
| किं वाऽन्यदभवत्तत: | 5 | 12 | b | कृतान्तस्य यथा जना: | 15 | 29 | d |
| किं वा विदामेश पृथग्विभाता: | 6 | 15 | c | कृतासन परिग्रह: | 16 | 3 | b |
| कीर्तन्यगुण सत्कथाम् | 4 | 4 | d | कृतो निविशतां भारै: | 11 | 34 | c |
| कीर्तयेदन्वहं नर: | 24 | 60 | b | कृत्वा परिसमूहनम् | 18 | 19 | b |
| कीर्तिर्जयोऽजयोमृत्यु: | 11 | 7 | c | कृत्वा प्रदक्षिणं भूमौ | 16 | 42 | c |
| कीर्तिं दिक्षु वितन्वान: | 15 | 35 | c | कृत्वा वपु: काच्छपमद्भुतं महत् | 7 | 8 | c |
| कुक्षिस्समुद्रा गिरयोऽस्थिसङ्घा: | 7 | 28 | a | कृत्वा शिरसि तच्छेषं | 16 | 43 | a |
| कुटुम्बासक्तया त्वया | 16 | 6 | b | कृत्स्नाऽनेन तु दत्ताभू: | 22 | 22 | a |
| कुतस्तत्कर्म वैषम्यम् | 23 | 15 | a | कृपथा भूतभावन: | 7 | 42 | d |
| कुत: करिण्य: प्रभवन्ति मोचितुम् | 2 | 32 | b | कृपया भृशपीडित | 7 | 36 | b |
| कुत: पुनर्ब्रह्मविदां भवादृशाम् | 20 | 10 | c | कृष्णानुभावो गजराजमोक्षणम् | 4 | 14 | b |
| कुतो वा किं चिकीर्षसि | 9 | 3 | b | केचिद्गौरमुखै र्ऋक्षै: | 10 | 9 | c |
| कुतोऽसुराद्या इतरप्रधाना: | 5 | 31 | d | केचिन्महापुरुष मव्ययमात्मतत्वम् | 12 | 9 | d |

| | अध्यायः | श्लोक | पाद. |
|---|---|---|---|
| केनाऽऽसी त्तेजसोर्जितः | 15 | 25 | d |
| केनाहं विधिना ब्रह्मन् | 16 | 22 | a |
| केयूराभ्याञ्च भूषिताम् | 6 | 5 | b |
| केवलं क्लेशभागिनः | 10 | 23 | b |
| केशबन्ध उपानीय | 12 | 28 | c |
| केशवाय नमस्तुभ्यम् | 16 | 35 | c |
| केशेषु मेघाच्छ्रसनं नासिकायाम् | 20 | 26 | c |
| को नु भगवन्कामः | 16 | 13 | a |
| कोनु मेऽतितरेन्मायाम् | 12 | 39 | a |
| को विकल्पो धरादिषु | 20 | 7 | d |
| कौतूहलाय दैत्यानाम् | 12 | 15 | a |
| कौपीनाच्छादनं माता | 18 | 15 | c |
| कौमारब्रह्मचारिणः | 1 | 22 | d |
| कौमोदकी विष्णुगदा तरस्विनी | 20 | 31 | b |
| कौस्तुभाख्यमभूद्रत्नम् | 8 | 5 | a |
| कौस्तुभाभरणां लक्ष्मीम् | 6 | 6 | c |
| क्रमतो गां पदैकेन | 19 | 34 | a |
| क्रमुकैर्नालिकेरैश्च | 2 | 11 | c |
| क्रियता मविलम्बितम् | 6 | 21 | b |
| क्रियमाणे कर्मणीदम् | 23 | 31 | a |
| क्रियातन्तून्वितायिता | 13 | 35 | d |
| क्रीडतो द्रष्टु मिच्छामि | 17 | 15 | d |
| क्रीडद्भि र्जुष्टकन्दरः | 2 | 5 | d |
| क्रीडार्थमात्मन इदं त्रिजगत् | 22 | 20 | a |
| क्लमस्तन्द्री पराभवः | 22 | 32 | d |
| क्लेशभाजो भविष्यन्ति | •6 | 23 | c |
| क्लेशभूर्यल्पसाराणि | 5 | 47 | a |
| क्वचात्मा प्रकृतेः परः | 16 | 19 | b |
| क्वचिच्चिरायुर्न हि शील | 8 | 22 | a |
| क्वचित्तदप्यस्ति न वेद्यमायुषः | 8 | 22 | b |
| क्वचिद्विभातं क्वचतत्तिरोहितम् | 3 | 4 | b |
| क्व देहो भौतिकोऽनात्मा | 16 | 19 | a |
| क्षितिं पदैकेन बले विचक्रमे | 20 | 33 | c |
| क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् | 7 | 26 | b |
| क्षिपन्तो दस्युधर्माण हि | 9 | 1 | c |
| क्षिपन्तो नामभिर्मिथः | 10 | 27 | b |
| क्षिप्ता राजन्सरोवरे | 24 | 21 | b |
| क्षिप्तो बद्धश्च रश्मिभिः | 22 | 29 | b |
| क्षिप्त्वा क्षीरोदधौ सर्वाः | 6 | 22 | a |
| क्षिप्यमाण स्त्वमाहेदम् | 24 | 24 | a |
| क्षीणरिक्थश्च्युतः स्थानात् | 22 | 29 | a |
| क्षीरोदमथनोद्भूतात् | 7 | 37 | c |
| क्षीरोदं मे प्रियं धाम | 4 | 18 | c |
| क्षीरोदेनाऽऽवृतः श्रीमान् | 2 | 1 | c |
| क्षेत्रज्ञः सर्वभूतानाम् | 17 | 11 | c |
| क्षेत्रज्ञाय नमस्तुभ्यम् | 3 | 13 | a |
| क्षेत्राण्यासन्महीपते | 12 | 33 | d |
| क्ष्मां द्यां दिशः खं विवरान् | 19 | 11 | c |
| खञ्च कायेन महता | 19 | 34 | c |
| खर्जूरैर्बीजपूरकैः | 2 | 11 | d |
| खेभ्यश्च छन्दां स्यृषयो मेढ्रतः कः | 5 | 39 | c |
| ग | | | |
| गङ्गां सरस्वतीं नन्दाम् | 4 | 23 | a |
| गजश्च सुमहा बलः | 11 | 14 | d |
| गजा दवार्ता इव गाङ्गमम्भः | 6 | 13 | d |
| गजास्तुरङ्गास्सरथाः पदातयः | 10 | 37 | a |
| गजेन्द्र मोक्षणं पुण्यम् | 5 | 1 | c |
| गजेन्द्रं कुरुसत्तम | 4 | 16 | b |
| गजेन्द्रो भगवत्स्पर्शात् | 4 | 6 | a |
| गजेन्द्रो मोचितो ग्रहात् | 1 | 30 | d |
| गतह्रीस्तत्पदं ययौ | 12 | 25 | d |
| गतासवो निपतिताः | 5 | 15 | c |
| गतिलीलाविलोकनैः | 8 | 7 | d |
| गतिं न सूक्ष्मामृषयश्च विद्महे | 5 | 31 | c |
| गते पीयूष भाजने | 12 | 15 | d |
| गतो विदूरं तमनुव्रजास्त्रियाः | 12 | 23 | b |
| गदापाणिमवस्थितम् | 23 | 10 | b |
| गदाप्रहार व्यथितः | 11 | 15 | a |
| गदामुद्यम्य रंहसा | 11 | 14 | b |
| गदां कौमोदकीं मम | 4 | 19 | b |

| | अध्याय: | श्लोक: | पाद: | | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|---|---|---|---|
| जगाम तमस: परम् | 5 | 24 | d | जातस्सत्यव्रतैस्सह | 1 | 25 | d |
| जगाम निलयं हरे: | 19 | 7 | d | जात: क्रियाकाण्डनिमित्तजन्मा | 5 | 35 | b |
| जगुर्भद्राणि गन्धर्वा: | 8 | 12 | c | जातोऽशांशेन भगवान् | 13 | 23 | c |
| जगृहुर्ब्रह्मवादिन: | 8 | 2 | b | जानन्ति यद्विरचितं खलु | 12 | 10 | b |
| जग्धुमभ्यद्रवन् क्षुधा | 1 | 17 | d | जानंश्चिकीर्षितं विष्णो | 19 | 29 | c |
| जघ्नुर्भृशं शक्र समीरणादय: | 11 | 1 | c | जानाति सन्तं हृदि बद्धकाम: | 24 | 52 | d |
| जग्राह जलभाजनम् | 19 | 28 | d | जानामि मघवञ्छत्रो: | 15 | 28 | a |
| जजाप परमं जाप्यम् | 3 | 1 | c | जानुभ्यां धरणींस्पृष्ट्वा | 11 | 15 | c |
| जटाधर स्तापस आप्लुतोऽच्युतम् | 4 | 8 | c | जाम्बवानृक्षराजस्तु | 21 | 8 | a |
| जटा मूर्ति स्तदा द्विजा: | 13 | 22 | b | जिगीषमाणं विधिनाऽभिषिच्य | 15 | 4 | c |
| जटिलं वामनं विप्रम् | 18 | 24 | c | जिगीषव स्तीव्रशरासितोमरै: | 10 | 35 | d |
| जडीकृतं नृपश्रेष्ठा | 12 | 35 | c | जिघांसुरिन्द्रं नृपते | 11 | 29 | c |
| जत्रावताडय च्छक्रम् | 11 | 14 | c | जिघ्रन्विदूरान्मदविह्वलेक्षण: | 2 | 24 | b |
| जनं पश्यन्ति सूरय: | 11 | 8 | b | जिजीविषे नाऽह मिहाऽमुया | 3 | 25 | a |
| जनो जनस्यादिशतेऽसतीं गतिम् | 24 | 51 | a | जिताशेष मुपागमन् | 6 | 29 | d |
| जनोऽबुधोऽयं निजकर्मबन्धन: | 24 | 47 | a | जित्वा बालान् निबद्धाक्षान् | 11 | 4 | c |
| जन्तु: पुन: कोऽर्हति गन्तुमीरितुम् | 3 | 6 | b | जुष्टायां माल्यदीपकै: | 9 | 16 | d |
| जन्मकर्मवयोरूप | 22 | 26 | a | जुष्टां विभक्तप्रपथाम् | 15 | 15 | c |
| जन्मादीनां समन्तत: | 22 | 27 | b | जुहुयान्मूलविद्यया | 16 | 40 | d |
| जपे दष्टोत्तरशतम् | 16 | 42 | a | जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं | 7 | 17 | c |
| जमदग्नि र्भरद्वाज: | 13 | 5 | c | ज्ञातयो नारदा दृषे: | 11 | 19 | b |
| जम्भं श्रुत्वा हतं तस्य | 11 | 19 | a | ज्ञातिभिश्च परित्यक्त: | 22 | 29 | c |
| जम्भोबलि सखस्सुहृत् | 11 | 13 | b | ज्ञातिभि: परिवारित: | 22 | 33 | d |
| जयन्त श्श्रुतदेवश्च | 21 | 17 | a | ज्ञातीनां पश्यतां राजन् | 11 | 28 | c |
| जयोरुगाय भगवन् | 17 | 25 | a | ज्ञातीनां बद्धवैराणाम् | 9 | 6 | c |
| जरामृत्युहरां सुधाम् | 9 | 21 | d | ज्ञातीनां सुखमावह | 23 | 9 | d |
| जलकुक्कुट कोयष्टि | 2 | 16 | c | ज्ञातु मिच्छाम्यदो रूपम् | 24 | 29 | c |
| जलाशये सम्मितं तम् | 24 | 23 | c | ज्ञात्वा तु दानवेन्द्रस्य | 24 | 9 | a |
| जले वह्नौ गुरावपि | 16 | 28 | d | ज्ञानञ्च केवल मनन्तभवन्ति | 17 | 10 | c |
| जहसु र्भावगम्भीरम् | 9 | 11 | c | ज्ञानञ्चानुयुगं ब्रूते | 14 | 8 | a |
| जहार जनयन्भयम् | 11 | 28 | d | ज्ञानविज्ञान संयुत: | 24 | 58 | b |
| जहार नमुचे श्शिर: | 11 | 40 | b | ज्ञानं क्वचित्तञ्च न सङ्गवर्जितम् | 8 | 20 | b |
| जहार पिबत श्शिर: | 9 | 25 | b | ज्ञानाग्निना रन्धित कर्मकल्मषा: | 21 | 2 | d |
| जहौ सत्यं न सुव्रत: | 22 | 30 | b | ज्ञानात्मने भगवते नम ईश्वराय | 3 | 18 | d |
| जात क्षोभान्स्वनायकान् | 6 | 28 | b | ज्योतिर्धामादयस्सप्त | 1 | 28 | c |

| | अध्यायः | श्लोकः | पादः | | अध्यायः | श्लोकः | पादः |
|---|---|---|---|---|---|---|---|
| तत्रेन्दो रोचनस्त्वाऽऽसीत् | 1 | 20 | a | तदाऽसुरेन्द्रं दिविदेवतागणाः | 20 | 19 | a |
| तत्रैकदा तद्गिरि काननाश्रयः | 2 | 20 | a | तदुग्रवेगं दिशि दिश्युपर्यधः | 7 | 19 | a |
| तत्रैवान्तरधीयत | 12 | 17 | b | तद्घ्राणरन्ध्रेण विविग्रचित्ताः | 19 | 10 | d |
| तत्रैवान्तरधीयत | 17 | 21 | b | तद्दर्शनात्युत्सवगात्र वेपथुः | 17 | 6 | d |
| तत्रैवान्तर्दधे हरिः | 8 | 37 | h | तद्दिद्दक्षव आयाताः | 12 | 13 | c |
| तत्रोपेयुस्त्वरान्विताः | 11 | 19 | d | तद्धिद्याराधनं हरेः | 16 | 53 | d |
| तत्सत्यं ब्रह्मचिद्धवान् | 12 | 5 | d | तद्यत्किञ्चि दोमिति ब्रूयात् | 19 | 41 | c |
| तत्सर्गसर्ग विषया अपि शक्तिमा- | 7 | 34 | d | तद्यथा वृक्ष उन्मूलः | 19 | 40 | a |
| तत्सुता भूरिषेणाद्याः | 13 | 21 | c | तद्वामनं रूप मवर्धताद्भुतम् | 20 | 21 | a |
| तथा जनस्याऽविदुषो बुधोगुरुः | 24 | 50 | b | तद्वित्तं विधुनोम्यहम् | 22 | 24 | b |
| तथाऽऽतुरं यूथपतिं करेणवः | 2 | 28 | a | तद्विद्वान्विष्णुतत्परः | 19 | 14 | b |
| तथाऽन्नमथवा वा विप्रकन्याम् | 18 | 32 | d | तद्विषं जग्धुमारेभे | 7 | 41 | c |
| तथाऽपि भक्तं भजते महेश्वरः | 16 | 14 | d | तद्वीक्ष्यव्यसनं तासाम् | 7 | 36 | a |
| तथाऽपि लोकाप्ययसम्भवाय यः | 3 | 8 | c | तद्वीर्य महिमाङ्कितैः | 21 | 7 | b |
| तथापि वदतो भूमन् | 23 | 17 | a | तद्वीर्यं भूर्यनुस्मरन् | 19 | 6 | d |
| तथाऽपि सर्गस्थिति संयमार्थम् | 5 | 22 | c | तनयस्स विवस्वतः | 24 | 11 | b |
| तथा पुनीता तनुभिः पदैस्तव | 18 | 31 | d | तनूरुहे ष्वोषधिजातयश्च | 20 | 28 | d |
| तथाऽप्युपायो मम देवि चिन्त्यः | 17 | 17 | a | तन्नैच्छन्दैत्यपतयः | 7 | 3 | a |
| तथाऽप्येनं न हिंसिष्ये | 20 | 12 | c | तन्मूलसंसारपरिश्रमातुराः | 24 | 46 | b |
| तथा यतोऽयं गुणसम्प्रवाहः | 3 | 23 | c | तपश्चाग्रीध्रकादयः | 13 | 28 | d |
| तथा रक्षोगणाः प्रभो | 10 | 48 | d | तपसा ऋषयोऽपश्यन् | 14 | 4 | c |
| तथा विधेहि कल्याण्या | 16 | 17 | c | तपसा चिरसंभृतम् | 17 | 23 | d |
| तदद्भुत मभूद्रणे | 11 | 12 | d | तपस्ससलिलाशनः | 24 | 10 | d |
| तदद्भुतं परमतिवीर्य वृत्रभित् | 11 | 32 | c | तप स्सारमयं त्वाष्ट्रम् | 11 | 35 | a |
| तदपत्यानि मे श्रृणु | 13 | 1 | d | तपस्सार मिदं भद्रे | 16 | 60 | c |
| तदपो विश्वपावनीः | 20 | 18 | d | तपो जुषाणं स्तुतिभिः प्रणेमुः | 7 | 20 | d |
| तदरोचत दैत्यस्य | 6 | 31 | a | तपो दानं व्रतं यज्ञः | 16 | 61 | c |
| तदर्थे तर्ष चेतसाम् | 8 | 38 | b | तप्त हेमावदातेन | 6 | 4 | a |
| तदलीकफलं भुङ्क्ष्व | 21 | 34 | c | तप्यन्ते लोकतापेन | 7 | 44 | a |
| तदा देवर्षि गन्धर्वाः | 4 | 1 | a | तप्यमान स्तपो घोरम् | 1 | 8 | c |
| तदा पतद्गगनतले महाजवम् | 11 | 31 | a | तमक्षरं खं त्रियुगं व्रजामहे | 5 | 27 | d |
| तदाऽविनष्टावयवान् | 11 | 47 | a | तमक्षरं ब्रह्मपुरं परेशम् | 3 | 21 | a |
| तदावृत्यात्मना सर्वं | 24 | 21 | c | तमर्चयामास कुला चलाश्रमः | 4 | 8 | d |
| तदा सर्वाणि भूतानि | 23 | 23 | c | तमविक्लबमव्रीडम् | 12 | 37 | a |
| तदा सुरा नाविशदासुरेण | 7 | 11 | a | तमस्तदाऽऽसीद्गहनं गभीरम् | 3 | 5 | c |

| | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|
| तमह मखिल हेतुं जिह्ममीनं | 24 | 61 | d |
| तमह मुपसृतानां कामपुरं | 12 | 47 | d |
| तम: प्रकृति दुर्मर्षम् | 24 | 2 | c |
| तमापतन्त मालोक्य | 19 | 8 | a |
| तमाले रसनार्जुनै: | 2 | 12 | b |
| तमालोक्याऽसुरा स्सत्रे | 8 | 35 | c |
| तमाह को भवानस्मान् | 24 | 25 | c |
| तमाहनन्नृप कुलिशेन कन्धरे | 11 | 31 | c |
| तमाह साऽति करुणम् | 24 | 14 | a |
| तमिन्द्रसेन: स्वपितामहं श्रिया | 22 | 13 | a |
| तमिमं कालरशनम् | 11 | 8 | a |
| तमीश्वरं त्वां शरणं प्रपद्ये | 24 | 49 | d |
| तमीहमानं निरहङ्कृतं बुधं | 1 | 16 | a |
| तमुत्थितं वीक्ष्य कुलाचलं पुन: | 7 | 9 | a |
| तमूचुर्मुनय: प्रीता: | 24 | 43 | a |
| तयोस्स्वकलया जज्ञे | 5 | 4 | c |
| तरङ्गावर्तभीषण: | 10 | 51 | d |
| तरोर्मूलावसेचनम् | 5 | 49 | b |
| तर्केतिहासाङ्गपुराण संहिता: | 21 | 2 | b |
| तल्लिङ्गै पुष्पवर्षिण: | 8 | 27 | d |
| तल्लीलयागरुडमूर्ध्नि पतद्गृहीत्वा | 10 | 56 | c |
| तव पुत्रामनस्विनि | 16 | 10 | b |
| तवैव चरणाम्भोजम् | 12 | 6 | a |
| तवैव मारीच मनश्शरीरजा: | 16 | 14 | a |
| तस्थौ दिविब्रह्मभवेन्द्रमुख्यै: | 7 | 12 | c |
| तस्थौ निधाय निकटे तदुर: | 8 | 24 | c |
| तस्मा आसन माहरत् | 18 | 26 | d |
| तस्मा इत्युपनीताय | 18 | 17 | a |
| तस्मा इमं शाप मदादसाधु: | 4 | 10 | a |
| तस्मात्कालं प्रतीक्षध्वम् | 21 | 24 | c |
| तस्मात्त्रीणि पदान्येव | 19 | 27 | a |
| तस्मात्वत्तो महीमीषत् | 19 | 16 | a |
| तस्मादस्य वधो धर्म: | 21 | 13 | a |
| तस्मादिदं गरं भुङ्क्ष्व | 7 | 40 | c |
| तस्मादिन्द्रोऽबिभेच्छत्रो: | 11 | 33 | a |

| | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|
| तस्मादीश भजन्त्या मे | 16 | 15 | a |
| तस्मादेतद्व्रतं भद्रे | 16 | 62 | a |
| तस्माद्वृत्तिकरीं भूमिम् | 19 | 20 | c |
| तस्माद्व्रजाम श्शरणं जगद्गुरुम् | 5 | 23 | c |
| तस्मा न्निलयमुत्सृज्य | 15 | 30 | a |
| तस्मिन्प्रविष्टेऽसुरकूटकर्मजा | 10 | 55 | a |
| तस्मिन्बलि: स्पृहा ञ्चक्रे | 8 | 3 | c |
| तस्मिन् सरस्युविपुलं | 2 | 14 | c |
| तस्मिन्हरि: स्पृहाञ्चक्रे | 8 | 5 | c |
| तस्मै नमस्ते जगदीश्वराय वै | 22 | 17 | c |
| तस्मै नम: परेशाय | 3 | 9 | a |
| तस्मै बलिर्वारुण पाशयन्त्रित: | 22 | 14 | a |
| तस्य कर्मोत्तमां वीक्ष्य | 10 | 43 | a |
| तस्य तत्पूजयन् कर्म | 11 | 17 | a |
| तस्य त्यागनिमित्तं किम् | 20 | 6 | c |
| तस्य द्रोण्यां भगवत: | 2 | 9 | a |
| तस्या आसन मानिन्ये | 8 | 10 | a |
| तस्या ञ्चक्रु: स्पृहां सर्वे | 8 | 9 | a |
| तस्याञ्जल्युदके काचित् | 24 | 12 | c |
| तस्यात्मलोकावरणस्यमोक्षणम् | 3 | 25 | d |
| तस्या दीनतमं वाक्यम् | 24 | 16 | a |
| तस्याऽनु धावतो रेत: | 12 | 32 | a |
| तस्यानुभाव: कथित: | 5 | 6 | a |
| तस्याऽनुश्रृण्वतो राजन् | 22 | 18 | a |
| तस्याऽपि दर्शयामास | 7 | 43 | a |
| तस्याऽऽसन्सर्वतो देवा: | 10 | 26 | a |
| तस्याऽऽसन्सर्वतो यानै: | 10 | 19 | a |
| तस्याऽसौ पदवीं रुद्र: | 12 | 31 | a |
| तस्यां कृतातिप्रणया: | 9 | 23 | a |
| तस्यां जज्ञे ततो देव: | 1 | 21 | c |
| तस्यां नरेन्द्र करभोरुरुशद्दुकूल | 9 | 17 | a |
| तस्यां सदेश उशतीं नवकञ्जमा- | 8 | 24 | a |
| तस्या: कराग्रात स तु कन्दुको | 12 | 23 | a |
| तस्या: प्रादुरभूत्तात | 17 | 4 | a |
| तस्या: श्रिय स्त्रिजगतो जनको | 8 | 25 | a |

| | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|
| तस्येत्थं भाषमाणस्य | 22 | 12 | a |
| तस्योपनीयमानस्य | 18 | 14 | a |
| तं ऋत्विजो यजमानस्सदस्याः | 18 | 22 | a |
| तं तत्र कश्चिन्नृप! दैवचोदितः | 2 | 27 | a |
| तं तद्वदार्तमुपलभ्य जगन्निवासः | 3 | 31 | a |
| तं तुष्टुवु र्मुनिगणाः | 11 | 40 | c |
| तं त्वा मर्चन्ति कुशलाः | 7 | 22 | c |
| तं त्वा महं देववरं वरेण्यम् | 24 | 53 | a |
| तं त्वां वयं नाथ! समुज्जिहानम् | 6 | 13 | a |
| तं दुरत्यय माहात्म्यम् | 3 | 29 | c |
| तं नर्मदाया स्तट उत्तरे बलेः | 18 | 21 | a |
| तं नाऽतिवर्तितुं दैत्याः | 21 | 20 | c |
| तं निर्जितात्मात्मगुणम् परेशं | 5 | 30 | c |
| तं नेत्र गोचरं वीक्ष्य | 17 | 5 | a |
| तं प्रपद्ये स्वयम्भुवम् | 3 | 3 | d |
| तं बद्धं वारुणैः पाशैः | 21 | 28 | a |
| तं ब्रह्मणा भृगवः प्रीयमाणाः | 15 | 4 | a |
| तं भूतनिलयं देवम् | 1 | 11 | c |
| तं वटुं वामनं दृष्ट्वा | 18 | 13 | a |
| तं विश्वजयिनं शिष्यम् | 15 | 34 | a |
| तं वीक्ष्यतूष्णीमकृतार्हणादिकम् | 4 | 9 | c |
| तं वीक्ष्य पीडित मजस्सहसा | 3 | 33 | a |
| ता नभिद्रवतो दृष्ट्वा | 21 | 15 | a |
| तानि नो वदशृण्वताम् | 1 | 2 | d |
| तानि रौप्यस्य हेम्नश्च | 12 | 33 | c |
| तान्दस्यून्विधुनोम्यज्ञ! | 11 | 5 | c |
| तान्विनिर्जित्य समरे | 17 | 13 | a |
| तामग्निहोत्रीमृषयः | 8 | 2 | a |
| तामन्वगच्छद्भगवान् | 12 | 27 | a |
| ता मारुरोह विप्रेन्द्रैः | 24 | 42 | c |
| ताम्बूलञ्च निवेदयेत् | 16 | 41 | d |
| तारकश्चोग्रदृक् शुम्भः | 10 | 21 | c |
| तारकेण गुहोऽस्यत | 10 | 28 | b |
| तार्तीयस्य कुतो गतिः | 19 | 34 | d |
| तावच्छिरोऽच्छिन दरे | 10 | 57 | d |
| तावता विस्तृतः पर्यक् | 2 | 2 | a |
| तावती भूरियं तव | 21 | 30 | d |
| तावत्सन्धि र्विधीयताम् | 6 | 19 | b |
| तावत्सुतल मध्यास्ताम् | 22 | 32 | a |
| तावद्भि रर्दयामास | 11 | 21 | c |
| तावद्भिश्शीघ्र विक्रमः | 10 | 42 | b |
| तासां संज्ञासुता स्त्रयः | 13 | 9 | b |
| तां ज्वलन्तीं महोल्काभाम् | 10 | 43 | c |
| तां देवधानीं वरूथिनीपति | 15 | 23 | a |
| तां दैवीं गिरमाकर्ण्य | 11 | 39 | a |
| तां विद्ययोदस्य निरीह आस्ते | 1 | 13 | d |
| तां वीक्ष्य देव इति | 12 | 22 | a |
| तां श्चोपवेशयामास | 9 | 20 | c |
| तां श्रीसखीं कनककुण्डलचारु | 9 | 18 | a |
| तां स्तथा भग्न मनसः | 6 | 36 | a |
| तां स्तथाऽवसितान्वीक्ष्य | 1 | 18 | a |
| तां स्तात्रणे यै रभिसङ्गताः पुरा | 11 | 1 | d |
| तां स्ता न्विसृजतीं भावान् | 12 | 39 | c |
| तिमि द्विपग्राहतिमिङ्गिलाकुलात् | 7 | 18 | d |
| तिरस्कृतो नमुचिं शिरोधरत्वचा | 11 | 32 | d |
| तिरस्कृत्य पुरः स्थितम् | 11 | 3 | b |
| तिर्यङ्नृदेवा मुनयो यदासत | 20 | 21 | d |
| तीर्थश्रवः श्रवणमङ्गल नामधेयः | 17 | 8 | b |
| तुमुलो रोम हर्षणः | 10 | 5 | d |
| तुल्यैश्वर्य बल श्रीभिः | 15 | 10 | a |
| तुषिता नाम पत्न्यभूत् | 1 | 21 | b |
| तुष्टाव देव प्रवरः | 6 | 7 | c |
| तुष्टाव मधुसूदनम् | 24 | 45 | d |
| तुष्टाव सा देव्यदितिः कुरूद्वह | 17 | 7 | b |
| तुष्टुवुर्मुनयो देवाः | 18 | 8 | c |
| तुष्टुवुः पुरुषोत्तमम् | 4 | 2 | d |
| तूणावरिक्तौ कवचञ्च दिव्यं | 15 | 6 | b |
| तूणोत्तमावक्षयसायकौ च | 20 | 31 | d |
| तूष्णी मासन्कृतस्नेहाः | 9 | 22 | c |
| तूष्णीम्भूत्वा क्षणं राजन् | 20 | 1 | c |
| तृतीय उत्तमो नाम | 1 | 23 | a |

| | अध्याय: | श्लोक: | पाद: | | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|---|---|---|---|
| तृतीय मुपकल्पय | 21 | 29 | d | त्रयीविद्यात्मेन नम: | 16 | 31 | d |
| तृतीय बडबामेके | 13 | 9 | a | त्रयोदश्या मथो विष्णो: | 16 | 50 | a |
| तृष्णाया इति न: श्रुतम् | 19 | 23 | d | त्राहि न श्शरणापन्नान् | 7 | 21 | c |
| तेजो विप्रस्थ वर्धते | 19 | 26 | b | त्रिकालानुगतानि ते | 13 | 36 | b |
| ते तु निर्विण्ण मनस: | 7 | 7 | a | त्रिकूट इति विश्रुत: | 2 | 1 | b |
| ते तुल्याया स हेतव: | 8 | 39 | b | त्रिणाभि विद्युञ्चाल मष्टनेमि | 5 | 28 | c |
| तेनत्यक्तेन भुञ्जीथा | 1 | 10 | c | त्रिगुणाय नमो नम: | 17 | 25 | d |
| तेन रिच्येत वै पुमान् | 19 | 41 | d | त्रिदिवं य त्परै र्हतम् | 23 | 19 | d |
| ते नागराज मामन्त्र्य | 7 | 1 | a | त्रिनाभाय त्रिपृष्ठाय | 17 | 26 | c |
| तेनाऽपिपार्षदगतिं गमितेन युक्त: | 4 | 13 | b | त्रिपदव्याजयाच्ञया | 21 | 9 | b |
| तेनाऽहनम्नृप सवहि मरिंम्रधीश: | 10 | 56 | d | त्रिभिरैरावतं शरै: | 10 | 41 | b |
| तेनाऽहं निगृहीतोऽस्मि | 22 | 7 | a | त्रिभि: क्रमै रसन्तुष्ट | 19 | 22 | a |
| तेनून मूति मविदंस्तवहातलज्ञा: | 7 | 33 | d | त्रिभि: क्रमै रिमान् लोकान् | 19 | 33 | a |
| तेनैव महसा सर्वे | 6 | 2 | a | त्रिभि: श्रुङ्गै: पयोनिधम् | 2 | 2 | b |
| तेऽन्योन्यमभिसंवृत्य | 10 | 27 | a | त्रिलोकीं धारयिष्यति | 13 | 26 | d |
| ते पालयन्त स्समयम् | 9 | 22 | a | त्रिलोकीं भोक्ष्यतेऽद्भुत: | 13 | 20 | d |
| ते वैरोचनि मासीनम् | 6 | 29 | a | त्रिलोक्या मजितेन्द्रियम् | 19 | 21 | b |
| तेषाङ्कालोऽग्रसील्लोकान् | 20 | 8 | c | त्रिलोक्यां लीयमानायाम् | 24 | 33 | a |
| तेषामन्तर्दधे राजन् | 6 | 26 | c | त्रिवर्गस्य परं क्षेत्रम् | 16 | 11 | c |
| तेषामाविरभूद्राजन् | 6 | 1 | c | त्रैलोक्यादहनाद्विषात् | 7 | 21 | d |
| तेषामेवावमानेन | 15 | 31 | c | त्रैलोक्याश्रिय मूर्जिताम् | 14 | 7 | b |
| तेषां पदाघात रथाङ्गचूर्णितात् | 10 | 38 | a | त्रैलोक्यं भूर्भुवादिकम् | 24 | 32 | d |
| तेषां प्राणात्यये चाऽहम् | 4 | 25 | c | त्रैविष्टपेयादिषुनान्वविन्दत | 8 | 19 | d |
| तेषां विरोचन सुत: | 13 | 12 | c | त्वच्छासनाति गान्दैत्यान् | 22 | 34 | c |
| ते सर्वे वामनं हन्तुम् | 21 | 14 | a | त्वज्ञाऽनेन महाभागे | 16 | 59 | a |
| तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वा- | 9 | 29 | c | त्वत्तोनृणां किमु सपत्नजयादिराशी: | 17 | 10 | d |
| तेस्तै स्स्वेच्छाधृतै रूपै: | 5 | 46 | a | त्वमर्कदृक् सर्वदृशां समीक्षण: | 24 | 50 | c |
| तै: कल्पितस्वस्त्ययनोऽथविप्रान् | 15 | 7 | b | त्वमव्ययं ज्ञान ममोघ मञ्जसा | 24 | 51 | c |
| तोत्राहत इव द्विप: | 11 | 11 | d | त्वमात्मा जगदीश्वर: | 7 | 24 | d |
| तोये स्सर्हणै स्स्रग्भि: | 21 | 6 | a | त्वमात्मा हेतु रीश्वर: | 12 | 4 | d |
| तोषये हत्विज श्चैव | 10 | 53 | c | त्वमादिरन्तो जगतोऽस्य मध्यम् | 6 | 10 | c |
| त्यक्तक्रियस्त्वदवरोपित कर्तृवादा: | 22 | 20 | d | त्वमादि रन्तो भुवनस्यमध्यम् | 17 | 27 | a |
| त्याग: क्वचित्तस्य न मुक्तिकारणम् | 8 | 21 | b | त्वमेक स्सर्व जगतां | 7 | 22 | a |
| त्रयीमयात्मन् हृदयं स धर्म: | 7 | 28 | d | त्वयार्चित श्चाऽऽहमपत्यगुप्तये | 17 | 18 | a |
| त्रयीमयो ब्रह्मण एष धिष्ण्यम् | 5 | 36 | b | त्वया सङ्कीर्त्यमानेन | 5 | 13 | a |

| | अध्याय: | श्लोक: | पाद: | | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|---|---|---|---|
| नदन्त उदधिं निन्युः | 6 | 33 | c | नमुचिस्तद्वधं दृष्ट्वा | 11 | 29 | a |
| नदीश्च नाडीषु शिला नखेषु | 20 | 29 | a | नमुचिः पञ्चदशभिः | 11 | 23 | a |
| न धर्मस्य न लोकस्य | 16 | 4 | c | न मेने तदु हाऽद्भुतम् | 12 | 36 | d |
| न नः कालोऽयमर्थकृत् | 21 | 19 | d | नमो गिरां विदूराय | 3 | 10 | c |
| ननाम भुवि कायेन | 17 | 5 | c | नमो ज्ञानघनाय च | 3 | 12 | d |
| ननाम मूर्ध्ना पुलकाश्रुविक्लबः | 22 | 15 | d | नमो द्विशीर्ष्णे त्रिपदे | 16 | 31 | a |
| ननाम मूर्ध्नाश्रु विलोललोचनः | 22 | 14 | c | नमो नमस्तुभ्यमसह्यवेग | 3 | 28 | a |
| ननाम रूपे गुणदोष एव वा | 3 | 8 | b | नमो नमस्तेऽखिलकारणाय | 3 | 15 | a |
| नन्दस्सुनन्दोऽथ जयः | 21 | 16 | a | नमोऽपवर्गाय परायणाय | 3 | 15 | d |
| न परं ते महेश्वर! | 7 | 35 | b | नमो ब्रह्मण्यदेवाय | 17 | 25 | c |
| न पाशबन्धाद्व्यसनाद्गुरत्ययात् | 22 | 3 | b | (ओं) नमो भगवते तस्मै | 3 | 2 | a |
| न पुमान्मामनुव्रज्य | 19 | 20 | a | नमो मरकतश्याम- | 16 | 35 | a |
| नभश्शरीरेण दिशश्च बाहुभिः | 20 | 33 | d | नमोऽव्यक्ताय सूक्ष्माय | 16 | 30 | a |
| न भेतव्यं कालकूटात् | 6 | 25 | a | नमोऽस्तु तस्मा उपशान्त शक्तये | 5 | 44 | a |
| नम आत्मप्रदीपाय | 3 | 10 | a | नमो हिरण्यगर्भाय | 16 | 33 | a |
| नम आश्चर्य कर्मणे | 3 | 9 | d | न यत्प्रसादायुतभागलेशम् | 24 | 49 | a |
| न म एतदलं राजन्! | 24 | 20 | a | न यत्र कालो विशते न वेदः | 12 | 44 | d |
| नमश्शक्तिधराय च | 16 | 32 | b | नयन्त्याभिः प्रचोदिताः | 14 | 3 | d |
| नमश्शान्ताय घोराय | 3 | 12 | a | न यशोऽधिगतं भुवि | 20 | 8 | d |
| नमश्शिवाय रुद्राय | 16 | 32 | a | न यस्य कश्चातितितर्तिमायाम् | 5 | 30 | a |
| नमस्कृत्य पितामहः | 6 | 27 | b | न यस्य देवा ऋषयः परं विदुः | 3 | 6 | a |
| नमस्तुभ्यमनन्ताय | 5 | 50 | a | न यस्य वध्यो न च रक्षणीयः | 5 | 22 | a |
| नमस्तुभ्यं भगवते! | 16 | 29 | a | न यस्याद्यन्तमध्यानि | 1 | 12 | a |
| नमस्ते आदिदेवाय | 16 | 34 | a | नवमो दक्षसावर्णिः | 13 | 18 | a |
| नमस्ते पीतवाससे | 16 | 35 | d | न वयं त्वाऽमरैर्दैत्यैः | 9 | 4 | a |
| नमस्ते पुरुषश्रेष्ठ! | 24 | 28 | a | न वयं मन्यमानानाम् | 11 | 9 | a |
| नमस्ते पृश्निगर्भाय | 17 | 26 | a | नवयौवननिर्वृत्त | 8 | 43 | a |
| नमस्ते योगहेतवे | 16 | 33 | d | नववर्षसमेतेन | 19 | 22 | c |
| नमः कैवल्यनाथाय | 3 | 11 | c | नवसौगन्धिकस्रजाम् | 15 | 18 | b |
| नमामहे देववरं वरेण्यम् | 5 | 26 | d | न वा अयं ब्रह्मबन्धुः | 21 | 10 | a |
| नमामि भूतेषु समं चरन्तम् | 5 | 30 | d | न विक्रमस्तत्र सुखं ददाति | 17 | 16 | d |
| नमामि मे ज्ञातय आतुरं गजाः | 2 | 32 | a | न विद्यते यस्य च जन्म कर्म वा | 3 | 8 | a |
| न मां स्रष्टुमर्हसि | 24 | 24 | d | न वै तृतीयाय तदीयमण्वपि | 20 | 34 | b |
| नमुचिश्च बलः पाकः | 11 | 19 | c | नरकेण शनैश्चरः | 10 | 33 | d |
| नमुचिश्शम्बरो बाणः | 10 | 19 | c | नराय हरये नमः | 16 | 34 | d |

